॥ श्री शखेश्वरपार्श्वनाथाय नमः ॥

।। आत्मकमललब्धिभवनतिलकसूरीश्वरेभ्यो नम ।।

पूज्य महामहोपाध्याय श्रीमद् यशोविजयजी महाराज कृत

# 卐 अध्यात्मसार 卐

:: टीकाकार ::

पूज्य स्व. आचार्य श्रीमद्विजय लब्धिसूरि म के पट्ट प्रभावक पूज्य स्व.
धर्मदिवाकर आचार्य श्रीमद्विजय भुवनतिलकसूरीश्वरजी म॰ के
पट्टालंकार पूज्य कर्नाटक केशरी आचार्य श्रीमद्विजय

* भद्रंकरसूरीश्वरजी महाराज *

प्रकाशक :-

भुवन-भद्रंकर साहित्य प्रचार केन्द्र
C/o V. V VORA
No 34, Krisnappa Naieken Tank St
MADRAS—600 079

To,

लब्धि-भुवन जैन साहित्य सदन
C/o नटवरलाल चुनिलाल शाह
पो०-छाणी, जि०-BARODA
(गुजरात) 391740

मुल्य—२० रुपये
वीर-सं०    २५११
विक्रम-सं०   २०४१
लब्धि सं    २४

-: मुद्रक :-

ज्ञानोदय प्रिन्टींग प्रेस,
पिण्डवाडा

##  श्रुतभक्ति द्वारा सुकृत के सहयोगी 

३०००—श्री आदिनाथ जैन मन्दिर, चीकपेट बेंगलोर
१५००—श्री जैन श्वे. मूर्ति० सघ करांड
१५००—श्री जैन श्राविका सघ ”
१५००—श्री जैन श्वे. मूर्ति. सघ इस्लामपुर
२५००—श्री आत्मानन्द जैन सेवा समिति
लक्ष्मीपुरी कोल्हापुर
१५००—श्री जैन श्वे. मूर्ति. सघ शाहपुरी ”
१५००—श्री जैन श्वे. मूर्ति सघ गुजरी ”
१०००—स्व. पू. म. विजय भुवनतिलक सू. म के सदुपदेश से तत्त्वन्यायविभाकर के ग्रथ प्रकाशन मे से, श्री जैन सघ, कोट्टुर

**पू पं श्री अशोकविजयजी म एवं पं श्री अभयविजयजी म के सदुपदेश से**

११००—श्री जैन श्वेताम्बर सघ वेलूर
१५००—श्री जैन श्वे मूर्ति. सघ वगारपेठ
५००—श्री जैन श्वे, मूर्ति सघ बल्लारि

**पू पं म. पद्मविजयजी** म के सदुपदेश से

१०००—श्री जैन सघ, कडी

५००—स्व० पू. रसिकवि. म. एवं स्व. पू गुणाकर वि. म. की पुण्य स्मृति निमित्ते प्र. साध्वी सुव्रताश्री एवं साध्वी उमगश्री की प्रेरणा से, गुरु भक्ति प्रिय बहनो, ईडर

५००—पू० साध्वी अजनाश्रीजी म० की १५ वी पुण्यतिथि निमित्ते साध्वी० सुव्रता श्री प्रेरणा से भाविको के तरफ से,

५००—श्री मनमोहन पार्श्वनाथ जैन मदिर ट्रस्ट गुजरी इचलकरंजी

१०१—श्री सभवजिन महिला मण्डल, बोटा
१५१—श्री वसुमतिबहन व्रजलाल उढाई साध्वी कुवलयमाला श्री के पांचसौ आयम्बिल निमित्ते

# प्रकाशकीय

आपके समक्ष 'अध्यात्मसार' ग्रंथरत्न प्रकाशित करते हुए हमारा तनमन मे आनन्द की लहर मच गई।

अध्यात्मसार की एक हि टीका थी। वे भी अलभ्य और गहन थी। इस लिये पू० कर्नाटक केसरी आचार्य देव श्रीमद्विजय भद्रंकरसूरीश्वरजी महाराजने अपने स्व० सद्गुरुभगवत आचार्य भगवान श्रीमद्विजय भुवनतिलकसूरीश्वरजी महाराज साहब को अन्त समय में वाक्दान रूप में दो नई टीका बनाने को कहा था। उस पुण्य स्मृति मे वह एक भुवनतिलकाख्य नामक अध्यात्मसार की टीका आज प्रस्तुत कर रहे है। और दुसरी आनद की यह बात है की भुवनतिलकाख्य नामक अध्यात्मउपनिषत ग्रंथ के० उपर भी नवीन टीका तैयार हुई है वह भी थोडे ही समय मे प्रकाशित होगी.

इस महाग्रंथरत्न प्रकाशित करने मे पू० उपाध्याय पुण्यविजयजी म., पंन्यास वीरसेन विजयजी म. एव मुनिवर्य विक्रमसेन विजयजी म० का सहयोग सराहनीय रहा।

अनेक संघो एवं महानुभावो के आर्थिक सहकार ग्रन्थरत्न के प्रकाशन मे बहुमूल्य रखता है। अत उन सबकी श्रुतभक्ति की हम बार २ अनुमोदना कर धन्यवाद देते है। ज्ञानोदय प्रिन्टींग प्रेस के मेनेजर कर्मठ कार्यकर श्री शंकरदासजी ने भी शीघ्र प्रुफ आदि भेजकर हमे प्रोत्साहित बनाया। इसलिये यहां पर उनको भी कैसे भूले ?

अध्यात्मरसीकवर्ग इस महाकाय ग्रंथरत्न का वाचन-परिशीलन द्वारा अच्छा लाभ उठावे ऐसी शुभाशा रखते है। जिससे सूत्रकार, टीकाकार आदि का श्रम कृतार्थ बनें।

:: प्रकाशक ::

# * प्रस्तावना *

— ऐं —

नमः स्वतन्त्रचिच्छक्ति-मुद्रितस्वविभूतये ।
अव्यक्तव्यक्तरूपाय, कस्मैचिन्मंत्रमूर्तये ॥

ज्ञानविज्ञानयोगेन तपसा च आध्यात्मिकता, आनन्दप्रदा अनुभूतिभूता चित्तरंजना हि दृश्यते । आध्यात्मिक-प्रकर्षेण तपःपूतः तपस्वी त्यागी मनीषी किमपि वक्ति तद् वरेण्यतां-वरिष्ठतां विशिष्टतां विबुधविनोदतां समलंकरोति ।

श्रमणसंस्कृतिषु श्रीयशोविजय प्रमुखवाचकाः गीतार्थज्ञानशौर्येण क्रमेण न्यायमार्गेषु प्रमेयपुंज-पावनाः बभूवुः । स्याद्वादसिद्धान्तसम्पादने तेषां प्रतिभा सदैव स्वयम्प्रभा सहजानन्दोज्ज्वला ज्योतिष्मती जाता । अन्योन्य दर्शनेषु पाटवं प्रतिपाद्य स्वोपज्ञग्रन्थेषु योगलतया तद्दिव्यरूपं हृदयाब्जकोश-धनं शाश्वतिकं चक्रुस्ते ।

श्री-वाचकवल्लभाः यशोविजयतल्लजाः आध्यात्मिकतां साहित्यमयीं विधाय ज्ञानरसपेशलेन 'अध्यात्मसारः' इति नाम्ना नूतनं ग्रन्थं निजानुभवैकमानं स्वात्मभास्वररूपं श्रुतसारशुद्धं चरणकरणानु-योग-ग्रथितं सम्यक्त्वसारस्वतसत्यं सम्पादयाञ्चक्रिरे ।

'अस्मिन्नध्यातममारे' निर्द्राम्भिकर्ता लक्ष्यीकृत्य दम्भत्यागदुष्करत्वे प्रागल्भ्यं पुरस्कृतम्–

**"सुत्यजं रसलाम्पटयं, सुत्यजं देहभूषनम् ।**
**सुत्यजाः कामभोगाद्या, दुस्त्यजं दम्भसेवनम् ॥"**

आध्यात्मिकानन्दधामनि चिदेकरसेऽद्वितीये निमग्नानाम् निर्ग्रन्थानाम् जीवनं वन्दारुजनमान्यं लोकपूज्यं भवति । तेषां मूलोत्तरगुणपालने कृतार्थता कृतज्ञता कोविदता स्पष्टीकृता ।

**आत्मार्थिना ततस्त्याज्यो, दम्भोऽनर्थ निबन्धनम् ।**
**शुद्धिः स्यादजुभूतस्ये-त्यागमे प्रतिपादितम् ॥१९॥**

यथा भगवता महावीरेण 'उत्तराध्ययने' निगदितं– 'धम्मो सुद्धस्स चिट्ठई' तथैव स्वीकृतम् वाचकवरैः ।

संसारोऽयं न सुखमयः धूमौघमयो, वह्निमयः, कूटघटनानाम् कारागारः, प्रेतवन सदृशोभाति । क्षणे क्षणे ग्लानि र्जायते, मानहानि र्भवति विषवृक्षतुल्योऽयं मनुजलोकः, नात्र माधुर्यं न च दाक्षिण्यम् ।

वैराग्ये या रतिः, सा नाम आध्यात्मिकता, रम्या, रूचिप्रदा, हृदयंगमा, योगिजनप्रिया, बोधप्रदीपा, प्रेक्षणीया, माननीयचरिता, श्रुतसफलकामा विद्यते । तां स्वीकृत्य साधवः शुष्कतर्कादिकं त्यजन्ति, श्रद्धां सेवन्ते सौमनस्यम् प्रसारयन्ति गर्वोष्माणं निन्दन्ति प्रशमाऽमृतपावनाः श्रमणाः व्यावहारिक-नैश्चयिकचारित्रयोः मार्गे तात्त्विकं प्रज्ञानं गणयन्ति—

'बहिर्निवृतिमात्रं स्याच्चारित्रं व्यवहारिकम् ।
अन्तः प्रवृतिसारं तु, सम्यक् प्रज्ञानमेव हि ॥

जन्मविषये वाचकविबुधवरेण्यानां श्रीयशोविजयतल्लजानाम् कथनं कमनीयं वर्तते—

"धृतो योगोन ममता, हता न समताऽदृता ।
न च जिज्ञासितं तत्त्वं, गतं जन्म निरर्थकम् ॥"

अध्यात्मवैरिणी ममता यदि न नाशिता समता च जीवनसंकल्पे सम्यक्तया न आदृता, आध्यात्मिकतायाः पीयूषमधुरं तत्त्वं न जिज्ञासितम् तर्हि मानुषं जन्मं निरर्थकं निष्प्रयोजनम् ।

अध्यात्मप्रकर्षेण समता शनैः शनैः साध्यते, सा समता ज्ञानविज्ञानयो र्दिव्याञ्जनशलाका मोक्षस्य मार्गदर्शिका समाधे र्गाम्भीर्यमयी मुद्रा । तां समतामासादयितुं चित्तस्य संशोधनम् स्वाभाविकं । आत्मेश्वराणां स्थैर्यं निर्विकल्पस्य मनसः पारिणामिकमौदार्यम् विद्यते । अतः श्रीमहोपाध्यायेन शास्त्रागमविज्ञेन अध्यात्मसारे उक्तं—

"गलितदुष्ट विकल्पपरम्परं धृतविशुद्धिमनो भवतीदृशाम् ।
धृतिमुपेत्य ततश्च महामतिः समधिगच्छति शुभ्रयशःश्रियम्"

महामतिः प्रतिभापुनित विकल्पो धृतिमुपेत्य शुभ्रयशः श्रियं लभते । इत्थं 'अध्यात्मसारे' श्री

वाचकवरेण प्रचुरं पाण्डित्यं निगमागमनिष्कर्षं कर्मणः सौष्ठवं, सिद्धान्तस्य रहस्यं, आर्जवेन शास्त्रीयमर्यादया सर्वं समीचीनं-सुन्दरं-शिवमयं-प्रतिपादितम् ।

अत एव सदागमनिष्णातनैष्ठिकं निर्ग्रन्थनयनिपुण श्रीवाचक पुंगवं पुनः पुनः स्मृतिपटले स्थापयित्वा किमपि वच्मि—

**यद्ब्रह्मवादिभिरुपासितवन्द्यपादे विद्या तपो व्रतनिधौ तपसां वरिष्ठे ।**
**दैवात्कृतस्त्वयि मया विनयोपचारस्तत्र प्रसीद भगवन्नयमंजलिस्ते ॥**

"अध्यात्मसारस्य" सुबोधमयी-टीका आचार्य श्री भद्रंकरसूरिणा मनोज्ञमूर्तिना शास्त्रकलाकोविदेन सरसतरा कृता । महानुभावानां श्रीसूरिशेखराणां वात्सल्येन मया यत्किमपि लिखितं तत्सर्वं विबुधजनभूषणानां कृते पटीयसी चपलता विद्यते । तदपि साहित्यस्य गौरवमनुस्मृत्य विरमामि ।

**दाने शौर्ये कवित्वे वा, पाण्डित्ये साधुतार्जने ।**
**सुयशः प्रथितं येषां, जन्मवन्तस्त एव कौ ॥**

वि० सं० २०४०
कार्तिकी राका भास्कर
दि० २०-१०-८३

– इति निवेदयति –

**विदुषामनुचरः पं. गोविन्दरामो व्यासः**
**मु –हरजी जि.–जावालिपुर (राज)**

# * प्रास्ताविकम् *

प्रत्येक-दर्शनादि परम्पराया रूपे द्व दृश्येते यथा दर्शने धर्मौ विचाराचारौ सिद्धान्तव्यवहारौ परन्तु भारतीयार्य-सस्कृतिमध्ये उपर्युक्तद्वैतस्या पूर्वः समन्वय समीक्ष्यते.

वेदिक परम्पराया पूर्वमीमासा चोत्तरमीमासा, पुर्वोक्ततत्त्वमेव प्रकाशयत, तथा च पूर्वमीमामा कर्मार्थादाचार, उत्तरमीमासा तु ज्ञानयोग समर्पयतश्च समर्थयत ।

पूर्वमीमासा, कर्मकाण्डसज्ञया प्रसिद्धयति, उत्तरमीमासा, ज्ञानकाण्ड सज्ञया प्रसिद्धयति ।

साख्ययोग सम्बन्धेऽप्येवमेव वस्तुतत्त्वम् । साख्यो ज्ञानपक्ष योगस्त्वाचारपक्ष विदधातीति.

साख्य पुरुपप्रकृतिद्वयस्य भेद-विज्ञाने वलवान् वर्त्तते, योगस्तु चित्तस्य शुद्धि च समाधि प्रति, अधिकाधिक वल प्रयुङ्क्ते ।

बौद्धपरम्पराऽपि पक्षद्वये विभक्ताऽस्ति हीनयान-महायान भेदात, हीनयानपक्षो जीवनाचारपक्षे भार मुञ्चति, महायान पक्षे जीवनविचारपक्षे भारमधिक मुञ्चति, परन्तु प्रत्येकपरम्परा केनचिद्रूपेण विचार 'चाचार प्रतिपद्यते नियतम् ।

जैनीयपरम्परायास्तु मूलभूतौ विचाराचारौज्ञानक्रिये, योजनाविकासौ च परस्पराभावे जीवनपूरकौ न भवत, अनेकान्ताधीन विचारस्या हिमाधीनाचारस्य समन्वित मार्ग, जीवन-विकास याचते, आध्यात्मिक मार्गयति ।

ज्ञानक्रियाभ्या मोक्ष इति यत सारमध्यात्ममार्गस्य तदेवाध्यात्मसारमथवा जीवनस्य यत्साफल्यरूप सार तदेवाध्यात्मसारम् ।

एतादृशस्य महतोऽध्यात्मसार नामक ग्रन्थस्य निर्माता, न्यायाचार्य कलिकालकेवलि समान पू महोपाध्याय श्रीमद् यशोविजयजी गणिवरो विजयतेतराम् ।

अध्यात्मरूप परमपावनी गङ्गा यत्र प्रवहमानाऽस्ति एतादृशापूर्व ग्रन्थरत्नस्योपरि पू मस्कृतविशारद, पञ्चप्रस्थानाराधक कर्णाटककेसरि आचार्य श्रीमद्विजय भद्रकरसूरीश्वरजी महाराजेनाऽतिपरिश्रम विधाय गीर्वाणगिराया श्लोके श्लोके चारुविवेचन प्रस्तुत कृत विद्यते, चलन्तु चलन्तु भो भो महाभागा ! एतादृश महाग्रन्थरत्नस्येपादप्यास्वादन कुर्मो वयमिति

( पं. विरसेन वि. गणी. )

# * विशिष्टविषयानुक्रमः *

(रचयिता.–पू. आ. श्री भद्रंकर सू. म.)

**प्रथमः प्रबन्धः-प्रथमाधिकारे**=जैनजगति पञ्चतीर्थीरूपेण प्रसिद्धान नाभेयाचिरेयशैवेयवामेय-त्रैशलेयसंज्ञकान् तीर्थंकरान् प्रथमं प्रणम्यान्यजिनान नमस्कृत्य गुरूनपि वन्दित्वाऽध्यात्मसार–प्रक्रियाप्रकट-करणविषयकोत्साहज्ञानहर्मस्मि शास्त्रतः परितश्चयनान्वितां, गणधराचार्यादि-धीमत-सम्यग् सम्प्रदायरूप-गुरुक्रमपरिचितां स्वसंवेदनानुभवरूपयोगतः परिचितां अपूर्वां प्रक्रियां कथयितुं प्रतिजानीते ग्रन्थकारः अर्थात् येनाध्यात्मसारप्रक्रियां पठतां वाचकानां शास्त्रपरिचयः धीमत्सम्यक्सम्प्रदाय-परिचयो, ऽनुभव-योगपरिचयः प्राप्यते इत्याशयः

- एषा प्रक्रिया पद्यात्मिका योगिप्रीतिकारिकैव.
- अध्यात्मशास्त्रास्वादसुख-सागराग्रतः, दिव्यादि-कामसुखं बिन्दुतुल्यं अध्यात्मशास्त्रप्रयोज्या-गणित-सुखशाली, चक्रेश-शक्रेशादिकं न गणयति.
- अध्यात्मशास्त्रशिक्षाशून्यो न पण्डितोऽपितु मूढ एव.
- मारल्य-सौहार्द-सम्यक्त्वादिजनकमध्यात्मशास्त्रमेव.

- आत्मशास्त्र-सुराज्ये-स्वराज्ये वा सर्वोपद्रवाभावः
- यदि हृदि, अध्यात्मशास्त्रार्थतत्त्वं निष्ठितं तदा रागादिक्लेशाभावः.
- आत्मशास्त्रार्थज्ञानं विना निर्दयकामपीडितः पण्डितोऽपि भवेत्.
- मनो-वर्धमान तृष्णाऽध्यात्मशास्त्र-दात्रेण, परमर्षि-छेद्यैव.
- ध्वान्ते तेजोवत्कलावध्यात्मशास्त्रं सुदुर्लभं धन्यैः प्राप्यत एव.
- अन्यशास्त्रवेत्ता क्लेशमनुभवति, अध्यात्मशास्त्री रसमनुभवत्येव.
- अध्यात्मशास्त्रज्ञास्तु निर्विकारनयनाः सन्तो वदन्ति.
- अध्यात्मशास्त्रहेमाचलमथितागमसागराद् विबुधा गुणरत्नानि लभन्ते एव.
- कामे भोगपर्यन्तो रसः, सद्भक्ष्ये भोजनान्तो रसोऽध्यात्मशास्त्रसेवायामनन्तो रसः
- अध्यात्मग्रन्थभेषजाद् विकारिणी दृष्टि र्निर्मलीभवत्येव.
- अध्यात्मवर्जितशास्त्रं पाण्डित्यदृप्तानां संसारवृद्धय एव.
- अन्तिमप्रेरणा=अध्यात्मशास्त्रमेतदध्ययन-भावनाविषयीकर्त्तव्यं पुनः पुनः, तदर्थश्चानुष्ठेयः, योग्यस्य देयःकस्यचिदिति ॥

**द्वितीयाधिकारे**=अध्यात्मस्वरूपनिर्णयः, सर्वयोगेष्वध्यात्मस्य व्यापकता । चतुर्दशगुणस्थानेषु क्रमशुद्धा क्रियाऽध्यात्ममयी । अध्यात्मवैरिणीक्रियावर्णनं, भवाभिनन्दि स्वरूपं, अध्यात्मगुणवर्धिनी क्रिया, क्रमशो दर्श्यमानाऽध्यात्मक्रियाया असङ्ख्य कर्मनिर्जराकारित्वं । शुद्धज्ञानक्रियांशद्वयात्मकमध्यात्मम् । कुत्र कुत्र गुणस्थाने निश्चयो वा व्यवहारो वा अध्यात्मं मन्यते । अपुनर्बन्धकस्य शमयुता क्रिया दर्शनभेदेन चित्रा । धर्मविघ्नक्षयाय सदाशयादशुद्धाऽपि क्रियाशुद्ध क्रियाहेतु र्भवति । मार्गप्रवेशाय मिथ्यादृशां द्रव्यसम्यक्त्वमारोप्य व्रतदानम्, दीक्षा योग्यताया वर्णनं, अशुद्धक्रियाया अनादरोऽभ्यासदशायां न कर्त्तव्यः । दीक्षादातृविशिष्टगुरौ दोषाऽसम्भवः । विषय (लक्ष्यं) शुद्धं—कर्म आत्म (स्वरूप) शुद्धं कर्म । अनुबन्ध शुद्धं कर्म, मोक्षाशयाद् द्रव्यक्रियाप्यादरणीयैव, अन्ते ज्ञानक्रियारूपमेवाध्यात्मम् ॥

**तृतीयोऽधिकारः**—दम्भांशोऽपि मल्लिनाथादीनां महतां स्त्रीत्वरूपानर्थ—निबन्धनं भवति, मुक्तिक्रियाऽध्यात्म सुखज्ञानव्रतप्रतिबन्धको दम्भः । दौर्भाग्यकाम-व्यसनजनको दम्भः । व्रतादिधारणं कृत्वा परमपदेच्छां दम्भो निष्फली-करोति । दम्भो यदि यस्य न गतस्तस्य व्रततपआदि निरर्थकं, भिक्षोः शुभाचारः सर्वो दम्भेन दूष्यत एव, कामभोगादिः सर्वः सुत्यजः परन्तु दुस्त्यजं दम्भसेवनम् दम्भो मूढान गौरवादिना प्रलोभ्य नरकादिदुर्गतौ पातयति । वेषभृतां व्रतं दम्भेनाऽव्रत वृद्धयेर्थं भवति । दम्भे दृढं विश्वस्ता जानाना अपि मूढाः प्रतिपदं स्खलन्ति । दम्भेन मोहेन दीक्षां लुम्पन्ति मूढाः । धर्मे दम्भ उपद्रवः । साधुगुणपालने

ऽसमर्थस्य साधोः सुश्रावकता युक्ता न तु दम्भेन जीवनम् । दम्भिनां साधूनां नामाऽपि पापाय । ये यतनां न कुर्वते यति–नस्ते कथं ? सर्वथा हीनोऽपि धृतदम्भः विश्वं तृणाय मन्यते । स्वोत्कर्षतश्च परनिन्दातो दम्भी योगबाधकं निकाचितं कर्म बध्नाति । शुद्धिः स्यादृजुभूतस्यातोऽनर्थहेतु दम्भस्त्याज्यः । जिनैः किञ्चिन्नानुमतं न निषिद्धमपि तु कार्येऽदम्भेन भाव्यमिति पारमेश्वरीत्वाज्ञा । दम्भांशोऽपि नोचितः सम्यग्दृगादीनां ॥

**चतुर्थाधिकारे**=भवस्वरूपचिन्तनस्यमाहात्म्यं । सागर-वह्नि-सूनास्थान-निशाचर-वन-कूटघटना कारागार-श्मशान-विषतरु–भिन्नभिन्नविषमतापूर्णस्थान-सुखस्थितिशून्यगृह ग्रीष्मर्तु-इत्युपमाभिः संसारस्य तोलनम् , स्वार्थरतजने संसारे भवसुखरसिकता का ? विश्वासघातको भवः । आश्चर्यरूपा मोहकृता भव-भवनवैषम्यघटना । अपूर्वाऽध्यात्मिककुटुम्बयोजना । भवेऽस्मिन् प्रेमविषये आदिमध्यावसानाऽवस्थासु दुःखान्येव मोहमहाराजस्य युद्धभूमिर्भवः । भवे मोहोन्माद निर्मित विरुद्ध विविधहसनादि प्रकारविकाराः । अपूर्णविद्यादिवद् क्रीडात्मकभवीयक्रीडा तात्त्विकदृशां हृदयं दहति । विकल्पविरतानां स्थितप्रज्ञानां साधूनां स्वप्नवद् भवोऽयं मिथ्यारूपः पूर्वं भवरसेन सुधाघटितो भव इति बुद्धिरासीदिदानीं ज्ञात-तत्त्वरहस्यानामस्माकं भवेऽरतिः स्वात्मनि रतिर्जाताऽस्ति । अविद्याजन्य-भवप्रपञ्चेभ्यः पूर्णविरामोऽस्तु । ततः स्वाधीनं कस्त्यजति सुखमिच्छन्यथ परम् । कुमति र्भवीये पराधीने क्षयिणि विषयतृष्णाप्रवाहगलिने भयस्थाने सुखे रमन्ते बुधा-

॥ १४ ॥

स्तद्विपरीते, आध्यात्मिक-सुखे रमन्ते । जगदभयदाने शमसुखनिदाने भवस्वरूपचिन्तने स्थिरो भवेत्यन्ते उपदेशः ॥

**पञ्चमाधिकारे, द्वितीयप्रबन्धः**=भवस्वरूपविज्ञानजन्य=निर्गुणताजन्य-तद् द्वेषरूप हेतुद्वयात भवेच्छाया उच्छेदरूपं वैराग्यं जायते । सर्वविषया-प्रसिद्धितः विषयसुखस्य सिद्धया वैराग्यप्राप्ति खंडनम् । अनन्तशः प्राप्त कामभोगेषु (अपेक्षया सर्वविषय प्राप्त्याऽपि) अप्राप्तत्व भ्रान्तितो मूढानां समीहा-शान्ति नं भवति । विषयेन्धनैः कामपावको वर्धमान शक्तिभूयएव वर्धते । विषयेषु प्रवृत्तानां वैराग्यं सुदुर्लभम् । विषयत्यागाऽपथ्य त्यागं विना वैराग्याऽऽरोग्य कुतः ? विषयविपाकृते चित्ते वैराग्यामृत कुतः ?, अमावास्यायां यदीन्दुः स्यात्तदा विषयलग्नचित्ते वैराग्य सङ्क्रमः स्यात् । भव-नैर्गुण्यदर्शनजन्यविषयाऽप्रवृत्तितः । भवहेतून प्रति दृढद्वेपात् निराबाध वैराग्यम् । वैराग्यक्रमः-भवनैर्गुण्यदर्शनम् , ततो भवद्वेषः, विषयेषु अप्रवृत्तिः । विशिष्टदशासम्पन्न सम्यग्दृष्टिप्रमातर्यायनासन्तिरूप वैराग्य सम्भवः । विच्छिन्न भवेच्छस्य विरक्तस्य कर्मभावजन्य प्रवृत्तिर्वर्तते । निकाचित-भोग्यावलि-शुभकर्मो दयतो विषयेषु बाह्यतः प्रवर्तते न तु मनसा रमते । माया जलसमान भोगान तत्त्वतः पश्यन निरासक्तो भुञ्जानोऽपि परं पदं प्रयाति । भोग तत्त्वस्य न भवोदधिलङ्घनम् । भोगकर्दममग्नस्यमनागपि मोक्ष मार्गे न गतिः । भोगयोगो बलीयसी धर्मशक्ति न हन्त्येव । कर्म बन्धे आत्यन्तिक विषयासक्ति हेतु नं विषयाः । कर्मणां बन्धेऽज्ञानमबन्धे ज्ञानं

हेतु र्न विषयमात्रम् । विषयसेवनाऽसेवनव्यतिक्रमे परमार्थः, उत्तमानां–तीर्थंकराणां गर्भादारभ्य वैराग्यमविच्छिन्नम् । सततं विषयेभ्यो विमुखीकृतेन्द्रियैः प्रशान्त चित्तविकाराणां यद् वैराग्यं भवतितच्चारुवैराग्यमेव वैराग्य प्राप्ते राजमार्गः । स्वयं तृप्तैः विषयनिवृत्तैरुदीरणानियंत्रण रहितैरिन्द्रियैर्यद् वैराग्यं तस्य मार्ग एकपदीमार्गः । ज्ञानगर्भवैराग्यं विना क्रियादम्भतः, आत्मानं धार्मिकाभापाः क्षिपन्ति नरकावटे । इन्द्रियवञ्चनप्रकारविधिः । अममंकल्पशून्यं वैराग्यमद्भुत वैराग्यं । योगिनां दारुयंत्रस्थ-पञ्चाली नृत्यतुल्याः प्रवृत्तयो नो बाधायै । इयं च योगमायेति गीयते परैः । सिद्धान्तेऽपवाद पदे योगमायावत् चर्चा औदासीन्यफलकपरिपक्व-ज्ञानेसति चतुर्थगुणस्थाने विशिष्टवैराग्यम् ॥

षष्ठेऽधिकारे=दुःखगर्भ-मोहगर्भ ज्ञानगर्भ-भेदात्त्रिविधं वैराग्यं । विषयाऽप्राप्तेदुःखगर्भित-वैराग्यं पुष्टज्ञानाभावजन्य शरीरमनसोः खेदे सति स्वेष्टपदार्थलाभे दुःखगर्भ वैराग्य वतां विनिपातो भवति । पूर्वमेव पातानन्तर स्वनिवासादि-योजनां कृत्वैव व्रतं गृह्णन्ति । दुःखगर्भिणा तर्कवैद्यक ज्योतिषादि-ग्रन्थाभ्यासः । दुःखगर्भिणां स्वल्पज्ञानं गर्वोष्णत्वं । वेषमात्रभृतो दुःखगर्भिणो गृहस्थान्नातिरशेते । उदरभरणमर्थो दुःखगर्भस्य । मोहगर्भवैराग्यं बालतपस्विनां । जमाल्यादि-आभिनिवेशिक-मिथ्यात्विनां मोहगर्भवैराग्यम् । संसारमोचकादि वत्तेषां शुभोऽपि परिणामो न तात्त्विकः, । जिनाज्ञारूचिस्थितेरभावात् । अमीषां प्रशमोऽपि दोष-पोषायैव । मोहगर्भित वैराग्यस्यैकोनविंशतिर्लक्षणानि । तत्त्वपरिच्छेदिनः स्याद्वा-

दिनः मोक्षमार्गस्पर्शिनः तत्त्वदर्शिनः ज्ञानगर्भवैराग्यम् । मीमांसा-मांसला यस्य स्वपरागमगोचरा बुद्धिस्तस्य ज्ञानगर्भमुन्नतं भवति । ज्ञानगर्भी चारित्रस्य सारं शुद्धसम्यक्त्वमेव प्राप्नोति । बहिर्निवृत्तिमात्रं व्यावहारिकं चारित्रं, अन्तर्मुखीभूयान्तः प्रवृत्ति सारं चारित्रं नैश्चयिकमिति तयोर्भेदः । शुद्ध सम्यक्त्वे सर्व-द्रव्य पर्यायालोचना । एकं द्रव्यं सर्वपर्यायमयं कथमित्यालोचना । पटत्वादिपरपर्याया अपि घटस्य स्वपर्यायीभवने युक्त-प्रक्रिया । अतादात्म्येऽपि परपर्यायाणां स्वत्वं धनस्यैव व्यज्यते । भिन्नाअपि पर्याया उपयोगद्वारा स्वकीया एव । ययोर्द्वयोरतादात्म्यं तयोर्द्वयोरपि व्यवहारोपयोगिनोः सतोः सम्बन्धः । स्वाऽन्यपर्याय-सम्बन्धेन प्रत्येकं वस्तु सर्वपर्यायमयमस्ति । सम्यग्दृष्टि महात्मा, सम्मुखस्थं पर्यायमेकमर्थं विदन्नपि भावादखिलं वेत्ति । श्रद्धाबलेन सम्यग्दृष्टिः वस्तुनिष्ठानन्तपर्यायान् मन्यतेऽतो जानाति । आगमार्थोपनयनतः प्राज्ञस्य ज्ञानं सर्वगम् । एकान्तेन जैनाभासस्य विरक्तस्याऽपि कुग्रहः पापकारी । ज्ञानगर्भ-वैराग्यविरोधी कुग्रहः । स्वागमेऽन्यागमार्थानां नावतारकौशल्यं न तदा ज्ञानगर्भता । समस्त नयेषु माध्यस्थ्यं न तदा न ज्ञानगर्भता । आज्ञया युक्तितो वा स्थाने पदार्थयोजना न न तदा ज्ञानगर्भता । मुख्यतया गीतार्थस्यैव ज्ञानगर्भ-वैराग्यं । ज्ञानगर्भित-वैराग्यस्य लक्षणावली । निजाध्यात्मप्रमादतः दुःखमोहयोर्दूरीकरणतः कदाचित् ज्ञानगर्भ वैराग्यजनने दुःखगर्भ मोहगर्भयोरुपयोगः स्यादिति ।

**सप्तमोऽधिकार:**=विषयगुणभेदात् वैराग्यं द्विविधं, प्रथममपरं द्वितीयं परं । दिव्यमानुष्य-विषयतो वैराग्यं । निशिष्टशब्दतो वैराग्यम् । विशिष्टरूपसौन्दर्य-वैराग्यं । सुगन्धविषयतो वैराग्यं । शील-सौरभं परं शाश्वतं सौरभं । विशिष्टरसतो वैराग्यं । रसलोभिनां मधुररसमाप्य रसनाजलं निष्पतेत् । विचार्य विपाकं विरतानां च दृशोर्जलं पतति । विशिष्टस्पर्शसुखवैराग्यं दिव्य विषय त्यागरूपं वैराग्यं । स्वर्गेऽपि देवानां दुःखं । देवानां हृदयं च्यवनचिन्ताऽपि दहति तत्र किं सुखम् ? स्वलब्धिरूप गुण-निःस्पृहतारूप परवैराग्यं । अपङ्गाऽनुष्ठानगतानां चेतसि शिवेऽपि न लुब्धता ।

**तृतीयः प्रबन्धः=अष्टमोऽधिकारे**=वैराग्य-स्थिरताकारक ममतात्यागोऽस्ति विषयत्यागी न त्यागी परन्तु ममतात्यागी त्याग्येव । ममता राक्षसी कष्ट साध्य-प्रगुणित गुणग्रामं यौगपद्येन भक्षयति । ममतापत्नी जीवरूपपति रमयति । सर्व-सम्बन्धकल्पको ममताया अतिशयः । ममता बीजतो भवप्र-पञ्चस्य कल्पना । स्वजनममत्व त्यागः । धन-ममत्व त्यागः । सर्वत्र जगत्यशरणता । पापेनार्जितै-र्धनैरेकोऽन्यान् पुष्णन्नरकदुःखानां मोढा । स्त्रीममत्वत्यागः । अपत्यममता त्यागः । ममत्वतः अमेध्येऽपि मेध्यत्व । ममत्वतोऽनियत सम्बन्धो नियतत्वेन भासते । मत्यद्रष्टुः स्वरूपम् । स्वपरभेद-ज्ञानादहंता ममतयोः पलायनम् । तत्त्व—जिज्ञासया ममताया अस्थितिः । तत्त्वजिज्ञासोतत्त्वप्राप्ति विना-स्न क्वचिद् रतिः । तत्त्वजिज्ञासा-प्रतिबन्धिकाऽतत्त्वबुद्धि । तत्त्वजिज्ञासा-ममतारहितस्य जन्म निरर्थकं । जिज्ञासा-विवेकाभ्यां ममतैव विनाश्या ।

**नवमोऽधिकारः**=ममतात्यागजन्या समता स्वतः प्रथमाना भवति। अर्थगतेष्टानिष्टत्व-व्यवहार-कल्पनानाशेन स्तैमित्यं समता। अर्थान् प्रति विकल्पजन्यत्वे रागादेः सत्ता, तदभावे रागादेरभावः। स्वकार्यं सिद्धिः स्वाधीना तदा बाह्यार्थगतसंकल्पसमुत्थानं हतम्। स्वभावे लब्धे श्रमक्षयात् रागद्वेषाभाव जन्य समता, अविच्छिन्ना। जगज्जीवेषु कर्मनिमितद्वैविध्य नो भाति तदा साम्य मनाहतम्। कूटस्थ-नित्यैकात्माऽभिन्नगुणादिध्यानतः साम्यमनुत्तरम्। समतापरिपाके विषयग्रह शून्यतया निन्दक-स्तावकयोस्तुल्य-मनोवृत्तः। नित्य-वैरिवैर-शामक समतां साधोः स्तुमः। एकैव समता सेव्या किमन्यैः। समतायाः सुखं स्पष्टं प्रत्यक्षं। समताऽमृत मज्जनेन कामविषक्रोधतापाविनयमलादि-दोषनाशः। एकैव समतासुधा शान्तिजनिका। एकसमताऽऽलम्बना मोक्षावाप्तिः। नरकद्वार प्रतिबन्ध-मोक्षमार्ग प्रकाश-गुणरत्नसङ्ग्रहफला समता। आत्मरूप-साक्षात्कार विरोधि दोषनाशिका समता। समता वाचामगोचर सुखप्रापिका। लोको योगिनां समता-सुखं न वेत्ति। समता कवचरूपेण रक्षिका। समता जन्मजन्मान्तरनिचित कर्मक्षय कारिका क्षणात्। समता रत्नत्रयफलजननद्वारा भावजैनता-जनिका। नयस्थानावतारि-ज्ञानस्य फलं समतैव। चारित्र पुरुषस्य प्राणाः समतैव। समतां विना कृतमकृतं कष्टं वा भवति। मुक्तेरूपाय एका समतैव। समतायाः स्वानुभवः सामर्थ्य नामा पारं प्रापयति। परात्परं निगूढं तत्त्वमात्मनः समतैव।

**दशमोऽधिकारः**=समताया अन्वयादनुष्ठानं परिशुद्धं भवति। विषगरानुष्ठानतद्धेत्वमृतभेदात् पञ्चविधं अनुष्ठानं । आहारादिकामनया कृतमनुष्ठानं विषानुष्ठानं । सच्चितहननादैहिकभोगाऽऽशया, कृतमनुष्ठानं विषानुष्ठानं । दिव्यभोगाभिलाषतः कृतमनुष्ठानं गरानुष्ठानं । विषगरनिषेधाय सर्वत्राऽनिदानत्वं जिनेन्द्रैः प्रतिपादितम् । अनध्यवसायेन ओघलोक संज्ञया कृतमननुष्ठानं । यदि शुद्धमपि भावरहितं द्रव्यावश्यकम् । गतानुगतिकत्वतः सूत्रक्रियाद्वयलोपः । गतानुगत्या, सूत्रवर्जितमोघतोलोकतः कृतमनुष्ठानमननुष्ठानं । कायक्लेशतः, अकामनिर्जराया अङ्गमननुष्ठानं । चरमावर्त्ते सत्यानुष्ठानरागेण कृतं तद्हेतुनामानुष्ठानम् । चरमावर्त्तकालो धर्मयौवनकालो यत्र सत्क्रियारागः । धर्मयुवकस्य धर्मरागेणाऽसत्क्रिया लज्जायै । शुद्धक्रियाकारिणो दृष्ट्वा बहुमान–प्रशंसाभ्यां शुद्धक्रियाचिकीर्षा **बीज**-तद्हेतु अनुष्ठानम् । शुद्धक्रिया-चिकीर्षाया निर्मलानुबन्धः **अङ्कुर** तद्हेतुअनुष्ठानम् । शुद्धक्रिया–सपादकोपायानां गवेषणा **स्कन्ध**-तद्हेतुअनुष्ठानम् । सद्गुरूयोगादिषूपायेषु विविधा प्रवृत्तिः **पत्रादि**-तद्हेतुअनुष्ठानम् । गुरुयोगादिरूपहेतुप्राप्तिरूपं **पुष्प**–तद्हेतुअनुष्ठानम् । सद्देशनादिना सम्यक्त्वादिभावधर्मप्राप्तिरूपं **फल**तद्हेतुअनुष्ठानम् । सहजशुद्धसम्यक्त्वादिभावधर्मगर्भितमनुष्ठानमृतानुष्ठानम् । जिनाज्ञापूर्वकं चित्तशुद्धि सहकृतात्यन्त–संवेग गर्भममृतानुष्ठानम् । सम्यक् सूत्रार्थविचारपूर्वकं कर्मणि प्रणिधानं कालाद्यङ्गाऽविपर्यासोऽमृतानुष्ठानम् । तद्धेतुअमृतनामकानुष्ठानद्वयं सत्, विषगरानुष्ठानत्रय-

ममत्। मद्वयेऽपि अमृतानुष्ठानं सर्वोत्तमं मोहो-अविषनाशनात्। आदरः, करणे प्रीतिः, विघ्नाभावः, सम्पदागमः, जिज्ञासा, तज्ज्ञसेवेति लक्षणं सदनुष्ठानस्य। सदनुष्ठानं इच्छादिभेदभिन्नं योगरूपं। इच्छा प्रवृत्तिस्थिरता सिद्धयो, योगसंज्ञिताः। क्षयोपशमभेदतः श्रद्धाप्रीतिधृतिधारणादियोगेन इच्छादियोगा, विविधभेद संपन्नाः इच्छायोगस्यानुकम्पा, कार्यम्। प्रवृतियोगस्य' निर्वेदः कार्यम्। स्थिरतायोगस्य संवेगः कार्यम्। सिद्धयोगस्य प्रशमः कार्यम्। यत्र श्रद्धादिभावाः सन्ति तत्राऽ-नुष्ठानेष्विच्छादियोगः सफलो भवति। इच्छादिलेश रहितानां कार्योत्सर्गादिसूत्राद्यनुष्ठानदाने महामृषावादः। इच्छादि योग-लेशरहितानां कार्योत्सर्गादि कारणे उन्मार्गोत्थापनम्। शुद्ध-चेतस्क-महात्मना त्रिधा सदनुष्ठानमादेयम्॥

**एकादशोऽधिकार**.=सदनुष्ठानचिकीर्षणां पूर्वं मनःशुद्धिः कार्या, रक्ते द्विष्टे परजने रत्यरतिविकारशुन्यं मनो निर्मलम्। इष्टा-ऽप्राप्तेष्टप्राप्तपदार्थे सति मनसा शोचति मनसा स्मयते। चारित्रयोग शमस्मादि विषये चपलमनःकपे विचित्रं चापल्यं। मनस्तुरगो गुण-नियंत्रितोऽपि न तिष्ठति। अहह कोऽपि मनः पवनो बली। यदि भ्रमत्यति मत्तमनोगजस्तदा क्व कुशलं। दुष्टमनो दहनो व्रततरूम् दहति। मनोनिग्र हाभावजन्य दुरन्त भवभ्रमणमेव। हि मनोऽनिग्रही कुविकल्पमात्रतो तन्दुलमत्स्यवन्नरकगामी। मनश्चंचलतरं स्वं वा जगद् वंचयते। मनः शुद्धिरेव शिवसुन्दर्यां अभेपजवशक्रिया। उदितमदज्वरविनाशो महौषधीभूता हृदयशुद्धिः। सकलकर्म कलंक विनाशिका मनःशुद्धि। मनःशुद्धेरूपायःशुभविकल्पमयव्रत-

सेवयाऽशुभविकल्प—निवृत्तिः । पूर्वोक्तदेशनिवृत्तिरपि मनसःप्रथमं स्फुटा गुणकरी । मनो यत्र शुभ-प्रतिमादौ लगति तदालम्बनं शुभं मतम् । तदनु काचन निश्चयकल्पना भवति सर्वनिवृत्ति-समाधये । ततो निर्विकल्पकं हृदयं प्रसरति । ततोऽसंगमन्तःकरणं भवति । ततो मनोऽनुभवत्यहो गलितमोहतमःपरमं महः। ततो निर्विकल्पशुद्ध मनसःशुभ्र यशः श्रीः ॥

॥ २२ ॥ द्वादशोऽधिकारः=वास्तवी मनः शुद्धिः सम्यक्त्वे सत्येव । सम्यक्त्व सहिता, दानादि क्रियाःशुद्धाः। नान्धो जयति वैरिणम् । मिथ्यादृष्टि र्न सिद्धयति । सर्व धर्म-कर्मणां सम्यक्त्वं सारः । जिनशासने तत्त्व श्रद्धानं सम्यक्त्वं, सूत्रे सर्वे जीवान हन्तव्या इति तत्त्वमिष्टम् । धर्म रुच्यात्मकं सम्यक्त्वं । ज्ञेयत्वाद्यर्थापेक्षया नवतत्त्व विषयक श्रद्धा सम्यक्त्वम् । जैनशासने शुद्धाऽहिंमापि तत्त्वमुच्यतेऽर्थात् सूत्रप्रामाण्य स्वीकारः सम्यक्त्वम् । अहिंसायां सर्वदर्शनानामेकवाक्यता, तच्छुद्धता ज्ञानं संभवादि विचारतः । अहिंसायां सर्वदर्शनिनामेकवाक्यता नवभि.श्लोकैःसाध्यते । शब्दभेदेऽपि अहिंसादि धर्मेषु ऐकवाक्यत्वात् सर्वदर्शनशास्त्रं धर्मशास्त्रं कथ्यते । कुत्रग्रन्थे शुद्धाऽहिमा संभव इति विचारणीयम् । शुद्धाहिंसानिश्चये प्रमाणलक्षणादेरुपयोगो न । प्रमाणानि प्रसिद्धानि व्यवहारश्च तत्कृतः प्रसिद्धः । एकान्तात्म नित्यत्ववादि सांख्यदर्शने हिंसादयः कथं घटन्ते ? । सांख्यमताऽभिमत विशिष्ट मनोयोगध्वंसरूप मरणस्य खंडनम् । बुद्धिगत-दुःखोत्पाद हिंसापदार्थस्य खण्डनम् । नाशाऽपरपर्यायं हिंमापदं एकान्त- नित्यात्मनि न घटतेऽनुभव- । २२ ॥

बाधाकत्वात् । आत्मन एकान्त नित्यत्वे शरीरेणापि सम्बन्धोऽसम्भवी विभुत्वे न संसाराभावः । अदृष्ट-
जन्य शरीर संबन्धादि जन्मोपपत्त्यादि कल्पना-खण्डनम् । आत्मनि क्रियां विना मिताणुग्रहण संयोगभे
दादि कल्पना कथं ? । कथञ्चिन्मूर्त्ततास्वीकारे वपुः संक्रमव्यापारयोगाबात्मनः । आत्मनो निष्क्रियत्वेन-
हननाद्यभावेन हिंसाद्यनुपपत्तिः । अनित्यैकान्तपक्षेऽपि हिंसादीनाम-ऽसंभवः । सन्तानविचित्रताया
जनको हिंसको न । अहिंसाया अभावेऽत्रशिष्टसत्यादीनि कुतः । जैनेन्द्रशासनेऽहिंसादि सर्वं तत्त्वतो
घटते । द्रव्यार्थत आत्मा नित्योऽस्ति पर्यायार्थे आत्मा-ऽनित्योऽस्ति, हिंसक हिंस्य-तत्तज्जन्यफलान्यनु-
भवत्मात्मेत्यादि सर्वं स्याद्वादे घटते । स्याद्वादे अन्वयव्यतिरेक विषयकोऽनुभवः साक्षी विद्यते
जैन- धर्मे त्रिधा हिंसा न कल्पिताऽपितु सहेतुका । हन्तुर्हिंसनीयहिंसायाः पापं कथं लगेत ? । हिंसका-
हिंसा पदार्थस्य सिद्धिः । श्री जैनशासन एव हिंसानिवृत्तिरूपाऽहिंसा कथं घटते ? । अपवर्गतरो बीजं
मुख्याऽहिंसा । जैनशासन एव शुद्धाऽहिंसासम्भवस्तथाऽहिंसाया अनुबन्धादिशुद्धिरप्यत्रैव वास्तवी ।
सम्यग्दृष्टे महात्मनो ज्ञानयोगेन हिंसा न हिंसानुबन्धिनी । यतनाभक्ति शालिनां जिनपूजादिकर्मणि
अहिंसाया अनुबन्धः । मिथ्यादृष्टेरज्ञानशक्ति योगेन, हिंसाऽहिंसे हिंसानुबन्धिन्यौ मतः । निह्नवादि
नाम हिंसाऽपि हिंसानुबन्धिनी । अप्रमत्तसाधूनां हिंसाप्यहिंसानु बन्धिनी । एकस्यामपि हिंसायामहिंसायां
सुमहदन्तरम् । हिंसाऽहिंसयोर्विविध-बन्धमपेक्ष्य भेदास्तथा विपाकमपेक्ष्य भेदाःपतन्ति । जिनपूजादिकर्मणि

हिंसाऽप्युत्तरकालीन विशिष्टगुणा संक्रमात्, त्यक्ताऽविध्यनुबन्धत्वादहिंसैवाऽतिभक्तितः । शतभेद भिन्न शुद्धाऽहिंसा यत्र तत्सर्वांश-परिशुद्धं जिनशासनं प्रमाणं । सम्यक्त्वस्याऽऽस्तिक्यं परमं चिह्नम् । शमादि-परिष्कृतमविच्छिन्नमास्तिक्यक्त्वं स्थिरसम्यक्त्वं ।

**चतुर्थ प्रबन्धः=त्रयोदशोऽधिकारः** मिथ्यात्वत्यागतः सम्यक्त्वं शुद्धं, मिथ्या त्वस्य षट् स्थानानि। मिथ्यात्व षट्स्थानैः शुद्धव्यवहारविलंघनम्,सद्रूपषट्-पदैः मिथ्यात्वध्वंसः, शुद्धव्यवहार संप्राप्तिः । नास्तित्वादि ग्रहे उपदेशोपदेशकाभावपूर्वकोपकाराभावः निश्चयनयाभिप्रायदर्शनपूर्वक व्यवहारनयाभि प्राय दर्शनम्। दानादिशुद्धव्यवहार लोपे नास्तित्वविशिष्टानां षण्णां पदानां मिथ्यात्वरूपत्वं । नास्त्येवात्मेति वादिचार्वाक मत प्रतिपादनम् । चार्वाक-मत खण्डनम् । अहता न शरीरस्य धर्मः । शरीरं नात्मद्रव्यं । इन्द्रियाणि नात्मा राजरङ्कादि । वैचित्र्यं न स्वाभाविकमपित्वात्मकृत-कर्मजन्यं । मद्याऽगेभ्यो मदव्यक्तिरपि मेलकं विनानो-आगमादात्मा गम्यते । अभ्रान्तानां प्रवृत्तयो, न विफलाः । संशयादेवात्मनः सिद्धिः । जीव निषेधका-जीवशब्दत आत्मत्व सिद्धिः । वस्तुःपदार्थः सर्वथा निषिध्यते न किन्तुतत्तत्संयोगादि निषिध्यते । शुद्ध जीवपदेन जीवसिद्धिः । बौद्धमतस्य प्रतिपादनम् । बौद्धमतस्य खण्डनम् । एकद्रव्यान्वयाऽभावान्न वासना संक्रमः । कुर्वद्रुप विशेषे न प्रवृत्तिर्नानुमा । एकता विषयकं । प्रत्यभिज्ञानं क्षणिकत्वं बाधत एव । एकान्ताऽनित्यवादे बहुन दोषान् प्रदर्श्य कथं चिन्नित्यात्मेति स्वीकारोपदेशः । बुद्धदर्शनमपि त्याज्यम् । सांख्य

मतस्य प्रतिपादनम् । साङ्ख्यमताऽभिमत पञ्चविंशतिस्तत्त्वानि । पुरुषस्य प्रकृतेश्च तत्त्वस्य सिद्धिः । बुद्धितत्त्वमान्यताया अनिवार्यावश्यकता । अहङ्कार-तत्त्वस्य तन्मात्रादि षोडशगणस्य सिद्धिः । बुद्धेर्व्यापारः कृतिकरणरूपोऽस्ति एतस्या बुद्धेस्त्रयोंऽशाः सन्ति । अनवच्छिन्नं चैतन्यं मोक्षः, कर्तृ बुद्धिगते सुखदुःखे पुरुषे उपचारतः । कर्त्ता भोक्ता च नो तस्मादात्मा नित्यो निरञ्जनः । साङ्ख्यमतस्य खण्डनम् । जडप्रकृतौ धर्मादिस्वीकारे घटादौ तादृग् धर्मान्वयः कथं न ? । कृति भोगौ बुद्धेश्चद् बन्धमोक्षौ नात्मनः । पुरुषे बन्धमोक्षयोरुपचरितत्वे मोक्षशास्त्रं वृथाऽखिलम् । तस्मात्कापिलानां मते रति र्नोचिता । नास्ति निर्वाणमिति याज्ञिकमत प्रतिपादनम् । जीवकर्मणोरनादित्वे नानन्तत्त्वेनात्मनो मोक्षो न । याज्ञिकमत खण्डनम् सन्तानाऽनादिता बीजांकुरवत् । अनादि सन्तते र्नाशः स्वर्णमलयोरिव । जीवकर्मणोः सम्बन्धो भव्येषु-अनादिसान्तोऽभव्येष्वनाद्यनन्तः । जीवत्वेसमानेऽपि भव्याभव्यभेदःद्रव्यत्व समानेऽपि जीवाऽजीवत्व-भेदो यथा । स्वाभाविकं भव्यत्वं तन्नाशो मोक्षे । भव्योच्छेदो न चैवंस्यादृगुर्वानन्त्यान्नभोंशवत् । यस्तु सिद्धयति सोऽवश्यं भव्य एवेति । प्रध्वंसवन्मोक्षस्य वर्त्तमानस्थिति र्जन्यत्वेऽप्यनन्ता । ज्ञानादेः कर्मनाशे नात्मनो जायतेऽधिकम् । कर्माणुसम्बन्धान्मुक्तस्य कथं मुक्तता ? । यस्य तारतम्यं तेन प्रकर्षेण भाव्यम् । षष्ठपदं-मोक्षोपायो नास्तीति माण्डलिकमतमण्डनम् । नियताऽवधौ समाप्ते, कस्मादेव मोक्ष इति मतस्य खण्डनम् । मोक्षो पायो रत्नत्रयीरूप एव सुनिर्णीतोऽस्ति । भवतत्कारणयोर्विरोधि मोक्षतत्कारण निश्चयः।

॥ २५ ॥

शिवसाधने दृढैव सम्यक्त्वादि क्रियोपयुज्यते। तथाभव्यतया कर्मलाघवं ततः सम्यग्दर्शनादिगुणाः समुदिता एव मोक्ष कार्य जनयन्त्येव। भव क्षयं प्रति ज्ञानदर्शनचारित्राणि उपायाः समुदिताः। मिथ्यात्वजनकानि आत्मा नास्तीत्यादि पट्पदानि त्याज्यानि। आत्माऽस्तीत्यादि पट् पदानि तत्प्रतिलोमतः सम्यक्त्वस्य पदानि साध्यान्येव. ॥ **चतुर्दशोऽधिकारः**= मिथ्यात्वशामककदाग्रह त्यागो विधेयः। कदाग्रहाऽग्नौ-तत्त्वनिश्चयलता-प्रशान्तपुष्पाणि हितोपदेश फलानि क्व ?। ज्ञानलवदुर्विदग्धाःकदाग्रहतः पंडितमानिनो वाणीरहस्य रहिता भवन्ति। कदाग्रहिभि र्मानिभि र्जडै र्वितण्डा पाण्डित्येन त्रिलोकी कदर्थ्यते। कृष्णपक्ष स्थायी कदाग्रहः। कदाग्रहाच्छन्नमतिः किं पापं न कुर्यात् ?। कदाग्रहमये चित्ते सद्भावविशुद्धबोधौ न तिष्ठतः। व्रतादि पिंण्डशुद्धीनां फलं नाऽभून्निह्नवानां तत्र कदाग्रहस्याऽपराधः। कदाग्रहिण उपदेशाऽनर्हाः। गुरूकृपया लभ्यमानमर्थं कदाग्रही न गृह्णाति। योऽसद्ग्रहात् पामर संगति कुर्वन्ति तेषां न रतिर्बुधेषु। कदाग्रही यत्र युक्तिस्तत्र मतिं न, यत्र च मति स्तत्र युक्ति नियुङ्क्ते। कदाग्रहिणो दीयमानं श्रुतं न प्रशस्यम्। कदाग्रहिमतेः श्रुतात्प्रदत्तादुभयोर्विनाशः। कदाग्रहिणे विशदागमार्थं दत्ते स खिद्यते। कदाग्रही महाविवेचकत्वाभिमानी भवति। कदाग्रहस्थानां विपरीत सृष्टि गुणानाम्। कदाग्रहिणां मित्रमनुपमदुःखितं भवति। कदाग्रहाद् गुणा विनाशं यान्ति। कदाग्रहिणांस्वार्थःप्रियः, मूढेषु मैत्री ॥

**पंचम प्रबन्धः**=पंचदशोऽधिकारः, कदाग्रहत्यागतो मिथ्यात्वत्यागस्ततः सम्यग्दर्शनं समक्त्ववतो-

ऽध्यात्मशुद्धिस्ततोयोगः । कर्मज्ञानभेदेन योगो द्विविधः । पुण्यलक्षणकर्मकारकःसदूरागात् कर्मयोगः । आवश्यकादिरागेण भागवतवाणीनात्मल्यतः स्वर्गकारकः कर्मयोगः ज्ञानयोगस्तु आत्मरतिलक्षणो मोक्षसाधकः । अत्र ज्ञानयोगे शुभक्रियाऽपि वैराग्याद् व्याक्षेपकारिका न । परेषां साक्षिपूर्वकं साधूनामप्रमत्तानां क्रियाऽपि शुभा न नियता । ध्यानालम्बिनि ज्ञानयोगिनि हर्षशोकयोर्नावकाशः । क्रिया शुभा ज्ञानिनोऽसंगान्नैव ध्यानघातिनी । फलभेदादाचारक्रियाऽप्यस्य विभिद्यते । ध्यानार्थो क्रिया सेयमात्मज्ञानाय कल्पते । स्थिरीभूतमनसः पुनश्चलत्वे स्थिर क्रियां कुर्यात् । नित्यं संयमयोगेषु व्यापृताऽत्मा भवेद् यतिः । निश्चयव्यवहारदशास्थानां क्रियाव्यवस्था । ज्ञानयोगिनः श्रद्धामेधादियोगतः शुद्धकर्मणोऽपि मुक्तिहेतुत्वमक्षतम् । कर्मयोगज्ञानयोगयोः सत्क्रिया शममर्यादा । योगारूढस्य लक्षणम् । कर्मज्ञानयोगयो गुणप्रधानभावेन दशाभेदः, चित्तशोधककर्मयोगाऽनन्तरं ज्ञानयोगस्यौचित्यं । पूर्वं कर्मयोगः पश्चाच्च ज्ञानयोग इति क्रमो जिनोक्तोऽस्ति । तत्क्रमस्य कारणम् । अज्ञानिनां तु यत्कर्म न ततश्चित्तशुद्धिः । स्वरूपतः सावद्यत्वात् यज्ञयागादि कर्मयोगो वाङमात्ररूपः । वेदविहितमपि स्वरूपतः सावद्यं कर्मचित्तशोधकं न भवति । सावद्यं कर्म नोपादेयं बुद्धि-विप्लवात् । कर्माऽप्याचरतो ज्ञातुर्मुक्तिभावोन हीयते । जैनमते कर्माकर्मविषयकभंगानां वैचित्र्यं । ज्ञानयोगी भोगैर्न लिप्यते जलजदलमिव जलेन । अनन्यपरमात् साम्यात् ज्ञानयोगीभवेन्मुनिः । विषयेषु समं रूपं विदन् वीतरागो ज्ञानी न लिप्यते । ज्ञानयोग्येवात्मवान् ज्ञानवान् वेदधर्मब्रह्ममयः । विषमतायाधर्मब्रह्ममूलमज्ञानयोगतो नश्यति । ज्ञान-

ज्ञानयोगिनो ज्योतिष्मन्तः । साधोरित्थंभूतस्य पर्यायक्रम-वृद्धितस्तेजोलेश्यावृद्धिः । विषमेऽपि समत्वद-र्शनी जीवन्मुक्तः । साम्यविषये भगवद्गीतोक्ताःश्लोकाः । कर्मयोगवत्यां दशायां वैषम्ये साम्यदर्शनं-दोषाय, ज्ञानयोगवत्यां दशायां तदेव रागद्वेषक्षयाय । रागद्वेषक्षय-प्रयुक्ताविषय-शून्यता-पूर्णोज्ञानयोगी । श्लोकाष्टकं यावज्ज्ञानयोगस्वरूपम् । आचारांगसूत्रे ज्ञानयोगस्य श्रेष्ठत्वम् । ज्ञानयोगस्य श्रेष्ठतरतायाः कारणम् । अभेदोपासना भागवती सर्वभेदोपासनाभ्यो गरीयसी । ज्ञानयोगिनो निरञ्जनाव्ययरूपे देवे तन्मयता-भक्तिः । विशेषाऽज्ञानतः कुग्रहविरहतः सर्वज्ञसेवी सामान्ययोगी । मुख्यसर्वज्ञैकताप्रतिपत्तिः । सर्वज्ञप्रतिपत्तिरूपांशात्तुल्यता सर्व योगिनाम् । मध्यस्थसर्वबुधैरिष्टा सेवा देवताऽतिशयस्य । सांख्यमती, कालातीतोऽपि विषयेऽस्मिन् सप्तश्लोकीं यावत् कथयति । संक्षिप्तरुचिजिज्ञासो विशेषानवलम्बनं परम्परया-प्रान्तेऽत्रोपयुज्यते । परमात्मतत्त्वजिज्ञासाऽपि सतां न्याय्या । भगवद्गीतोक्तेश्वरोपासकानां चतुर्विध-त्वम् । ज्ञानिभक्तस्य विशेषता । संशयाऽऽत्मा विनश्यति । ध्यानयोगिस्वरूपम् । कर्मयोगज्ञानयोगध्यान-योगादितःक्रमेण मुक्तियोग-प्राप्तिः ॥

**षोडशोऽधिकारः**=स्थिराध्यवसायो ध्यानम् । अस्थिरं चित्तं भावनाऽनुप्रेक्षा-चिन्ताभेदात् त्रिविधं । मुहूर्त्तान्तरेकार्थे मनसः स्थितिर्ध्यानम् । बहुविषयसंक्रमे दीर्घाप्यच्छिन्ना ध्यानभेदौ संततिः । आर्त्तरौद्र धर्म्यशुक्ल-भेदाच्चतुर्धा ध्यानम् प्रथमौ द्वौ भेदौ भवस्य कारणं । पश्चिमौ द्वौ मोक्षस्य कारणम् । आर्त्तस्य

चत्वारःप्रकाराः आर्त्तेऽशुभलेश्या । आर्त्तस्य लिंगानि । कार्यभूतलिंगानि । आर्त्तस्य विशेषहेतवः १ आर्त्त प्रमत्तान्तं तिर्यग्गतिप्रदम् । रौद्रं च चतुर्थां देशविरतिं यावत् । रौद्रेऽतिसंक्लिष्टाशुभलेश्या । रौद्रस्य कार्यभूतलिंगानि । अशुभध्यानं दुरन्तं । कृताभ्यासी शुभध्यानारोहयोग्यः । प्रशस्तध्यानाय चित्तस्य द्वादशभावनादिवस्तुभिः शिक्षणम् । ज्ञानादिभावनानां चतसृणां क्रमशः फलानि । भावनाभिः स्थिरचित्तो ध्यानयोग्यः । एषा वार्त्ता भगवद्गीतायामुक्ताऽस्ति । वैराग्याभ्यासौ भावनाभाविताऽत्मनि घटेते । धर्मध्यानस्य चित्तसमाधिप्रदावेव योग्यदेशकालौ जिता काप्यवस्था ध्यानोपघातिनी न । नियता योगसुस्थता । वाचनादि क्रिया-सद् धर्मविषयकानि धर्मध्यानालम्बनानि सूत्रादिवाचनाद्यालम्बनाश्रितः सद्ध्यानमारोहति । आलम्बनादरोत्पन्न-विघ्नविध्वंसद्वारा ध्यानाद्यारोहण-धर्मो नो । जिने मनोरोधादिको ध्यान-प्रतिपत्तिक्रमः शेषेषु यथा-योगं मनः समाधिः । धर्मध्यानिनां ध्यातव्यं चतुर्विधम् आज्ञाऽपायविपाकसंस्थानभेदात् । ध्यातृद्वारम् । स्थितप्रज्ञस्य लक्षणावली भगवद्गीतोक्ता । शुक्लध्यानस्य भिन्नभिन्नध्याता ध्यानस्य प्राणभूतभावना ध्यानोपरमे भाव्या । धर्मध्यानिनां लेश्यालिङ्गादिः । धर्मध्यानस्य फलं स्वर्ग प्राप्तिः । शुक्लध्यानस्य ध्यातव्यद्वारं, ध्यातृद्वारं । शुक्लस्य चत्वारः पादाः । शुक्लस्याद्य पादयोःफलं सुरलोकप्राप्तिरन्त्ययोस्तु महोदयः । शुक्लस्यानुप्रेक्षाः । शुक्लस्य द्वयोः लेश्या शुक्ला, तृतीये परमशुक्ला, चतुर्थ-पादो लेश्याऽतीतः । शुक्लस्य लिङ्गानि । शुक्लध्यानाभ्यासी कलावपि संपूर्णाऽध्यात्मविद् ॥

**सप्तदशोऽधिकारः**=स्वप्रकाशसुखबोधमयं तत् परिपक्वं ध्यानमेव भवनाशित्वेन भजध्वम्। ध्यानवानेव तृप्तो विषयरागं न प्राप्नोति। या निशा सर्वभूतानां तस्यां जागर्ति संयमी। सर्वकर्मफलानां सिद्धिं ध्यनित वए। सर्वथाऽऽत्मनिलीनो ध्यानी सर्वबाधाविरही। ध्यानमस्तु शिवशर्मगरिष्ठं। ध्यानिनां रूपमात्मप्रकाशरहस्यं भाति। ध्यानमित्रं चिरविरहिणीं शमरतिं प्रेयसीं योजयति। ध्यानधाम्नि लभते सुखमात्मा, ध्यानधाम्नि आत्माऽतिथिपूज.। आत्मपरमात्मनोरभेदकारको ध्यानसन्निधदूतः। मृत्युञ्जयाऽमृतं ध्यानेऽस्त्येव ध्यानकृतनिश्चलत्वेऽपूर्वमधुररसास्वादनम्। ध्यान एव रतिं कुर्यात्॥

**षष्ठपबन्धः अष्टादशोऽधिकारः**=आत्मज्ञानं मोक्षदम्। य आत्मानं वेत्ति तस्य ज्ञेयं भूयो नावशिष्यते। नवतत्त्वध्यानमात्मज्ञानायैव। आत्म-परभेदं तु कश्चन विरलो वेत्ति। भेदाभेदनयत आत्मज्ञानं हितावहम्। निश्चयनयतः—ज्ञानदिभ्य आत्माऽभिन्नः। ज्ञानदर्शनचारित्रलक्षणानां न भेद आत्मनः। व्यवहार आत्मलक्षणयोर्भेदं मन्यते। आत्मतद्गुणयो र्भेदो न तात्त्विकः। पद्धतिभेदेन निश्चयव्यवहाराभ्यामात्मस्वरूपानुभवदर्शनम्। गुणानां स्वरूपं नात्मनःपृथग् चैतन्यपरसामान्यादात्मनः सर्वाऽऽत्मभिः महाऽभेदः। व्यवहारत आत्मनां नानात्वम्, नामकर्मप्रकृतिजो भूतग्रामादिभेदो न तु स्वभावतः। जन्मादिकोऽपि कर्मणां हि नियतःपरिणामः। कर्मकृत विकृतिमात्मन्यारोप्य ज्ञानभ्रष्टा भ्रमन्ति भवे। अज्ञानी आत्मनिकर्मकृतभेदाऽभिमानी। उपाधिकर्मजो व्यवहारो नास्त्यकर्मणि। एक क्षेत्रस्थितोऽप्येति

नात्मा, कर्मगुणसम्बन्धम् । व्यवहारी त्वेकमेवाऽऽत्मानमनेकधा मन्यते । सदृशताया अस्तित्वमेकमविरुद्धमात्मनि । दर्शयत्येकतारत्नं सतां शुद्धनयमित्रम् । भिन्नैःपर्यायैर्जहाति नैकत्वमात्मद्रव्यं सदाऽन्वयि । नरनारकादिभावेषु एक एवात्मा निरञ्जन । कर्म क्रियास्वभावं, आत्मा त्वजस्वभाववान् । आत्मकर्मसंयोगजेऽपि संसारे, आत्मनि संसारजनकक्रिया नास्ति । एतद्विषये दृष्टान्तचतुष्टयम् । शुद्धनयाऽयत्तमेकत्वं प्राप्तमात्मनि शुद्धनया आत्मानं प्रत्यग् परमात्म (एकशुद्ध)ज्योतिषमाहुः प्रसिद्ध । भगवन्नात्मन् शुद्धरूपं प्रकाशयेति प्रार्थनाऽऽत्मानं प्रति । व्यवहारे देहेन सहैकत्वमात्मनः । व्यवहारेण कथंचिन्मूर्त्त आत्मा । निश्चये मूर्त्त आत्मेति भ्रमः । यतो मूर्त्तलक्षणाभावात् । स्वप्रकाशमात्मरूपं तस्य कानाम मूर्ता । पश्यत्याश्चर्यवज्ज्ञानी, वदन्याश्चर्यवद् वचः । वेदना मूर्त्तत्वाधीना न, किन्त्वशुद्धस्वशक्तिजा । स्वयं परिणमत्यात्म वेदनामयम् । विपाक कालाप्राप्त्यनन्तरं वेदनापरिणाम्यात्मा । कर्मफलसंज्ञावती वेदना चेतनेतिव्यवहारः तथा ज्ञानाख्या चेतना बोधः, रागद्वेषौ कर्माख्या चेतना । नाऽऽत्माऽमूर्त्तत्वं चैतन्यं चातिवर्त्तते । सन्निकृष्ट-विप्रकृष्टपदार्थेभ्यो भिन्नताऽऽत्मनः । गुणभेदेनाजीवेभ्य आत्मनो भेदः । द्रव्यभावप्राणाभावविवक्षया सिद्धसंसारिजीवयोरजीवत्वम् । द्रव्यप्राणानां संख्या, दश । शुद्धज्ञानादि भावप्राणै र्जीवत्यात्मा सदा । जीवानां जीवनपद्धति श्चित्रा । पुण्यपाप-तत्त्वतो भिन्ना आत्मा । कर्मणि पारतन्त्र्यसामान्येन फलभेदो न सुखदुःखयो र्भेदस्तु नामापेक्षया न तु फलापेक्षया । दुःख-

प्रतीकारे त्रिमूढानां सुखत्वधीः। परिणामात्, तापात्, संस्कारात्, गुणवृत्ति विरोधात् पुण्यजं सुखं दुःखम्। भोगभवविलासः सर्वो भयजनकः। अशुद्धरूप आत्मेति मिथ्यावच इति शब्दनयाः। फलतः पुण्यपापयोरेकत्वं मन्वानस्य भवोदधिः सान्तः। दुःखैकरूपयोः पुण्यपापयो भिन्न एवात्मा। आत्मनः सच्चिदानन्दरूपं चतुर्थदशाव्यङ्ग्यमावरण क्षयात्। सामान्यं चिदानन्दरूपं सर्वदशान्वयि। अक्षजन्य चित्र धी सुखवृत्तिभिर्नात्मनोऽनुभूतिपराभूती। सुषुप्तौ यथा निरहंकृतं भानमन्तरात्मनस्तथा शुद्धविवेके तदतिस्फुटम्। शुद्धनिश्चयत आत्मा सच्चिदानन्दभावस्य भोक्ता, अशुद्ध निश्चयत आत्मा कर्मकृत सुख-दुःख भोक्ता। निरूप चरिताऽसद्भूत व्यवहारतः कर्मणो भोक्ता, आत्मा, उपचरिता सद्भूत नयतः स्रगादि भोगोपभोग भोक्ता। भवभवान्त कारणाशुद्ध शुद्ध चित्तवृत्तिः। शुद्धपर्यायिरूपस्तदात्मा शुद्ध स्वभावकर्त्ता। पर्यायास्तिकनयाःसम्यग् दर्शनादि धर्माणामुत्पत्ति।, द्रव्यस्तिकनयाःसम्यग्दर्शनादि धर्मा-सन्ति, आवरणतस्तेषामव्यक्तिं कथयन्ति। यं यं भावं यदा यदा स्वयमेव परिणमति तदा तदा तं तं भावं स आत्मा करोतीतिपर्यायार्थिक ऋजुसूत्रनयः। स्वगतं कर्म स्वफलं नाति वर्त्तते। ऋजुसूत्रनयः परभावानां कर्त्तृत्वं नाऽभ्युपगच्छति। प्रमादि यत-मानयोरेव शरीरिणामवधवधयो हिंसादये भवतः। कर्मणा बद्ध्यतेऽज्ञानी, ज्ञानवांस्तु न लिप्यते। रागद्वेषाशयानां तु कर्तेष्टाऽनिष्टवस्तुषु। रागद्वेषाऽनु-विद्धस्य कर्मबन्धः। निश्चयतो भावकर्म सृजन्नात्मा, व्यवहारात् पुद्गल कर्मकृत्। द्रव्यकर्मरूपव्यापारः

॥ ३२ ॥

फलपर्यन्तः परिदृष्टोयदात्मनः । नाऽऽत्मनो विकृतिं दत्ते तदेषा नयकल्पना । पुद्गल कर्मस्था विक्रिया-ऽऽत्मनि बालिशै—रुपचर्यते । आत्मनः कल्पनाऽतीतं रूपमकल्पक एव पश्यति । कल्पनामूढः प्राणी विपरीतदर्शनं करोति । शुद्धस्वरूपस्यात्मनो ध्यानं परमात्मध्यानं । शरीरादिभिर्वर्णितैः वीतरागस्य वास्तवी नोपवर्णना । व्यवहार निश्चय स्तुतिः । मुख्यगौणधर्माणां विवेकेन स्तुतिः कार्या । वस्तुस्पर्शितया शुभकल्पना न्याय्याऽपेक्षया । पुण्यपापरहितमात्मतत्त्वम् । आश्रवसंवर भिन्न आत्मा । मिथ्यात्वादि-भावाश्रवः । भावनादिधर्मो भावसंवरः । फलभेदादाश्रव-संवरयोर्भेदः । व्यवहारविमूढस्तु परप्राणि-गतपर्यायान् बाह्यरूपान् हिंसाऽहिंसादीन् आश्रवसंवरत्वेन मन्यते, बाह्यक्रियारतमना निश्चयस्यगूढतत्त्वं न पश्यति । भावापेक्षया यावन्त आश्रवास्तावन्तः परिश्रवाः । भावानां वैचित्र्यादात्मैवाश्रव-संवरौ । अज्ञानाद् बध्यते न तु विषयैः ज्ञानाद्विमुच्यते न तु शास्त्रादिपुद्गलात् । शास्त्रादिकं व्यवहारतः संवराङ्गम् । योगां-शत आश्रवः उपयोगांशतः संवरः । सम्यक्त्व-प्राप्त्यनन्तरं ज्ञानधारा शुद्धैव । उपयोगयोगधारयोः सर्वतः शुद्धयोः सत्योः सर्वसंवरः । यद् यावच्च स्थिरत्वं संवरः, यद् यावद् योग-चाञ्चल्यं आश्रवः । संसारि-सिद्धयोः शुद्धनयतो न भेदः । शुद्धज्ञानसमन्वितं द्वादशविधं सत्तपः । यत्र कषायरोधः, ब्रह्मचर्यं, जिनध्यानं तत्तपःशुद्धं । निपुणज्ञान-त्तादात्म्यरूपं तपो निर्जरापदं नान्यत् । कर्मातापकरं ज्ञानं तपः । ज्ञानतपो युक्तः तत्क्षणेनैव सर्वं कर्मक्षयाय । ज्ञानयोगस्तपः शुद्धम् । ज्ञानमय शुद्ध तपस्वी भावनिर्जरा । कर्मात्म

॥ ३३ ॥

मंश्लेषो द्रव्यबन्धः, तद् हेतुभूताऽध्यवसायो भावबन्धः । तथाभव्यतया प्रेरितो जन्तुः परिणामतः पुण्यपापबन्धकः । भवस्थित्यनुसारेणात्मनो बन्धेऽपि प्रवृत्तिः । तत्त्वविषयक श्रवण–मनन–वारंवार स्मरण–साक्षादनुभवादिप्रक्रियया न बन्धबुद्धिरत आत्माऽबन्धः प्रकाशते योगिनां । कर्मद्रव्यक्षयो द्रव्यमोक्षः, तद्हेतुभूताऽऽत्मा रत्नत्रयाऽन्वयी भावमोक्षः । रत्नत्रयं मोक्षस्तदभावे न कृतार्थता । भावलिङ्गरताः सर्वसारविदः सिद्ध्यन्ति । भावलिङ्गं हि मोक्षाङ्गं । यथाजात--दशालिङ्गं न मोक्षाङ्गम् । केवलिनो मूर्ध्नि वस्त्रक्षेपणेन केवलज्ञानपलायनं कथं ? । भावलिङ्गतो मोक्षो ध्रुवो भिन्नलिङ्गेपि । शुद्धाशुद्ध–निश्चयनयाभ्यामबद्धाऽमुक्तौ बद्धमुक्तौ । अन्वयव्यतिरेकाभ्यामात्मतत्त्व विनिश्चयं विद्वान् कुर्यात् नवतत्त्वेभ्योऽपि । निश्चयत आत्मतत्त्वचिन्तनं परमामृतज्ञानयोगरूपं । ज्ञानांश–दुर्विदग्धानां तत्त्वमेतदनर्थकृत् । पूर्वं व्यवहारकुशलो भूत्वा पश्चान्निश्चय जिज्ञासा कार्या । कृतव्यवहार-विनिश्चयः ततः शुद्धनयाश्रितः आत्मज्ञानरतो भूत्वा परमसाम्याश्रितो भवति ।

**एकोनविंशोऽधिकारः**=श्री जिनशासनं विशिष्ट जलनिधि श्रये । सदा विजयते विशिष्ट स्याद्वादकल्पद्रुमः । विजयते विशिष्टमन्दरो जैनागमः । विशिष्ट-रविरूपो जैनागमो नन्दतात् । सोऽयं विशिष्ट जिनशासनाऽमृतरुचिः कस्यैति नो रुच्यताम् जैनी दृष्टीरितीह सारतरता प्रत्यक्षमुद्वीक्ष्यते । सर्वपरदर्शनरूप–नयैः सर्वथाऽऽदरणीयोऽयं जिनेन्द्रागमः । नायं कोपक्रमः सर्वहितावहे जिनमते तत्त्वप्रसिद्ध्यर्थिनाम् । नश्चेतो नितमां लीनं जिनेन्द्रागमे । जैनेन्द्रे तु मते शब्दार्थविषयक संदेहव्यथा न जात्यन्तरार्थ–

स्थितेः । लोकोत्तरभङ्गपद्धतिमयीं स्याद्वादमुद्रां स्तुमः। तं जैनागम माकलय्य न वयं व्याक्षेपभाजः क्वचित् । मूलं सर्व-वचोगणस्य विदितं जैनेश्वरं शासनम् । उन्मादत्यागपूर्वकमनेकान्त वादरचना श्रोतव्याऽतः सिद्धान्तरहस्यविद् भवति । स्याद्वादी सर्वनया-न-विभक्तान् कुर्व्वन् स्याद्वाद-सुपथे निवेशयन् विजयते ॥

**सप्तमप्रबन्धे=विंशतितमोऽधिकारः=**प्रियमनुभवैक-वेद्यं रहस्यम् । लीनमप्युत्तरलं मनः । पञ्चप्रकारं चेतो सुज्ञातयोगैरभिमतं क्षिप्तमूढ विक्षिप्तैकाग्र निरुद्ध भेदात् । विषयानुगतं बहिर्मुखं चितं 'क्षिप्तम्' । क्रोधादिभिर्विरुद्धकृत्येषु व्याप्तं निर्विवेकं चित 'विक्षिप्तम्' अद्वेपादि गुणवतां खेदादि दोष क्षयात्सदृशप्रत्यय मंगत'मेकाग्रं' चित्तम् । विकल्पवृत्तिशून्य धारणादिसंगतं शुद्धं आत्मारामसुनीनां 'निरूद्धं' चित्तम् । एकाग्रनिरूद्ध भेद द्वयं समाधावुपयोगि । विक्षिप्ते' कदाचिद् योगारम्भः, क्षिप्तमूढयो व्युत्थानम् । अभ्यासे चलं मन इष्टम् । अभ्यासदशायां यातायातं सातिचारमपि चित्तमदुष्टम् । बाह्यार्थैः प्रलोभ्य निगृह्णीयाच्चेतः । अभिरूपजिनप्रतिमादिरूपसदालम्बन विशेषाः कथ्यन्ते । सदालम्बनस्य परमः प्रभाव । मनसो निरालम्बकरणे विशिष्टक्रमोल्लेखः । मनस उपशमने द्वितीयः पन्थाः । शोकादि दोषक्षयः आत्मनः सहज शान्तज्योतिः प्रकाशते शान्तमनसि । परमात्माऽनुध्येयः सन्निहितो ध्यानतो भवति । कायादि र्वहिरात्मा । कायाद्याधिष्ठितः कायभिन्न आत्मा अन्तरात्मा । गत निःशेषोपाधिः परमात्मा । आत्मगुणमनोवृत्ति—विवेक ज्ञानी कुशलानुबन्धी ब्रह्मत्वं प्राप्नोति । ब्रह्मविदः वचनेनाऽपि

ब्रह्म विलासाननुभवामः । ब्रह्मयोगी परमः सः । पूर्णं ब्रह्मयोगिनि गुरुत्वबुद्धितः सुतरः संसारसिन्धुः । इच्छायोगालम्बन पूर्वकं भक्त्या परममुनिमार्गानुसरणम् । इच्छायोगेऽल्पयतनाऽपि निर्दंभा शुभानुबन्धकरी । परमालम्बनभूतो दर्शनपक्षोऽयमस्माकम् । दर्शनपक्षस्याकारः । इच्छायोगे विधिकथनादि कृत्यरूपशक्यारम्भः । पूर्णक्रियाऽभिलाषश्चेति द्वयमात्मशुद्धिकरम् । शक्यारम्भश्च शुद्धपक्षश्च शुभानुबंधी । बाह्यक्रिययाचरणाऽभिमानिनो ज्ञानिनोऽपि न ते बाह्याचार-मात्रं मतां न प्रमाणम् । अध्यात्मानुभव-जन्यनिगूढ नवनीत शिक्षारूप उपसंहारः ।

**एकविंशतितमोऽधिकारः**=सज्जन स्तुतिः सन्तः सन्तु मयि प्रसन्न मनसः । सज्जनाः कृपातः सुकविकृत ग्रन्थार्थान् प्रथयन्ति । सुहृदयानां मदयानां कृपासन्निहिताकार्यायतो दुर्जनोगुणनाशको न भवेत् । दृष्टाव्यवस्थाः सताम् आध्यात्मिकीं कथां श्रुत्वा सन्तः सुखं गाहन्ते । न प्रमदावद्धा तनुधियां गूढा कवीनां कृतिः । एषा कवि कृतिमहिच्छन्नदशां तनुधियां न चेतश्चमत्कारिणी । सकलगुणनिधीन् सज्जनान् नमामः । काव्यमेघवर्षणतः सुहृदां मनः सरः प्रेमपूरैः प्लाव्यते । सत्कविर्लब्धयशः सश्चयः सहृदयै वर्ण्यते । विशिष्टामृतं सर्वपेयमिति ज्ञात्वाऽतितरां स्मितेन मोदते सज्जनः । निपुण नयेन कवीन्द्रकृत श्लोकाः सत्परीक्षिता दीप्यन्ते । इक्षुद्राक्षारसौधरूपं कविवचनं मादकं पिब्धन्ति सन्तः । नव्योऽस्माकं प्रबन्धोऽप्यनणुगुणभृतां सतां प्रभावाद् विख्यातः स्यात् । भ्राजन्ते ते मुनीन्द्रा नयविजय बुधाः सज्जन-व्रातधुर्याः । प्रशस्तिः । अस्मिन ग्रंथे जिनाज्ञादि विरुद्धं स्यात् तन मिथ्या मे दुष्कृतम् भूयाद् ॥ **समाप्त**॥

॥ श्री शंखेश्वरपार्श्वनाथाय नमः ॥

ऐँ नमः

॥ सूरि आतमकमललब्धिभुवनतिलकगुरुभ्यो नमः ॥

न्यायाचार्यमहामहोपाध्यायश्रीमद्यशोविजयजी-विरचितः

# ❋ अध्यात्मसारः ❋

विजयभद्रंकरसूरिकृतभुवनतिलकाऽऽख्यया संस्कृतटीकया समलंकृतः-

अध्यात्ममाहात्म्यनामकः प्रथमोऽधिकारः

## * मङ्गलाचरणम् *

स्मृत्वा शान्तिं जगन्नाथं, शान्तिदं छाणिमण्डनम् । नत्वा च वर्धमानेशं, जिनेशं शासनेश्वरम् ॥१॥
गौतमादीन गणेशांश्च, प्रणम्य सूरिपुङ्गवान । हेमहरिप्रमुख्यांश्च प्र-सिद्धाऽध्यात्मयोगिनः ॥२॥
न्यायाचार्यादिना सिद्धान् , यशोवाचकशेखरान् । श्रुतकेवलिसाम्याढ्यान् , स्मृत्वा वादिजयाऽश्चितान् ॥३॥
श्री लब्धिसूरिपट्टेशान् , भुवनतिलकाभिधान् । सूरीन् स्मृत्वा सदाऽध्यात्म-सारग्रन्थस्य भक्तितः ॥४॥
भुवनतिलकाऽऽख्याऽऽढ्या, स्मारिका गुरुनामतः । मया प्रतन्यते टीका, भद्रंकरेण सूरिणा ॥५॥

॥ श्री नाभिनन्दनप्रभुस्तुतिः ॥

ऐन्द्रश्रेणिनतः श्रीमान्नन्दतान्नाभिनन्दनः । उद्दधार युगादौ यो, जगदज्ञानपङ्कतः ॥१॥

टीकाः-नाभिनन्दनो नन्दतात्=ऋषभस्वामी समृद्धिमान् भवतु, जयतु इति यावत्,

स कीदृशः ? ऐन्द्रश्रेणिनतः=इन्द्रस्येयं श्रेणिः-ऐन्द्रश्रेणिः, तया नतः=भक्तिप्रह्वचतुष्पष्टिसुरेन्द्रैर्नमनविषयीकृतः, पूजितपूज्योऽतः सुतरां जगत्पूज्यो देवाधिदेव इत्यर्थः, अनेन विशेषणेन भगवतः पूजातिशयः प्रकटितः । स पुनः कीदृशः ? श्रीमानितिः=श्रीः-प्रातिहार्यादिरूपतीर्थकृल्लक्ष्मीर्वाऽष्टोत्तरसहस्रलक्षणप्रभृत्यतिशयादिरूपशोभा, अस्ति अस्मिन् भगवतीति श्रीमान्, अर्थाद् बाह्याभ्यन्तररूपाहार्यानाहार्यसमस्तश्रीसम्पन्नो वर्त्ततेऽत एव विश्वोपकारायालं भवति, अश्रीकः कस्यचिदुपरि नोपकारी भवति, अनेन ज्ञानातिशयवचनातिशयौ प्रदर्शितौ, यो=नाभिनन्दनः, ऐन्द्रश्रेणिनतः श्रीमान्, युगादौ=यौगलिकधर्मसमाप्त्यनन्तरं, चतुर्थारकरूपसत्ययुगस्यादौ=पूर्वे तृतीयारकान्तरूपे युगादौ उद्दधार जगदज्ञानपङ्कतः=विश्वविश्वं, आर्यनीतिमार्गमोक्षमार्गादिविषयकाज्ञानरूपकर्दमतः, नीतिधर्ममार्गादिविषयकज्ञानप्रकाशनद्वारा, उद्धृतवानर्थादनन्तकरुणारसाकरो भगवानादिनाथो विश्वस्योपरि परमपथप्रदर्शनेन बोधिबोधादिदानेन परममनन्तमुपकारं कृतवानिति [प्रथमं तावत् पृथिवीनाथाऽपेक्षया भरतादीनां द्विसप्ततिकलाः, ब्राह्म्यादीनां चतुष्पष्टिकलास्तथा शिल्पशतान्यपि शिक्षितवानिति] ॥१॥

॥ श्री शान्तिप्रभुस्तुतिः ॥

श्रीशान्तिस्तान्तिभिद् भूयाद्, भविनां मृगलाञ्छनः ।
गावः कुवलयोल्लासं, कुर्वते यस्य निर्मलाः ॥२॥

टीका:-श्रीशान्तिर्भविनां तान्तिभिद् भूयात्=श्री शान्तिनाथो भव्यजीवानां भवसन्तानाऽज्ञानान्धकारभेदकारको भूयादिति सण्टङ्कः, कीदृशः श्रीशान्तिः ? मृगलाञ्छनः=स्वोरुगतमृगस्य लाञ्छनेन विशिष्टः, अतः षोडशस्तीर्थकृदेवेति व्यज्यते यतोऽन्येषां तीर्थकृतां मृगलाञ्छनत्वं नास्त्येवेति, लोके तु मृगलाञ्छनपदेन साक्षाच्चन्द्र इति गृह्यते यतो यस्याऽपि गावः-रश्मयः, कुवलयस्य कुमुदस्य कमलस्योल्लासं-विकासं कुर्वते, तथाऽत्रापि मृगलाञ्छनपदेन जैनशासने शान्तिनाथः प्रभुरेव विवक्षितोऽतो यस्य-शान्तिनाथस्य निर्गला गावः [जन्म-शामन-समवसरणाद्यपेक्षया प्रकाशरूपा रश्मयः, गोपदोपलक्षितचतुष्पद द्विपदादि जीवविशेषाः, प्रवचनवाचः] कुवलयस्य-पृथिवीमण्डलस्य 'तात्स्थ्यात्तदिति न्यायेन पृथ्वीवर्तिजनगणस्य, उल्लासं कुर्वते=प्रकाशं, जागृतिं, स्वात्मविकासमानन्दं च जनयन्ति तथा च गर्भापेक्षया शान्तिकरत्वेन च चक्रवर्तित्वेन तीर्थकृत्त्वेन प्रसिद्धो भगवान् षोडशस्तीर्थकृदर्हन् मृगलाञ्छनः सन् प्रकाश पृथ्वीरक्षण-प्रवचनवचननामकगोरूपेण जगन्मण्डलमानन्दयन् जगतोऽभ्युदयनिःश्रेयसरूपं विकासं कृतवानिति ॥२॥

॥ श्री नाभिनन्दनप्रभुस्तुतिः ॥

**ऐन्द्रश्रेणिनतः श्रीमान्नन्दतान्नाभिनन्दनः । उद्दधार युगादौ यो, जगदज्ञानपङ्कतः ॥१॥**

टीकाः-नाभिनन्दनो नन्दतात्=ऋषभस्वामी समृद्धिमान भवतु, जयतु इति यावत् ,

स कीदृशः ? ऐन्द्रश्रेणिनतः=इन्द्रस्येयं श्रेणिः-ऐन्द्रश्रेणिः, तया नतः=भक्तिप्रह्वचतुष्षष्टिसुरेन्द्रै र्नमनविषयीकृतः, पूजितपूज्योऽतः सुतरां जगत्पूज्यो देवाधिदेव इत्यर्थः, अनेन विशेषणेन भगवतः पूजातिशयः प्रकटितः । स पुनः कीदृशः ? श्रीमानितिः=श्रीः-प्रातिहार्यादिरूपतीर्थकृल्लक्ष्मीर्वाऽष्टोत्तरसहस्रलक्षण-प्रभृत्यतिशयादिरूपशोभा, अस्ति अस्मिन् भगवतीति श्रीमान् , अर्थाद् बाह्याभ्यन्तररूपाहार्यानाहार्यसमस्तश्रीसम्पन्नो वर्त्ततेऽत एव विश्वोपकारायालं भवति, अश्रीकः कस्यचिदुपरि नोपकारी भवति, अनेन ज्ञानातिशयवचनातिशयौ प्रदर्शितौ, यो=नाभिनन्दनः, ऐन्द्रश्रेणिनतः श्रीमान् , युगादौ=यौगलिकधर्मसमाप्त्यनन्तरं, चतुर्थारकरूपसत्ययुगस्यादौ=पूर्वे तृतीयारकान्तरूपे युगादौ उद्दधार जगदज्ञानपङ्कतः=विश्वविश्वं, आर्यनीतिमार्गमोक्षमार्गादिविषयकाज्ञानरूपकर्दमतः, नीतिधर्ममार्गादिविषयकज्ञानप्रकाशनद्वारा, उद्धृतवानर्थादनन्तकरुणारसाकरो भगवानादिनाथो विश्वस्योपरि परमपथप्रदर्शनेन बोधिबोधादिदानेन परममनन्तमुपकारं कृतवानिति [प्रथमं तावत् पृथिवीनाथाऽपेक्षया भरतादीनां द्विसप्ततिकलाः, ब्राह्म्यादीनां चतुष्षष्टिकलास्तथा शिल्पशतान्यपि शिक्षितवानिति] ॥१॥

॥ श्री शान्तिप्रभुस्तुतिः ॥

श्रीशान्तिस्तान्तिभिद् भूयाद्, भविनां मृगलाञ्छनः ।
गावः कुवलयोल्लासं, कुर्वते यस्य निर्मलाः ॥२॥

टीकाः-श्रीशान्तिर्भविनां तान्तिभिद् भूयात्=श्री शान्तिनाथो भव्यजीवानां भवसन्तानाऽज्ञानान्धकारभेदकारको भूयादिति सण्टङ्कः, कीदृशः श्रीशान्तिः ? मृगलाञ्छनः=स्वोरुगतमृगस्य लाञ्छनेन विशिष्टः, अतः षोडशस्तीर्थकृदेवेति व्यज्यते यतोऽन्येषां तीर्थकृतां मृगलाञ्छनत्वं नास्त्येवेति, लोके तु मृगलाञ्छनपदेन साक्षाच्चन्द्र इति गृह्यते यतो यस्याऽपि गावः-रश्मयः, कुवलयस्य कुमुदस्य कमलस्योल्लासं-विकासं कुर्वते, तथाऽत्रापि मृगलाञ्छनपदेन जैनशासने शान्तिनाथः प्रभुरेव विवक्षितोऽतो यस्य-शान्तिनाथस्य निर्मला गावः [जन्म-शामन-समवसरणाद्यपेक्षया प्रकाशरूपा रश्मयः, गोपदोपलक्षितचतुष्पद द्विपदादि जीवविशेषाः, प्रवचनवाचः] कुवलयस्य-पृथिवीमण्डलस्य 'तात्स्थ्यात्तदिति न्यायेन पृथ्वीवर्तिजनगणस्य, उल्लासं कुर्वते=प्रकाशं, जागृतिं, स्वात्मविकासमानन्दं च जनयन्ति तथा च गर्भापेक्षया शान्तिकरत्वेन च चक्रवर्तित्वेन तीर्थकृत्त्वेन प्रसिद्धो भगवान् षोडशस्तीर्थकृदर्हन् मृगलाञ्छनः सन् प्रकाश पृथ्वीरक्षण-प्रवचनवचननासकृगोरूपेण जगन्मण्डलमानन्दयन् जगतोऽभ्युदयनिःश्रेयसरूपं विकासं कृतवानिति ॥२॥

श्रीनेमिप्रभुस्तुतिः।

श्रीशैवेयं जिनं स्तौमि, भुवनं यशसेव यः। मारुतेन मुखोत्थेन पाञ्चजन्यमपूपुरत् ॥३॥

टीकाः-श्रीशैवेयं जिनं स्तौमि=श्रीसमन्वितं शिवानन्दनं नेमिनाथमर्हन्तं स्तुतिविषयीकरोमीत्यर्थः, यः=नेमिनाथः कौमार्येऽपि मित्रमण्डलप्रेरितो लीलाकौतुकरहितोऽपि कृष्णवासुदेवायुधशालायां वासुदेवीयं पाञ्चजन्यनामकं शङ्खराजं वदननिःसृतेन वायुना यथाऽपूपुरत्=पूरितवान्, तथा बाल्यतो ब्रह्मव्रतसाधुवृत्तितीर्थङ्करनामकर्मसम्पादितविश्वोपकारजन्यचन्द्रोज्ज्वलेन सर्वदिग्गामुकेन यशसा भुवनं=जगत्, भरितवान्, तथाच तीर्थङ्कराणां भगवतां विश्वविश्वोपकारकाणां यशो वैमानिकज्योतिष्कव्यन्तरभवनपतिसत्कदेवदेवीभिः पञ्चकल्याणकादिदिनेषु समहोत्सवं गीयतेऽतो भगवन्तो भुवनत्रयव्यापकमहायशसो भवन्तीत्यर्थः ॥३॥

श्रीपार्श्वप्रभुस्तुतिः

जीयात् फणिफणाप्रान्त-संक्रान्ततनुरेकदा। उद्धर्तुमिव विश्वानि, श्रीपार्श्वो बहुरूपभाक् ॥४॥

टीकाः-श्रीपार्श्वो जीयादिति=त्रयोविंशतितमस्तीर्थकरः पार्श्वनाथस्वामी जयवान् भूयादित्यर्थः, कीदृशः श्रीपार्श्वः ? फणिफणप्रान्तसङ्क्रान्ततनुः=फणिनां फणमणिप्रान्तेषु प्रतिबिम्बितकायः, स पुनः

कीदृशः ? बहुरूपभागिति=अत एव बहूनि रूपाणि–शरीराणि भजते इति बहुरूपभाक्, नानाकायविशिष्ट-इत्यर्थः, तथा च फणिमणिधरफणप्रान्तेषु श्रीपार्श्वनाथशरीरस्य प्रतिबिम्बनात् कविरुत्प्रेक्षते, जाने श्री-पार्श्वः करुणावरुणालय एकदा=युगपद् विश्वानि-जगन्ति, उद्धर्त्तुमुपकर्त्तुमिव बहुरूपभागिति । यथा समवसरणस्थश्चतुर्मुखतां दधज्जिनो भगवान् युगपच्चतुर्दिक्स्थसंसारिजीवोद्धारकरणचतुरो भवति तथाऽत्रापि यत एकेन रूपेणैकं जगदुद्धारविषयकं तथा बहुभीरूपैर्विश्वानि, उद्धारविषयकाणि कथं न भवेयुरिति ? ॥४॥

### श्री महावीरप्रभुस्तुतिः

**जगदानन्दनः स्वामी, जयति ज्ञातनन्दनः । उपजीवन्ति यद्वाच–मद्यापि विबुधाः सुधाम् ॥५॥**

टीका–स्वामी ज्ञातनन्दनो जयतीति सण्टङ्कः, अर्थाद् वर्धमानो भगवान् सर्वोत्कर्षेण वर्त्तते, सकीदृशो ज्ञातनन्दनः ? जगदानन्दनः=जगद्–विश्वमानन्दयतीति, द्रव्यभावदानेन वाञ्छितदानेन चोन्नतिं नयतीत्यर्थः, विना तीर्थङ्करं नान्यःकश्चित् सत्यार्थतया त्रिभुवनं प्रीणयितुं प्रभवति, तत्र हेतुमाह–अद्यापि–महावीरशासनसाम्राज्यविशिष्टवर्त्तमानकालेऽपि कलिकालेऽपि, विबुधाः–देवा इव विविक्तप्रतिभाप्रपन्नाः, पुरुषपुङ्गवाः, सुधामिव पीयूषवत्, शान्तरसाऽऽस्वादमयीं, यद्वाचं=यस्य-ज्ञातनन्दनस्य वाचं–वर्धमानवदनाऽरविन्दतो निःसृतामर्थरूपां तदीयगणधरेन्द्रेण रचितां सूत्ररूपां–जिनागमाऽभिधां,

॥ ५ ॥

विबुधाः=आचार्यादयो गीतार्थाः, उपजीवन्ति=जीवन्तीं कुर्वते, अर्थात् स्वकीयजीवने वीरवाणीमुत्तार्य-आराध्य, जीवजीवनेन जीवन्ति, जीवन्मुक्ता इव भवन्ति, परेभ्योऽपि ददतीत्यपि समीचीनोऽर्थो यतो वीरवाणीसुधा स्वयं पिबन्ति, परानपि देशनादिसाधनद्वारा पाययन्तीति उपजीवनसारांशः ॥५॥

मङ्गलाचरणपूर्वकमध्यात्मसारस्य प्रकटनम्–

॥ ६ ॥ एतानन्यानपि जिनान्नमस्कृत्य गुरूनपि । अध्यात्मसारमधुना प्रकटीकर्त्तुमुत्सहे ॥६॥

टीकाः 'एतानि'ति नामग्राहं गृहीतान् पञ्च तीर्थङ्करान् , 'अन्यानपि जिनानि' ति, गुणवत्तया समानानन्यानजितादीन् जिनान , 'गुरूनपी'ति गुरुगुणसम्पन्नान् गौतमादीन् सर्वान् गुरून् 'नमस्कृत्येति भावमङ्गलत्वेन नमस्कार्यतया समानान् सर्वजिनान् सर्वगुरूंश्च हृदि निधाय, 'अधुने' त्यनन्तरं, अन्वर्थनामकं 'अध्यात्मसारं [अध्यात्ममेव सारं–श्रेष्ठं निष्कर्षो वा यत्र तच्छास्त्रं] 'प्रकटीकर्तुमुत्सहे' प्रादुष्कर्त्तुं महोपाध्यायन्यायाचार्ययशोविजयाभिधानोऽहमपूर्ववीर्योल्लासवानस्मीत्यर्थः ॥६॥

त्रिभिःकारणैः परिचितापूर्वप्रक्रियायाःप्रादुष्करणम्

शास्त्रात् परिचितां सम्यक्सम्प्रदायाच्च धीमताम् । इहानुभवयोगाच्च प्रक्रियां कामपि ब्रुवे ॥७॥

टीकाः-प्रक्रियां कामपि ब्रुवे'=अद्भुतां संक्षिप्तां वाऽध्यात्मसाराख्यां प्रक्रियां-प्रकरणं ब्रुवे-वक्ष्यामीत्यर्थः, कीदृशीं प्रक्रियां ब्रुवे ? इति चेदाह 'शास्त्रात् सम्यक् परिचिता' मिति, 'शास्त्रादिति, 'शासनात् त्राणशक्तेश्च बुधैः शास्त्रं निरुच्यते वचनं वीतरागस्य तत्तु नान्यस्य कस्यचिदित्यादिनिरुक्तलक्षणविशिष्टशास्त्रात् 'सम्यगि' ति सम्पूर्णतया परिचयविषयीकृतामित्यर्थः, पु० की. प्रक्रियां ब्रुवे ? इति चेदाह 'धीमतां सम्प्रदायाच्चेति गीतार्थानामनुयोगधराणामाम्नायाच्च 'स्यात् पारंपर्यमाम्नायः सम्प्रदायो गुरुक्रमः' इत्यभिधानकोशोक्तेः, परिचितामित्यर्थः, पु० की. प्र० ब्रुवे ? इति चेदाह, 'इहानुभवयोगाच्चेति, इह-जैनशासने, अध्यात्मविषये वा स्वात्मनिष्ठतात्पर्यजन्यबोधस्वारस्यरूपाऽनुभवयोगात् परिचितामित्यर्थः ॥७॥

योगिप्रीतिप्रदं पद्यमध्यात्माऽमृतमयं भवति--

योगिनां प्रीतये पद्यमध्यात्मरसपेशलम् ।
भोगिनां भामिनीगीतं, सङ्गीतकमयं यथा ॥८॥

टीकाः-'यथा भोगिनामिति'=भोगोपभोगशालिनां [उपभुज्यते-पौनःपुन्येन सेव्यत इत्युपभोगोभवनवसनवनितादिः, परिभुज्यते-सकृदासेव्यते इति परिभोगः-आहारकुसुमविलेपनादिः, व्यत्ययोवा व्या-


॥ ७ ॥

ख्येय इति उ० द० सू० अ० टी०] एवं परिभोगोपभोगवतामप्यर्थात् कामभोगादिविषयरसरसिकानां, 'सङ्गीतकमय'=रासादिसहितं नृत्यवाद्यादिसहितं 'भामिनीगीतं'=कामिनीनां गानं 'प्रीतये' आनन्दफलप्रदं भवति, तथा 'योगिनां'=योगवतां (मोक्षोपायो योगो ज्ञान–श्रद्धानचरणात्मकः) इत्यभिधानकोशप्रतिपादितयोगार्थशालिनामित्यर्थः । 'मोक्षेण सहयोजनाद्योगः' इत्यभियुक्तोक्तेः, मोक्षयोजकसामग्रीसहितयोगलग्नानां 'अध्यात्मरमपेशलं,=वैराग्यशान्तरसादिनानाविधात्मगुणाऽनुभवरसरुचिरं 'पद्यंप्रीतये'=काव्यरचनामयं पद्यं महानन्दाय भवतीति ॥८॥

वैषयिकसुखाध्यात्मिकसुखयोर्महदन्तरम्—

कान्ताऽधरसुधाऽऽस्वादाद् यूनां यज्जायते सुखम् ।
बिन्दुः पार्श्वे तदध्यात्म-शास्त्राऽऽस्वादसुखोदधेः ॥९॥

टीकाः–'यूनामि'ति–युवाऽवस्थावतां कामरसलम्पटानां 'कान्ताऽधरसुधाऽऽस्वादादि'ति=कविकल्पनाऽपेक्षया, कान्तायाः–प्रियतमायाः, 'अधरसुधायाः–अधःस्थौष्ठचुम्बनरूपसुधाया आस्वादाद् य आनन्दो जायते 'तदध्यात्मशास्त्रास्वादसुखोदधेः पार्श्वे बिन्दुरि'ति=तत् कामसुखं, आत्मस्वरूपपरिचायकशास्त्रार्थपरिणमनजन्यप्रशमसुखसागरस्य समीपे बिन्दुरूपं वैषयिकं सुखं क्व, सागररूपमाध्यात्मिकं सुखं

क्व, इति द्वयोरन्तरं महद् भूतलाकाशयोरिव, किञ्चाऽऽध्यात्मिकं सुखं सर्वस्मिन् काले ज्ञानिभिः स्वतन्त्रतया निर्भयतयाऽऽत्मन्यात्मनाऽनुभूयतेऽतः सत्यं नित्यं तत्प्रति सदादृष्टि र्देया, न पुनः पराधीने क्षयिणि सभये पौद्गलिके पशुक्रियारूपे सुखाभासे विषयसुखे कदाचिदपि दृष्टिर्देयेति सूच्यते० ॥९॥

**आध्यात्मिकसुखशाली महावैषयिकसुखशालिनं न गणयत्येव–**

**अध्यात्मशास्त्रसम्भूत-सन्तोषसुखशालिनो। गणयन्ति न राजानं, न श्रीदं नाऽपि वासवम् ।१०।**

टीकाः–अध्यात्मशास्त्रसम्भूतसन्तोषसुखशालिनः' इति=आत्मस्वरूपनिरूपकशास्त्राभ्यासादिद्वारा तत्सुपरिचयजन्यपरमसन्तोषसुखवन्तो मुनयः, पुण्यद्वारा कोऽपि मनोज्ञः पुद्गल आगतस्तत्र न कोऽपि हर्षोत्कर्षः, स न मदीयोऽपि तु परकीय एवेति संवेदनात्, पापोदयद्वारा कोऽपि, चारुपुद्गलो गतोऽथवाऽमनोज्ञः प्राप्तस्तत्र नार्त्तध्यानं, पापविपाकस्य समतया सहनात् पापाऽपगमो भविष्यतीति संवेदनात्, इत्यादिकाध्यात्मशास्त्रशिक्षणजाताऽत्यन्तशान्तिसुखधारिणः, 'गणयन्ति न राजानं न श्रीदं नाऽपि वासवमिति=न राजानं गणयन्ति अर्थात् स्वसुखस्याग्रतः कश्चक्रवर्तितुल्यो भूपतिर्यतो राजाऽप्यसन्तुष्टः, 'न श्रीदं कुबेरं गणयन्ति–अर्थाद्मत्सन्तोषसुखस्याग्रतः कःश्रीदः ? यतः स बाह्यश्रियाऽऽश्रितोऽपि स्वात्मश्रिया विनाकृतः, 'नाऽपि गणयन्ति वासवमिति–मम सन्तोषशमसुखिनोऽग्रतः को देवेन्द्रः ? यतो देवानां स्वाम्यपि विषयाशाया दास इति मन्यन्ते ॥१०॥

शिक्षिताऽध्यात्मशास्त्रः पण्डितो नान्यः—

य: किलाशिक्षिताऽध्यात्मशास्त्रः पाण्डित्यमिच्छति ।
उत्क्षिपत्यङ्गुलीं पङ्गुः, स स्वर्द्रुमफलेप्सया ॥११॥

टीकाः-अध्यात्मशास्त्राऽध्ययनशिक्षणशून्यो यः कश्चित् पाण्डित्यमिच्छति स किल पङ्गुः-चरणशक्तिविकलः कल्पवृक्षफलजिघृक्षयाऽङ्गुलीमुत्क्षिपति-ऊर्द्ध्वां करोति तथा चाध्यात्मशास्त्रशिक्षणजन्यतत्त्वान्तशाली यः कश्चित् तत्त्वानुगपण्डानामकप्रतिभाप्रगल्भितो भवति, स चरणशक्तिमानिव स्वर्द्रुमफलेच्छया कृतेन प्रयत्नेन फलवान् भवतीति ॥११॥

अध्यात्मशास्त्रस्य गुणाः-

दम्भपर्वतदम्भोलिः, सौहार्दाम्बुधिचन्द्रमाः ।
अध्यात्मशास्त्रमुत्ताल-मोहजालवनानलः ॥१२॥

टीका दम्भपर्वत दम्भोलिरिति=मायारूपपर्वतस्य भञ्जने वज्रिवज्रसमानमध्यात्मशास्त्रम्, 'सौहार्दाऽम्बुधिजन्द्रमा' इति=सुहृद्भावरूपसमुद्रमुत्तरङ्गीकर्तुं शशिसमानमध्यात्मशास्त्रम्, 'उत्तालमोहजालवनाऽनलः' इति महाभयङ्करमोहवासनारूपेन्द्रजालसदृशवनं ( मोहरूपनवकालिकासमुदायात्मकं वनं ) दग्धुमग्निसमानमध्यात्मशास्त्रं-आत्मस्वरूपशास्त्रीयं ज्ञानं सन्तिष्ठते एवेति ॥१२॥

अध्यात्मशास्त्रस्य स्वराज्येऽशिवाभावः–

अध्वा धर्मस्य सुस्थः स्यात्, पापचौरः पलायते ।
अध्यात्मशास्त्रसौराज्ये, न स्यात्कश्चिदुपप्लवः ॥१३॥

टीकाः-अध्यात्मशास्त्रसौराज्ये' इति=आत्मविषयकशास्त्रस्य न्यायसम्पन्नसम्यग् राज्ये (स्वराज्यत्वे स्वसत्तायांवा) ये केचिद् वसन्ति तेषां 'अन्वा धर्मस्य सुस्थः स्यादिति-धर्मस्य मार्गो निर्भयोऽथवा सर्वथा-सर्वव्यवस्थास्वस्थतासम्पन्नो भवति, 'पापचौरः पलायते'=सर्वाशुभकर्मरूपलुण्टाकः पलायनं कुरुते, अर्थाद् धर्ममार्गसुस्थतया पापचौरपलायनतः, अध्यात्मशास्त्रसौराज्यस्थितानां महात्मनां 'न कश्चिदुपप्लवः स्या' दिति-आधिव्याध्युपध्यादिरूपोपद्रवमात्रस्याऽभावः स्यादिति ॥१३॥

तत्त्वपरिणतज्ञानिनां सर्वक्लेशाऽभावः–

येषामध्यात्मशास्त्रार्थ-तत्त्वं परिणतं हृदि ।
कषायविषयावेश-क्लेशस्तेषां न कर्हिचिद् ॥१४॥

टीकाः-येषां हृदि अध्यात्मशास्त्रार्थतत्त्वं परिणतमिति=येषामन्तरात्मनां स्वयावदात्मप्रदेशावच्छेदेनाऽऽत्मस्वरूपनिर्वाचकशास्त्रप्रतिपादितार्थतात्पर्यं परिणामरूपेण स्थितम्, 'तेषां कर्हिचिन्न कषायविषयावेश-

॥११॥

क्लेशः' इति=तेषां-महात्मनां क्रोधादिकषायस्य, शब्दादिविषयस्य च, आवेशः-तीव्रोदयस्तस्य क्लेशः-सन्तापो न कदाचिद् भवत्येव, अत्रात्मतत्त्वपरिणतिरतिरेवाऽवधार्येति व्यज्यते ॥१४॥

आत्मशास्त्रार्थज्ञानकृपया कामचण्डालपीडापरिहारः-

निर्दयः कामचण्डालः पण्डितानपि पीडयेत् ।
यदि नाऽध्यात्मशास्त्रार्थ-बोधयोधकृपा भवेत् ॥१५॥

टीकाः-'यदि नाध्यात्मशास्त्रार्थबोधयोधकृपाभवे'दिति=आत्मतत्त्वप्रतिपादकशास्त्रप्रतिपाद्याऽर्थविषयकबोधरूपयोधस्य कृपा प्रमादो न भवेत्तदा 'निर्दयः कामचण्डालः पण्डितानपि पीडये' दिति=चतुर्दशविद्यासकलश्रुतसागरपारङ्गतान् धुरन्धरान् पण्डितान् तत्त्वानुगामिमतिरूपपण्डामण्डितान् अपि=अन्येषां तु का कथा ! इति, निर्दयः कामचण्डालः=क्रूरकर्मकारित्वेन निर्दयः, वेदनामकमोहनीयकर्मोदयरूपः कामः, स एव चण्डालः, यतश्चण्डालतुल्यनीचातिनीचकार्यकारी भवति, ततो निर्दयः कामचण्डालः, पीडयेत्=नरकादिदुर्गतौ पीडयेत्-पीडितान् कुर्यात् पीलयेद्वेति=चतुर्गतिरूपयन्त्रे मोहिजनांश्चूर्णयेत् । अतोऽध्यात्मज्ञानं, अतीवाऽतीव सर्वदावर्धनीयमन्यथा क्रूरनीचकामचण्डालविपाक्तदृष्ट्या जडज्ञानिनो महामूर्च्छिताः क्रियन्ते इति ध्वन्यते ॥१५॥

अध्यात्मज्ञानद्वारा विषयतृष्णाया उच्छेदः-

विषवल्लीसमां तृष्णां वर्धमानां मनोवने ।
अध्यात्मशास्त्रदात्रेण, छिन्दन्ति परमर्षयः ॥१६॥

टीका:-परमर्षयः' इति=ऋषिषु चक्रवर्तिनः, 'मनोवने वर्धमानामिति=मन एव वनं, तस्मिन् हृदयरूपोपवने वृद्धिं लभमानां, 'विषवल्लीसमां तृष्णामिति=विषलतासदृशीं विषमविकारवर्धिनीं कामभोगादि-विषमयाऽऽशां 'अध्यात्मशास्त्रदात्रेणेति-बलवदात्मशास्त्रजन्यतीक्ष्णबोधरूपदात्रेण, 'छिन्दन्तीति-विच्छेद-क्रियाविषयां कुर्वन्तीति, अर्थात् कदाचिदपि पुनरुत्थानं न लभेतेति कुर्वन्ति ॥१६॥

कलिकालेऽध्यात्मवाङ्मयं दुर्लभम्—

वने वेश्म धनं दौस्थ्ये, तेजो ध्वान्ते जलं मरौ ।
दुरापमाप्यते धन्यैः, कलावध्यात्मवाङ्मयम् ॥१७॥

टीका:-'वने वेश्म दुरापमिति-गहनवने गच्छतां मार्गतो भ्रष्टानां यथा गृहं दुर्लभम् , 'तेजो ध्वान्ते' इति यथाऽसितपक्षीयरजन्यां घोरतमसि प्रकाशकं तेजो दुर्लभम् , 'जलं मरौ' इति म्रियते जलेन-विना यत्र स मरुः, तस्मिन् , यथा मरुदेशे जलं दुर्लभम् , तथा धन्यैः कलौ दुरापमध्यात्मवाङ्मयमा-

ध्यते' इति पुण्यानुबन्धिपुण्यशालिभिः, कलिकाले, आत्मविषयनिरूपकं शास्त्रं दुर्लभं लभ्यते; ॥१७॥

अध्यात्मशास्त्रवेत्तुरेव रसानुभवः

वेदाऽन्यशास्त्रवित् क्लेशं, रसमध्यात्मशास्त्रवित् ।
भाग्यभृद् भोगमाप्नोति, वहते चन्दनं खरः ॥१८॥

अन्यशास्त्रविदिति–आत्मशास्त्रभिन्नाऽन्यशास्त्रविद् , 'क्लेशं वेदेति=रसविरुद्धचित्तक्लेशं वेत्त्यनुभवति, 'अध्यात्मशास्त्रविदिति आत्मतत्वविधायकशास्त्रपरिशीलनकारी 'वेदेति-अपरिमेयरसराजरूपशान्तरसमनुभवत्येव, विश्वेऽस्मिन्नेतादृश एव न्यायो विजृम्भजे यथा 'वहते चन्दनं खरः' इति-रासभश्चन्दनकाष्ठभारमुत्पाटयति परन्तु 'भाग्यभृद् भोगमाप्नोतीति=भाग्यसम्भारभास्वरः पुरुषपुङ्गव एव चन्दनविलेपनादिभोगं लभते, अत्र शान्तरसलालसान्वितैरध्यात्मशास्त्राध्ययनरसिकैरनलसैः सदा स्थातव्यमिति व्यज्यते ॥१८॥

अध्यात्मशास्त्रिणां भाषणेऽप्यविकारः-

भुजाऽऽस्फालनहस्ताऽऽस्य-विकाराऽभिनयाः परे ।
अध्यात्मशास्त्रविज्ञास्तु वदन्त्यविकृतेक्षणाः ॥१९॥

टीका:-'परे' इति=अध्यात्मशास्त्रविरहेण भाषणपरायणाः, 'भुजाऽऽस्फालनहस्ताऽऽस्यविकाराऽभिनयाः' इति भुजाया आस्फालनेन, हस्ताऽङ्गुल्याद्यवयवानां ऊर्ध्वाधः करणद्वारा, हास्यादिसहिता मुखेन विकारसूचकाः येऽभिनयास्तद्वन्तोऽन्ये भवन्ति परन्तु 'अध्यात्मशास्त्रविज्ञास्तु' इति=आत्मतत्त्वरहस्याऽभिप्रायकज्ञानसम्पत्समन्वितास्तु 'अविकृतेक्षणा वदन्तीति=चाक्षुषविकारांशविरहिताः सन्त एव भाषन्ते, अत्र निपीताऽध्यात्मपीयूषा महात्मानोऽङ्गप्रत्यङ्गविकाराऽभिनयं विना स्वीयरुचिरहृदयङ्गमनैसर्गिकशैल्या एतादृशीं भारतीजाह्नवीं प्रवाहयन्ति यथा श्रोतारस्तद्गङ्गाजलेन पावनेन प्लाविता अमृतस्नाता इवाऽमन्दानन्दमेदुराः सन्तः प्रभाविता न तद्गिर कदाऽपि विस्मरन्तीति ध्वन्यते ॥१९॥

अध्यात्मज्ञानिनामागमसागरात् सद्गुणरत्नसम्प्राप्तिः

अध्यात्मशास्त्रहेमाद्रि- मथितादागमोदधेः ।
भूयांसि गुणरत्नानि, प्राप्यन्ते विबुधै र्न किम् ॥२०॥

टीका:-'अध्यात्मशास्त्रहेमाद्रिमथितादिति=अध्यात्मशास्त्ररूपसुवर्णाचलेन दण्डरूपेण मन्थनविपर्यीकृतात् 'आगमोदधे' रिति=सदागमरूपसागरात्, 'भूयांसि गुणरत्नानि प्राप्यन्ते विबुधैर्न किमि'ति=बहूनि

विविधानि दर्शनादिरूपगुणरत्नानि, देवैरिव पण्डितैः किं न लभ्यन्ते ? अपितु प्राप्यन्त एव, पुराणेषु श्रूयते ह्येकदा स्वर्गिभिः सागरो मथितस्तत्र मेरुं मन्थानदण्डं विधाय तद्दण्डं नागराजवासुकिना बद्ध्वा मन्थनमारब्धं सम्यङ्मथनाऽनन्तरं चतुर्दशमहारत्नानि प्रादुर्भूतानि च गृहीतानीति, तद्वद् विबुधा अप्येवं कुर्वन्ति, अध्यात्मशास्त्रमेरुणाऽऽगमसागरं मथ्नन्ति, तदनन्तरं तेऽप्यनन्तकल्याणकारिगुणरत्नानि किं न प्राप्नुवन्ति ? अपि तु प्राप्नुवन्त्येवेति ॥२०॥

अध्यात्मशास्त्रसेवाजन्यो रसो निरवधिरेव–

रसो भोगाऽवधिः कामे, सद् भक्ष्ये भोजनाऽवधिः ।
अध्यात्मशास्त्रसेवायां रसो निरवधिः पुनः ॥२१॥

टीकाः–विश्वेऽस्मिन् जगज्जनानां त्रिविधो रसो भवति, तत्र रसद्वयं साऽवधिकं, एको रसो निरवधिकः, प्रथमं क्षणिकमावेदयति, 'रसो भोगाऽवधिः कामे' इति कामभोगविषयको रस-आनन्दः, भोगावधि-र्भोगपर्यन्तस्तस्यान्तोऽत्यन्ताऽसमाध्युद्वेगादिदुःखराशिदो भवति 'सद् भक्ष्ये रसो भोजनावधिः' इति= स्वादुतमसुरभिमिष्टान्नपक्वान्नरूपचारुभक्ष्यभोज्यपदार्थविषयको रसो यावद् भोजनमर्थाद्गलात्कव-

लोऽधस्तादुत्तीर्णोऽनन्तरं पङ्के पङ्कः पतित इवात्यन्तक्षणिकोऽयं रसस्तत्र को मोहो यतो दुःखप्रतिकाररूपायां क्रियायां सुखाऽऽभासरूपो मिथ्यारसोऽस्तीति, 'अध्यात्मशास्त्रसेवायां रसो निरवधिः पुनः' इति आत्मतत्त्वनिदर्शकशास्त्रस्याऽध्ययनमननचिन्तनपरिशीलनादिरूपसेवायामाराधनायां प्रशमादिजन्याऽऽत्मिकरस आनन्दोऽनन्तादिरूपनिरवधिको निरुपाधिको भवति, अतोऽध्यात्मशास्त्रं सातत्येन सेवनीयं यतः परमानन्दोऽवश्यं भवत्येवेति ॥२१॥

अध्यात्मशास्त्रं भावनेत्राऽञ्जनसमानम्

कुतर्कग्रन्थसर्वस्व- गर्वज्वरविकारिणी ।
एति दृग् निर्मलीभाव-मध्यात्मग्रन्थभेषजात् ॥२२॥

कुतर्कग्रन्थसर्वस्वगर्वज्वरविकारिणीति=कुत्सिततर्कयुक्तिमतो ग्रन्थस्याध्ययनस्य सर्वस्वभूतगर्वरूपज्वरविकारवती,

'दृगिति=आभ्यन्तरकुदृष्टिरूपमिथ्यादृष्टिः, 'अध्यात्मग्रन्थभेषजादिति=आत्मतत्त्वबोधकसुयुक्तिमद्ग्रन्थाऽञ्जनरूपभेषजात् , निर्मलीभावमेतीति=सहजमलमोहदोषविरहप्रयुक्तशुद्धतां प्राप्नोति, शुद्धसम्यग्दृष्टिमानात्मा भवतीति ॥२२॥

अध्यात्मवर्जितशास्त्रं संसारवर्धकं भवति-

धनिनां पुत्रदारादि, यथा संसारवृद्धये ।
तथा पाण्डित्यदृप्तानां, शास्त्रमध्यात्मवर्जितम् ॥२३॥

'धनिनां पुत्रदारादि यथासंसारवृद्धये' इति=यथा समृद्धिशालिनां पुत्रश्च दाराश्चादिना शरीरपरीवारयौवनप्रभुतासांसारिकसुखसाधनसामग्रीमात्रं च, 'यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता, एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्' इति श्लोकोक्तिवदनर्थाय-संसारस्य वृद्धये भवति, 'तथा पाण्डित्यदृप्तानामध्यात्मवर्जितं शास्त्र' मिति=तथा मिथ्यात्वदशायां पण्डितत्वमदमत्तात्महितकारितत्त्वविधायकताशून्यं शास्त्रं, भीषणचातुर्गतिकरूपानन्तजन्मजरामरणादिदुःखप्रचुरसंसारचक्रस्य वृद्धये भवति, 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयन' मिति श्लोकोक्तिवत् पुनः पुनर्जन्मादिचक्रं दुरन्तं वर्धते ॥२३॥

अध्यात्मशास्त्राध्ययनसंस्कारतदर्थानुष्ठानादिषु सत्प्रेरणाधीषणा

अध्येतव्यं तदध्यात्म-शास्त्रं भाव्यं पुनः पुनः ।
अनुष्ठेयस्तदर्थश्च, देयो योग्यस्य कस्यचित् ॥२४॥

'तदध्यात्मशास्त्रं पुनः पुनरध्येतव्यं भाव्यमिति=तस्मात्कारणाद् भूयोभूय आत्महितप्रदं शास्त्रं, अभ्यासविषयीकर्तव्यं, मनसि भावना-संस्कारविषयीकर्त्तव्यं, 'अनुष्ठेयस्तदर्थश्चेति=किञ्च शब्दरूपाऽध्यात्मशास्त्राध्ययनभावनादिद्वारा लब्धतात्पर्यरूपोऽर्थः (आत्मपरिणतिरूपोऽर्थोऽपि) आचारविषयीकर्त्तव्योऽर्थात् स्वजीवनसात् कर्तव्यो 'देयो योग्यस्य कस्यचिदि'ति यतो यादृशतादृशजनस्य प्रदानान्महती हानिरुभयत्र भवतीति ॥२४॥

इत्याचार्य श्रीमद्विजयलब्धिसूरीश्वरपट्टधर भुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्याया टीकायामध्यात्ममाहात्म्यनामक प्रथमोऽधिकार. समाप्त ॥



## द्वितीयोऽधिकारोऽध्यात्मस्वरूपनामकः—

प्रभो ? प्रथमाऽधिकारे भवद्भिः कथितं फलरूपमध्यात्ममाहात्म्यं सुचारुरूपेणाऽवगतमपि तु किंस्वरूपं तावदध्यात्ममिति विशेषतो जिज्ञासा जागर्ति, यतः फलस्वरूपहेतुत्रयविज्ञानादेकस्मिन्नपि साध्ये कार्ये सम्पूर्णोत्साहेन प्रयत्नो विधीयतेऽतस्तज्जिज्ञासोपशान्तये गुरुशिष्यप्रकारः प्रश्नोत्तररूपः प्रथमः श्लोकः प्रतन्यते ।

भगवन् किं तदध्यात्मं, यदित्थमुपवर्ण्यते ।
शृणु वत्स ! यथाशास्त्रं, वर्णयामि पुरस्तव ॥१॥

'भगवन यदित्थमुपवर्ण्यते तदध्यात्मं किमिति=हे पूज्य ! एतादृशमनीदृशमध्यात्ममाहात्म्यं भवद्भिः स्तूयते तदध्यात्मं किं ? अर्थात् किं क्रियामात्रलक्षणं ? किं ज्ञानमात्रलक्षणं ? किं ज्ञानक्रियोभयलक्षणं ? किंवाऽन्यलक्षणं कथ्यते ? तन्निरुच्यतां कृपया, वत्स ! शृणु यथाशास्त्रं वर्णयामि पुरस्तवे'ति=हे जिज्ञासो ! शिष्य ! कर्णं दत्त्वा श्रवणोत्सुको भव तवाऽग्रतोऽहं शास्त्रमनतिक्रम्य तदध्यात्मस्वरूपं कथयन्नस्मीति ॥२५॥

अध्यात्मस्वरूपनिर्णयः—

गतमोहाधिकाराणा-मात्मानमधिकृत्य या ।
प्रवर्तते क्रिया शुद्धा, तदध्यात्मं जगु र्जिनाः ॥२॥

'आत्मानमधिकृत्येति=सच्चिदानन्दमयमात्मानमुद्दिश्य-लक्ष्यीकृत्य या शुद्धा='यस्मात् क्रियाः प्रतिफलन्ति न भावशून्याः' इति वचनाद् भावशुद्धिमपेक्ष्याऽथवा 'वचनसापेक्षव्यवहारसाचो कल्यो इत्यानन्दघनमहर्षिवचनाज्जिनवचनसापेक्षसत्यव्यवहारशुद्धिमपेक्ष्य शुद्धा, 'गतमोहाधिकाराणामिति=गतो मोहस्याधिकारः-सत्ता येषां, तेषां विनष्टमोहमहाराजसत्ताकानां मन्दीभूतमोहबलवज्जनानां चाऽऽत्माधिकारप्रविष्टानां 'प्रवर्त्तते क्रिया शुद्धा तदध्यात्मं जगुर्जिनाः' इति=पूर्वोक्तस्वरूपा शुद्धा क्रिया प्रवर्त्तमाना यदा भवति, तदध्यात्म, जिनाः कथयन्ति स्म तथाच गतमोहाधिकारकपुरुषकर्त्तृकात्मोद्देशकज्ञानभावादिप्रयुक्तक्रियावत्त्व भावाऽध्यात्मलक्षणमायातमिति ॥२॥

सर्वेषु योगेष्वध्यात्मतत्त्वव्यापकता वर्तते

सामायिकं यथा सर्वचारित्रेष्वनुवृत्तिमत् ।
अध्यात्मं सर्वयोगेषु, तथाऽनुगतमिष्यते ॥३॥

यथा सामायिकं सर्वचारित्रेष्वनुवृत्तिमदिति=सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातादिसर्वचारित्रभेदेषु यथा सामायिकमनुवृत्तिमद्-व्याप्तिमद् भवति, 'तथा सर्वयोगेष्वध्यात्ममनुगतमिष्यते' इति=तथा मोक्षोपायभूतेषु सर्वेषु भेदप्रभेदभिन्नेषु योगेषु, अध्यात्ममनुगतं मालायां गुणवदनुस्यूतं व्याप्तं मन्यते इति ॥३॥

**सर्वगुणस्थानेष्वध्यात्ममयक्रियाया व्यापकता**

अपुनर्बन्धकाद् यावद् गुणस्थानं चतुर्दशम् ।
क्रमशुद्धिमती तावत्, क्रियाऽध्यात्ममयी मता ॥४॥

'अपुनर्बन्धकाद् यावत् गुणस्थानं चतुर्दशमिति=प्रथमगुणस्थानकीयाऽपुनर्बन्धकशात आरभ्य चतुर्दशगुणस्थानपर्यन्ता यावती धार्मिकी क्रिया विद्यते सोत्तरोत्तरमधिकाऽधिकं विशुद्ध्यमाना तावती क्रमतः शुद्धिविशिष्टा क्रियाऽध्यात्मप्राचुर्यवत्त्वेन सर्वथाऽभीष्टा–सर्वशिष्टपुरुषपुङ्गवैः सम्मता ॥४॥

**का कीदृशी केन वा कृता क्रियाऽध्यात्मवैरिणी भवति तस्या निरूपणम्**

आहारोपधिपूजर्द्धि–गौरवप्रतिबन्धतः ।
भवाभिनन्दी यां कुर्यात् क्रियां साऽध्यात्मवैरिणी ॥५॥

'भवाभिनन्दी यां क्रियामाहारोपधिपूजर्द्धिगौरवप्रतिबन्धतः कुर्यादि'ति=वक्ष्यमाणस्वरूपो भवाऽभिनन्दी विचित्रजीवः, 'आहारतः'=सद्भक्ष्यभोजनरमाऽऽसक्तितः, 'उपधितः'=वस्त्रपात्रादिरूपोपधिमूर्च्छातः, 'पूजातः'=सन्मानसत्कारादिपूजाबुद्धितः, 'ऋद्धितः'=आमर्षौषधीप्रभृतिलब्धिऋद्धीनां

मदतः, ऋद्धिरससातरूपगौरवत्रयस्य प्रतिबन्धतः–ममत्वतः यां क्रियां कुर्यात् 'साऽध्यात्मवैरिणी' ति= अध्यात्मस्वरूपमात्रप्रतिबन्धिकोच्यते, भवाऽभिनन्दिना भौतिकसुखकाम्यया बाह्याचाररूपा धार्मिक क्रिया-ऽपि क्रियमाणाऽध्यात्मं नियमतः प्रतिबध्नात्येव ॥ ५ ॥

### भवाऽभिनन्दिनः स्वरूपम्

**क्षुद्रो लोभरतिर्दीनो, मत्सरी भयवान् शठः ।**
**अज्ञो भवाऽभिनन्दी स्यान्निष्फलारम्भसङ्गतः ॥ ६ ॥**

'क्षुद्रः'=अगम्भीरताकृपणतासंकुचितताऽऽदिदोषदुष्टः, 'लोभरतिः'=मांसारिकसुखतत्सामग्रीमात्र विषय काऽसंतोषसंयुतः, 'दीनः'=इष्टस्याऽप्राप्तित इष्टवियोगतश्च दीनतासम्पन्नः, 'मत्सरी'=अन्यस्य शुभं दृष्ट्वा हृदयदाहदग्धः, 'भयवान्' पापाचारतो निरन्तरं भयशङ्काव्याप्तः, 'शठ'=मायाकरणपटुः, 'अज्ञः' मौर्ख्यतो बालिशः 'निष्फलारम्भसङ्गतः'=कुतत्त्वविषयकाग्रहबलेन निष्फलक्रियासु सर्वथा लग्नो यो भवति स भवाऽभि-नन्दी'=भवं निसर्गनिःसारमपि मिष्टान्नादिललनादिभोगोपभोगाभ्यां सारभूत मन्यमानस्तत्रैव रसिकतया रममाणो भवाऽभिन्दी कथ्यते ॥ ६ ॥

॥ २३ ॥

### अध्यात्मगुणस्य वृद्धिकारिका क्रिया

शान्तो दान्तः सदा गुप्तो, मोक्षार्थी विश्ववत्सलः ।
निर्दम्भां यां क्रिया कुर्यात् साऽध्यात्मगुणवृद्धये ॥७॥

'शान्तः'=क्रोधादिमोहेनाऽसंस्पृष्टः, 'दान्तः'=इन्द्रियादिजन्यविषयैरपराजितः, सदागुप्तः'=सुरक्षितयोगत्रयो वा गुप्तित्रयाऽन्वितः, 'विश्ववत्सलः'=विश्ववर्त्तिजीवमात्रं प्रति वात्सल्यपरिपूतः, 'मोक्षार्थी' मुक्तिमात्रप्रयोजनवानन्तरात्मा, यां दम्भरहितां क्रियां कुर्यात् साऽध्यात्मनामकगुणस्य वृद्धिकारिका भवेदिति ॥७॥

### क्रमशो दर्श्यमानाऽध्यात्मक्रियाया असङ्ख्यकर्मनिर्जराकारित्वम्

अत एव जनः पृच्छोत्पन्नसञ्ज्ञः पिपृच्छिषुः ।
साधुपार्श्वं जिगमिषु धर्म्मं पृच्छन् क्रियास्थितः ॥८॥
प्रतिपित्सुः सृजन् पूर्वं, प्रतिपन्नश्च दर्शनम् ।
श्राद्धो यतिश्च त्रिविधोऽनन्तांशक्षपकस्तथा ॥९॥

दृङ्मोहक्षपको मोह—शमकः शान्तमोहकः ।
क्षपकः क्षीणमोहश्च, जिनोऽयोगी च केवली ॥१०॥
यथा क्रमममी प्रोक्ता असङ्ख्यगुणनिर्जराः ।
यतितव्यमतोऽध्यात्म-वृद्धये कलयाऽपि हि ॥११॥

'अतएव जनः'=अध्यात्मक्रियातद्वृद्धिहेतुतत्प्रतिबन्धकादिनिरूपणाऽनन्तरमेवाऽध्यात्मरुचिर्जनः, सम्यग्दर्शनप्राप्तिरूपप्रथमगुणश्रेण्या अवान्तरभेदरूपाः सप्ताऽध्यात्मक्रिया दर्श्यन्ते, तदनन्तरं देशविरतिरूपद्वितीयगुणश्रेण्या अवान्तरविभागरूपास्तिस्रोऽध्यात्मक्रिया दर्श्यन्ते, एवं सर्वविरत्याद्येकादशगुणश्रेणिषु दर्श्यमानाऽध्यात्मक्रिया असङ्ख्यगुणनिर्जरा इति क्रमतो वर्ण्यन्ते तथाहिः—प्रथमगुण श्रेण्या अवान्तरीभूताः सप्ताऽध्यात्मक्रियाः—(१) 'पृच्छोत्पन्नसंज्ञः'=धर्मं प्रष्टुमुत्पन्ना ज्ञानाऽऽत्मकसंज्ञा यस्य स जनः 'पृच्छोत्पन्नसंज्ञकः' उच्यते (२) 'पिपृच्छिषुः'=प्राग्ग् जानाति पश्चादिच्छति-धर्मप्रश्नज्ञानानन्तरं धर्मपृच्छेच्छा भवति, प्रष्टुं येच्छा. तद्विशिष्टः, (३) 'साधुपार्श्वं जिगमिषुः=गीतार्थगुरोः सन्निधिं गन्तुमिच्छुः (४) 'धर्म्मं पृच्छन् क्रियास्थितः'=विनयादिक्रियायां स्थित्वा धर्मविषयकप्रश्नकरणे वर्त्तमानः, (५) 'प्रतिपित्सुः'=सम्यग्दर्शनधर्मं प्रतिपत्तुमिच्छुः, (६) 'सृजन् पूर्वं'=सम्यग् दर्शनप्रतिपत्तिक्षणे

सम्यग्दर्शनं प्रतिपद्यमानः, (७) 'प्रतिपन्नश्च दर्शनम्'=सम्यग् दर्शनधर्मप्रतिपत्तिविशिष्टः सम्यग् दर्शनीति प्रथमगुणश्रेणिः द्वितीयगुणश्रेण्या अवान्तरीभूतभेदरूपास्तिस्रोऽध्यात्मक्रियाः–(१) देशविरति धर्मप्रतिपित्सुः, (२) देशविरतिधर्मप्रतिपत्तिः (३) देशविरतिधर्मं प्रतिपन्नः, इति द्वितीयगुणश्रेणिः। एवं (१) [3]यतिधर्मप्रतिपित्सुः (२) सर्वविरतिधर्मप्रतिपत्तिः (३) यतिधर्मं प्रतिपन्नः, इति तृतीय गुणश्रेणिः। 'त्रिविधोऽनन्तांशक्ष[4]पकः=त्रिविध इति पदमग्रेऽपि गुणश्रेण्यां योज्यम्, (१) अनन्तानुबन्धिकषायक्षपणेच्छुः (२) तत् क्षपणप्रतिपत्तिः (३) तत् क्षपणां प्रतिपन्न इति चतुर्थी गुणश्रेणिः 'दृ[5]ङ् मोहक्षपकः'= (१) दर्शनमोहक्षपणप्रतिपित्सुः, (२) दर्शनमोहक्षपणां प्रतिपद्यमानः (३) दर्शनमोहक्षपणां प्रतिपन्नः, इति दशात्रयवती पञ्चमी गुणश्रेणिः, 'मोहश[6]मकः'=तदनन्तरं मोहनीयकर्मणः शेषैकविंशतिप्रकृतीनामुपशामको भवेदिति षष्ठी गुणश्रेणिः 'शान्तमोहकः'=मोहनीयैकविंशतिप्रकृत्युपशान्तिनामकाऽवस्थासम्पन्नः, इति सप्तमी गुणश्रेणिः। 'क्षपकः'=मोहनीयैकविंशतिप्रकृतिक्षपणाकरणपरः, मोहक्षपणावस्थासम्पन्न इत्यष्टमी गुणश्रेणिः, 'क्षीणमोहः'=यदाऽऽत्मा मोहक्षयकारको भवेत्तदा तस्य महात्मनः क्षीणमोहाऽवस्थारूपा नवमी गुणश्रेणिः, 'जिनः'=सयोगी केवलीजिनः; इति दशमी गुणश्रेणिः, 'अयोगी'[7]च केवली=चतुर्दशगुणस्थानवर्ती, अयोगी केवलीतिकथ्यते इत्येकादशी गुणश्रेणिः, इत्येवं प्रत्येकाध्यात्मक्रियाया या अवस्थाः प्रोक्तास्ता उत्तरोत्तरं (क्रमशः) असङ्ख्यातगुणनिर्जरावत्यो भवन्ति, अतोऽध्या-

त्मवृद्धिकृते कलयाऽप्यंशतोऽपि सातत्येन प्रयत्नवता भाग्यवता भाव्यमित्युपदेशलेशः ॥८-९-१०-११॥

अंशद्वयाऽऽत्मकाऽध्यात्मस्वरूपम्–

ज्ञानं शुद्धं क्रिया शुद्धे-त्यंशौ द्वाविह सङ्गतौ ।
चक्रे महारथस्येव पक्षाविव पतत्त्रिणः ॥ १२ ॥

'ज्ञानं शुद्धं'=भावादिना, प्रकाशकत्वादिना वा सम्यग् ज्ञान मित्येकोंऽशः, 'क्रिया शुद्धा'=अविध्यादिदोषरहिता क्रिया समीचीनेति द्वितीयोंऽशः, इहांशौ द्वौ सङ्गतौ'=अध्यात्मतत्त्वे, शुद्धज्ञानक्रियाऽऽत्मकौ द्वित्वविशिष्टौ नत्वेकः, अतो द्वावंशौ–भेदाऽऽत्मकप्रदेशौ, अभेदेन योगमन्तौ, शुद्धज्ञानक्रियाऽऽत्मकांशद्वयाऽभिन्नमध्यात्ममित्यायातम्, 'चक्रे महारथस्येव'=यथा महारथस्य चक्रद्वयं सङ्गतमन्यथा महारथस्य गतिर्न स्यादिति, पक्षाविव पतत्त्रिणः'=यथा पक्षिणः पक्षौ सङ्गतौ यतः पक्षद्वयशून्यत्वेन पक्षिणो विहायसि गमनमसिद्धं स्यादिति, तथा शुद्धज्ञानक्रियाद्वयाभावेनाऽध्यात्मतत्त्वस्याऽसिद्धिरेव, शुद्धज्ञान क्रियाद्वयसत्त्वेनैवाऽध्यात्मसत्ता, नाऽन्यथेति ॥१२॥

अध्यात्मविषयकमान्यतायां नयविभागः

तत्पञ्चमगुणस्थानादारभ्यैवैतदिच्छति ।
निश्चयो, व्यवहारस्तु पूर्वमप्युपचारतः ॥१३॥

'निश्चयः, तत्पञ्चमगुणस्थानादारभ्यैवैतदिच्छति'=निश्चयनयः, पञ्चमगुणस्थानादारभ्य शुद्धज्ञान-क्रियाऽऽत्मकमध्यात्ममस्ति, तस्मात् कारणाद् देशविरतिनामकपञ्चमगुणस्थानमवधीकृत्याऽभिव्याप्य यावच्चतुर्दशं, प्रत्यक्षतो निरूपितमध्यात्मं मन्यते, परन्तु व्यवहारस्तु प्रथमगुणस्थानीयाऽपुनर्बन्धकावस्थायां चतुर्थगुणस्थानीयाऽविरतसम्यग्दृष्टिदशायां चाऽध्यात्मं मन्यते, यतः पञ्चमगुणस्थानादिसत्काध्यात्मक्रिया-रूपं कार्यं प्रति, अपुनर्बन्धकीयाविरतसम्यग् दृष्टिसत्कशुभक्रियाः कारणम् , अतः कारणे कार्यस्योप-चारं कृत्वाऽध्यात्मं मन्यते इति व्यवहारनयमतम् ॥१३॥

व्यवहारनयः स्वमतं समर्थयते

चतुर्थेऽपि गुणस्थाने, शुश्रूषाद्या क्रियोचिता ।
अप्राप्तस्वर्णभूषाणां रजताऽऽभूषणं यथा ॥१४॥

'चतुर्थेऽपि गुणस्थाने शुश्रूषाद्या क्रियोचिता'=यद्यपि विरतिसम्बद्धा उच्चतमक्रिया अत्र न सम्भवन्ति तथाऽपि चतुर्थगुणस्थानीया धर्मशास्त्रश्रवणतीव्ररागचारित्रधर्मविषयकतीव्राभिलाष-जिनसाधुसेवानियमा-दिरूपा उचिताः—शुभक्रियाः सम्भवन्त्येव तथाऽत्र सम्भवन्तीः शुभक्रिया निषेद्धुं कोऽलं प्रभवेदर्थान्न कोऽपि, 'यथाऽप्राप्तस्वर्णभूषाणां रजताऽऽषण'=सौवर्णभूषणप्राप्तिशून्यानां रजतसत्कमाभूषणमुचितं

तथाऽत्रापि विरतिसम्बन्धिशुभक्रियाया अभावेऽपि चतुर्थगुणस्थानीयजैनशासनप्रभावनादिशुभक्रिया युक्तियुक्तैवेति ॥१४॥

पुनरपि व्यवहारनयः स्वमतं समर्थयते

अपुनर्बन्धकस्याऽपि या क्रिया शमसंयुता ।
चित्रा दर्शनभेदेन, धर्मविघ्नक्षयाय सा ॥१५॥

यथा चतुर्थे गुणस्थाने सुदेवसुगुरुसुधर्मसेवादिक्रियारूपमध्यात्मं वर्त्तते, तथा प्रथमगुणस्थानीयाऽपुनर्वन्धकाऽवस्थासम्पन्न आत्माऽपि (अतः परं भवचक्रे कदाचिदपि सप्ततिकोटाकोटीसागरोपमप्रमाणां मोहनीयकर्मण उत्कृष्टस्थिति न पुनर्वध्नातीत्येवं शीलोऽपुनर्बन्धक उच्यते) शमसंवेगादिरूपान्तरक्रियावान् सम्भवति, 'चित्रा दर्शनभेदेन, धर्मविघ्नक्षयाय सा'=सा=शमादि संयुता क्रियाऽपि दर्शनभेदेन चित्रा=अनेकरूपा मती 'धर्मविघ्नक्षयायेति'=विरत्यादिरूपधर्मप्राप्तौ, आगन्तुकविघ्नानामन्तरायाणां ध्वंसकरणद्वारा विरतिक्रियात्मकमध्यात्मं प्रति पूर्वोक्तक्रिया कारणं भवति, व्यवहारस्तूपचारप्रधानोऽस्ति, तस्मात् स्वमते कार्यभूतविरतिक्रियारूपाऽध्यात्मं प्रति तत्कारणभूतशमादिक्रियाऽप्यध्यात्माऽऽत्मिकैवेति मन्यते व्यवहारनयेनाऽपुनर्वन्धकादावप्यध्यात्मसिद्धिः कृतेति ॥१५॥

अशुद्धाऽपि क्रिया शुद्धक्रियाया अपेक्षया कारणम्

अशुद्धाऽपि हि शुद्धाया क्रियाहेतुः सदाशयात् ।
ताम्रं रसाऽनुवेधेन स्वर्णत्वमधिगच्छति ॥१६॥

ननु अपुनर्वन्धकाद्यात्मनां क्रिया न सम्यग्ज्ञानपूर्विका, यदशुद्धिभूयस्त्वभृताऽशुद्धक्रिया, विरतिधर्मरूपशुद्धक्रियां प्रति कथं हेतुः स्यात् , हेतोरभावात् कारणे कार्योपचारन्यायस्यापितु का वार्तेति चेन्न 'अशुद्धाऽपि हि शुद्धायाः क्रियाहेतुः सदाशयात्'=मोक्षविषयकाऽभिलापरूपशुभाशयं प्रतीत्याऽर्थात् संवेगरसातिशयसहिताऽशुद्धक्रियाऽपि शुद्धक्रियां प्रति हेतु र्भवत्येव, यथा ताम्रं धातुवादसम्बन्धिशास्त्रोक्त विधिना सुवर्णरसमनुविध्य सुवर्णभावं प्राप्नोति, ताम्रं सुवर्णं भवति, तथाऽत्रापि, अशुद्धक्रियास्थानीयं ताम्रं सुवर्णरसस्थानीयो मोक्षाऽभिलापः, तथा शुद्धक्रियास्थानीयं सुवर्णं बोध्यमिति ॥१६॥

पूर्वकथितं विषयं द्रढयति

अतो मार्गप्रवेशाय, व्रतं मिथ्यादृशामपि ।
द्रव्यसम्यक्त्वमारोप्य, ददते धीरबुद्धयः ॥१७॥

'अतो धीरबुद्धयो मिथ्यादृशामपि'=अशुद्धाऽपि क्रिया, सदाशयाद् , शुद्धक्रियाहेतु र्भवतीति वस्तु लक्ष्यीकृत्य, निश्चलबुद्धिविशिष्टा गीतार्थगुरुवः, मिथ्यादृष्टीनामपि, अपिनाऽन्येषां तु का वार्त्तेत्यर्थः, मार्ग-

प्रवेशाये' ति=मोक्षमार्गरूपाऽध्यात्ममार्गे, प्रवेशमुद्दिश्य, 'द्रव्यसम्यकत्वमारोप्य व्रतं ददते' इति=सुदेवादे-विषयकद्रव्यसम्यकत्वस्याऽऽरोपणं कृत्वा पश्चादणुमहाव्रतादिकं व्रतमात्रमर्पयन्ति नाऽन्यथेति ॥१७॥

व्रताय योग्यताविशेषस्य वर्णनम्

**यो बुद्ध्वा भवनैर्गुण्यं, धीरः स्याद् व्रतपालने ।**
**स योग्यो भावभेदस्तु, दुर्लक्ष्यो नोपयुज्यते ॥१८॥**

'यो भवनैर्गुण्यं बुद्ध्वा व्रतपालने धीरः स्यात्स योग्यः'=संसारोऽयमसारः प्रकृतितो निर्गुणो-नीरस इति सम्यग् ज्ञानबलेन जानन्–जाग्रत् , व्रतपालनविषये धीरः 'विरुद्ध हेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इत्यभियुक्तोवतेः, विरुद्धनिमित्तोपस्थितावपि सुनिश्चलचेताः पुण्याऽऽत्मा व्रतदान योग्यो भवति, नाऽन्यो वैराग्यविरहितो योऽधीरः कश्चिदपि भवाभिनन्दी, ननु विरतिरूपोऽन्तरङ्गभाव आत्मनि स्पृष्टो नवास्पृष्ट इति चिन्तनीय एवेति चेदाह 'भावभेदस्तु दुर्लक्ष्यो नोपयुज्यते'=अस्मादृशां छद्मस्थानामान्तरो भावविशेषो ज्ञातुमशक्योऽस्ति, भावभेदस्य दुर्लक्ष्यत्वाद् , व्रतविषयिणीं योग्यतां ज्ञातुं भावविशेषो नोपयोगविषयो भवति, अत एव पूर्वोक्तभवनैर्गुण्यज्ञानपूर्वकं व्रतपालनधैर्यं दृष्ट्वैव व्रतदानस्य योग्यता निर्णयपथं नेयेति ॥१८॥

भावेभेदं संलक्ष्य दीक्षादानस्य सिद्धान्तीकरणे प्रत्युत दीक्षाऽदानापत्तिः

नो चेद् भावाऽपरिज्ञानात्, सिद्ध्यसिद्धिपराहतेः ।
दीक्षाऽदानेन भव्यानां, मार्गोच्छेदः प्रसज्यते ॥१९॥

प्रथमं तावदभिमुखभव्यक्तौ यदा शुभ आन्तरो भावो ज्ञातश्चेत्तदा तस्य दीक्षादानं, न ज्ञातश्चेत्तदा दीक्षाया अदानमित्याग्रहे सति, अस्मादृशां छद्मस्थानामान्तरो भावो ज्ञातुमशक्यत्वाद् दीक्षाया अदानापत्तिः, (१) अन्यत्तु यस्य विरतिपरिणामो ज्ञातश्चेत्तदा तस्य दीक्षादानं परन्तु तत्र विरतिपरिणामो वर्त्तते नवा तज्ज्ञातुमशक्यं, यद्येवं तदा द्विधा काठिन्यमापतति, एकं तावद्, यत्राऽऽत्मनि विरतिरूप आन्तरो भावः सिद्धश्चेत्तदा तस्य दीक्षादानमनावश्यकम्, यतो यस्य सिद्धिर्जाता, तस्य का साधना ?, साधनात्वसिद्धसाधनरूपा, द्वितीयं तावद् यत्राऽत्मनि विरतिरूपो भावो न सिद्धः, तस्य तु सुतरां दीक्षादानमशक्यं यत आन्तरं भावमज्ञात्वा दीक्षादानं भवन्तो निषेधयन्ति, अर्थाद् भावस्य सिद्धौ चासिद्धौ द्विधा भव्याना दीक्षादानस्य सर्वथा प्रतिबन्धोऽतो दीक्षामार्गस्योच्छेदापत्तिः (२) तस्माद् व्रतस्य योग्यताया निर्णयो भावपरिज्ञानेन न कर्त्तव्योऽपितु भवनैर्गुण्यव्रतपालनधैर्याभ्यां कर्त्तव्य इति ॥१९॥

अभ्यासदशायामशुद्धक्रियाया अनादरो न कर्त्तव्यः

अशुद्धाऽनादरेऽभ्यासा-योगान्नो दर्शनाद्यपि ।
सिद्ध्येन्निसर्गजं मुक्त्वा, तदप्याभ्यासिकं यतः ॥२०॥

यद्येवंरीत्याऽशुद्धक्रियाया अनादरे बालजीवेषु क्रियाया योऽभ्यासः सोऽसिद्धः स्याद् यतोऽभ्यासकालीना क्रिया तु अशुद्धैव स्याद् यद्येवंरीत्याऽभ्यासकालीनक्रियाऽसिद्धा भवेत्तदा नैसर्गिकसम्यक्त्वं विहाय शेषाऽधिगमसम्यक्त्वाद्यपि, असिद्धं भवेद् यतोऽधिगमसम्यक्त्वाद्यपि, अभ्यासदशयैव साध्यमस्ति-(निसर्गसम्यक्त्वादि. तद्भवीयामभ्यासदशां विना प्राप्यते) अभ्यासकालीनाऽशुद्धाऽपि क्रियाऽभ्यासदशायामादरणीयैव यतो मोक्षाऽभिलाषरूपसदाशयपूर्विका, अशुद्धाऽपि क्रिया, शुद्धक्रियां प्रति हेतुभूत्वाऽध्यात्मस्वरूपा भवति ॥२०॥

दीक्षादातृत्वविशिष्टगुरौ दोषसम्भवाऽभावः-

शुद्धमार्गानुरागेणा-शठानां या तु शुद्धता ।
गुणवत्परतन्त्राणां, सा न क्वाऽपि विहन्यते ॥२१॥



दम्भिनां दीक्षादानेऽथवाऽयोग्यस्य योग्यकथने गुरौ कथं न मृषावादोऽथवा विरतिपरिणामाऽभावे निर्दम्भस्याऽपि दीक्षादाने मृषावादादिदोषः कथं न ? विरतिपरिणामशून्यस्य विरतिपरिणामभावकथनं कथं न

मृषावादः ? इत्यादिप्रश्नानुत्तरयति, 'शुद्धमार्गोऽनुरागेणाऽशठानां या तु शुद्धता, गुणवत्परतन्त्राणां न क्वापि विहन्यते' इति=जिनेन्द्रप्रवचननिष्ठदृढतमाऽनुरागेण, येऽशठाः—मायाप्रयोगतः शून्याः सरलाः, ये च गुणगणसम्पन्नगुरुवर्गादिपराधीनास्तेषां विशिष्टगुरूणां या निर्दोषताऽस्ति सा क्वापि-तादृशदीक्षादानादिप्रसङ्गेऽपि न विहन्यते=न विघातविषया भवति, अर्थादेतादृशगुरौ मृषावादादिदोषरूपाऽशुद्धिर्न सम्भवतीति ॥२१॥

त्रिधा कर्म शुद्धं भवति

विषयाऽऽत्माऽनुबन्धैर्हि, त्रिधा शुद्धं यथोत्तरम् ।
ब्रुवते कर्म तत्राद्यं मुक्त्यर्थं पतनाद्यपि ॥२२॥

विषयाऽऽत्माऽनुबन्धैर्हि त्रिधा यथोत्तरं शुद्धं कर्म ब्रुवते'=(१) विषयशुद्धं कर्म=यस्य कर्मणो विषयः (साध्यो लक्ष्योवा) शुद्धो भवति, तत्कर्म विषयशुद्धं कथ्यते, यथा मोक्षं लक्षीकृत्य काशीं गत्वा करपत्रकमोचनादि, अत्र कर्मणो विषयो मोक्षोऽस्ति, स तु शुद्ध एव, तस्मात् कर्म विषयशुद्धं कथितं, (२) आत्म (स्वरूप) तः शुद्धं कर्म, (३) अनुबन्धशुद्धं कर्म, अनयो र्द्वयो वर्णनमग्रे वक्ष्यमाणमस्ति, ॥२२॥

द्वितीयमात्मशुद्धं कर्म, तृतीयं चानुबन्धशुद्धं कर्म

अज्ञानिनां द्वितीयं तु, लोकदृष्ट्या यमादिकम् ।
तृतीयं शान्तवृत्त्या तत्, तत्त्वसंवेदनाऽनुगम् ॥२३॥

'अज्ञानिनां द्वितीयं तु लोकदृष्ट्या यमादिकम्'=यत्कर्मणः स्वस्वरूपं लोकदृष्ट्या शुद्धमस्ति, तत्कर्म, स्वरूपशुद्धं कथ्यते, अज्ञानिनां=सम्यग् ज्ञानशून्यानामात्मनां यमनियमादिकर्म, तत्सर्वं स्वरूपशुद्धं' अत्र यमनियमादिकर्माणि स्वतः (स्वरूपतः) शुद्धान्येव (३) 'तृतीयं शान्तवृत्त्या तत्, तत्त्वसंवेदनाऽनुगम्'=यत्र चित्तस्य प्रशान्तवाहिता स्याद्, यो ज्ञेयं ज्ञेयत्वेन, हेयं हेयत्वेनोपादेयमुपादेयत्वेन जानाति, यश्च हेयस्य हानमुपादेयस्योपादानं प्रतिपद्यते, तस्य सर्वविरतस्यात्मनः, तत्त्वसंवेदननामकतृतीयं [ज्ञानपूर्वकं यत्कर्म, तदनुबन्धशुद्धं कर्म, अनेन कर्मणोत्पद्यमानशुभकर्मादेः परम्पराऽपि शुद्धा भवति, तस्मादेतत्कर्माऽनुबन्धशुद्धं कथ्यते, इदमत्र हृदयम्, तत्राऽनुबन्धो नाम भावस्य बीजभूता शक्तिः, शुभानुबन्धो नाम शुभभावजनिका बीजशक्तिः, अशुभानुबन्धो नामाशुभभावकारिका बीजभूजा शक्तिः, भावाऽऽत्मकधर्मजन्यकर्मानुबन्धेनैव स्थितप्रज्ञता प्राप्यते, अतएवाऽऽध्यात्मिकविशालवर्तुलस्यातिसूक्ष्मो मध्यबिन्दुस्तु तद्भावाऽऽत्मकं शुभं मन एवाऽस्ति यदा यस्यां यादृश्यां तादृश्यां पुण्यपापयो बाह्यक्रियायामनुबन्धस्तु पुण्यस्य सत्को भूत्वाऽन्ततः शान्तिं समाधिं मुक्तिञ्चामोघां ददात्येव, अन्यच्च कदाचिदात्मा कर्मणो निकाचितं बन्धं करोति, तदा ते कर्मबन्धा उदयाऽऽगमनं विना न चलन्ति यतो निकाचितबन्धस्योपरि करणाष्टकमध्यतः किमपि करणं न लगति, परन्त्वनुबन्धस्य वार्त्ताऽतो विपरीतैव, यतो निकाचितकर्मबन्धस्तु न त्रुट्यति, तथाऽपि कदाचिदस्यानुबन्धास् त्रुटयन्ति एवमुपमितिकारेणोक्तं हि 'त्रिपृष्ठ

वासुदेवभवमध्ये भगवता महावीरदेवाऽऽत्मना शय्यापालकस्य कर्णयो र्धग्धगायमानसीसकस्य रसो निक्षिप्तस्तदा पापानुबन्धिपापकर्म निकाचितं कृतं स कदाचिन्निकाचितकर्मबन्ध आसीत्, तस्मान्नन्दनर्षिमत्कपञ्चविंशतितमभवस्य घोरतमसाधनाकाले स उदयं नागतश्चातः सप्तविंशतितमे भवे कर्मैतत् पूर्णबलेनोदयमागतश्च ततः कर्णमध्ये कीलका लग्नाः, परन्तु तदा परमात्मनेषदपि नैव दुर्ध्यातम्, वस्तुत एतत्पापकर्म, पापानुबन्धिपापकर्मासीत्, अर्थादस्योदयेऽवश्यं दुर्ध्यानं भाव्यम्, परन्तु परमात्मना, प्रागेव तपस्त्यागरूपया घोरतमसाधनयैषोऽनुबन्धस् त्रोटित आसीदेवाऽत एव निकाचितपापकर्मणो बन्ध उदयमागतोऽप्यस्य पापाऽनुबन्धो निष्फलतां गतः । तत्त्वसंवेदनज्ञानं=यत्तत्त्वं यद्रूपेणास्ति तद्रूपेण=हेयहानादिरूपेण परिणतिमज्ज्ञानं तत्तत्त्वसंवेदनरूपज्ञानं सर्वविरतस्यैव भवति ॥२३॥

किं कर्माणि त्रीण्येव शुद्धानि, अथवैकं वा द्वयमिति शङ्काया निराकरणम्—

आद्यान्नाज्ञानबाहुल्या-न्मोक्षबाधकबाधनम् ।
सद्भावाशयलेशेनो-चितं जन्म परे जगुः ॥२४॥

विषयशुद्धं कर्म, विषयाऽपेक्षया शुद्धमस्तु, तथाऽपि तदध्यात्मस्वरूपं न कथ्यते; यत एतत्कर्मवत्यात्मनि, अज्ञानस्य मात्रा प्रचुरा विद्यतेऽविद्यायाः प्रबलः प्रभावोऽस्ति, अतो ये मोक्षस्य बाधकाः-प्रतिबन्धका योगाः (संसारभावाः) तेषां बाधनस्य—निराकरणस्य सामर्थ्यं नास्त्येव, यद्येतत्कर्मणि सामर्थ्यं

स्यात्तदाऽनुबन्धशुद्धकर्मणः कारणभवनद्वारैतत्कर्माऽध्यात्मस्वरूपं भवेत् परन्त्वेवं नास्त्येव 'सद्भावाशयलेशेनोचितं जन्म परे जगुः' इति=परे-केचिदेवं कथयन्ति हि यद्यपि विषयशुद्धं कर्म; मोक्षं प्रति स्वतः कारणं न भवति, तथाऽपि तत्कर्मणि मोक्षाऽभिलाषरूपसद्भावाशयलेशो विद्यते एव तस्माज्जन्मान्तरे मोक्षानुकूलकुलजात्यादि विशिष्टस्थाने जन्म भवति, ततो मोक्षः प्राप्यते, इति मोक्षाऽनुकूलकर्म प्रति विषयशुद्धकर्म कथं कारणं न भवेत्, इति परेणोक्तं वचनं प्रति ग्रन्थकारस्य परमाऽरुचिर्ज्ञायते यतो विषयशुद्ध कर्माऽत्यन्तमावद्यं भवति तदत्यन्तनिरवद्यमोक्षं प्रति हेतुः कथं समर्थो भवेत्, सामान्येन निरवद्यकार्यं प्रति निरवद्यकारणं भवति, परन्तु कर्मकर्त्तर्याऽऽमनि, निरवद्यमोक्षाऽभिलाष एव हेतुरस्त्येवं कथनीयमेव ॥२४॥

द्वितीयाद्दोषहानिः कीदृशो' ? तृतीयाच्च दोषहानिः कीदृशी ?

द्वितीयाद्दोषहानिः स्यात्, काचिन्मण्डूकचूर्णवत् ।
आत्यन्तिकी तृतीयात्तु, गुरुलाघवचिन्तया ॥ २५ ॥

'द्वितीयाद्दोषहानिः स्यात्, काचिन्मण्डूकचूर्णव'दिति=द्वितीयात् स्वरूपशुद्धकर्मतः, काचिदंशतो दोषहानि र्भवति, यथा मृतमण्डूकशरीरस्य कृतचूर्णं वालुकासु मिलितमपि यदा यदा मेघो वर्षति तदा तच्चूर्णस्य प्रत्येककणेभ्य एक एको मण्डूको जायते, एवमेकमण्डूकस्य तत्काले विनाशेऽपि वर्षाजल-

संस्पर्शेन मण्डूकानां लक्षमुत्पद्यतेऽर्थाज्जन्मान्तरेषु निमित्तप्राप्त्यनन्तरं युगपदनेके दोषा उद्भवन्ति, परन्तु 'आत्यन्तिकी तृतीयात्तु गुरुलाघवचिन्तया'=सर्वप्रयोजनेषु तत्तत्कालादिबलालोचनेन प्रारब्धुमिष्टेषु प्रथमत एव मतिमता गुरोः-भूयसो गुणलाभपक्षस्य, लघोश्च तदितररूपस्य भावो गुरुलाघवं तस्य चिन्तया (ततो बहुगुणप्रयोजने प्रवृत्तिः 'अप्पेण बहुमेसेज्जा एयं पडियलक्खणं, सव्वासु पडिसेवासु एव अट्ठपदं विऊ' अल्पेन बहु एषेत, एतत्पण्डितलक्षणं सर्वासु प्रतिषेवासु एतदर्थपदं विदुः)' तृतीयात्=अनुबन्धशुद्धकर्मतः, आत्यन्तिकी-सर्वथा सर्वदोषहानिः सञ्जायते यतोऽत्र शास्त्रीयगौरवलाघवसम्बन्धिज्ञानयोगो विद्यते यथा मण्डूकदेहचूर्णस्याग्निना भस्मीकरणं तथा लक्षशो वर्षाजलसंयोगेऽपि एकोऽपि मण्डूको नोत्पत्तुं शक्नोति ॥२५॥

स्वरूपसिद्धं कर्माऽध्यात्मस्वरूपमपि भवति–

अपि स्वरूपतः शुद्धा, क्रिया तस्माद् विशुद्धिकृत् ।
मौनीन्द्रव्यवहारेण, मार्गबीजं दृढादरात् ॥ २६ ॥

'तस्मादिति=मोक्षाऽभिलापरूपसदाशयादशुद्धाऽपि क्रिया, शुद्धक्रियाहेतुस्तदा त्वाऽध्यात्मस्वरूपा, ततः कारणाद् यमनियमादेः स्वरूपतः शुद्धक्रियाऽपि मोक्षं प्रति दृढादरवशात्, सम्यग् दर्शनादिरूप- मोक्षमार्गस्य बीजं भवति, तस्माद् दृढादरान्मुनीन्द्रजिनेन्द्रदेवसत्को निश्चयमुखो व्यवहारधर्मः प्राप्यते, ॥३८॥

तादृशव्यवहारधर्मत आत्मशुद्धिर्जायते, इत्येवमनुबन्धशुद्धकर्मवत, स्वरूपशुद्धं कर्माऽपि परम्परयाऽऽत्मविशुद्धिकरं भवति, तस्मात्तदध्यात्मस्वरूपं कथ्यते ॥२६॥

सदाशयाद् द्रव्यक्रियाऽप्यादरणीयैव तत्र हेतुर्दर्श्यते–

गुर्वाज्ञापारतन्त्र्येण, द्रव्यदीक्षाग्रहादपि ।
वीर्योल्लासक्रमात्प्राप्ता, बहवः परमं पदम् ॥ २७ ॥

अशुद्धाऽपि द्रव्यक्रिया सदाशयादादरणीयैवेति वस्तु सत्यमस्ति यतोऽनन्ता एतादृशा अध्यात्मानोऽभवन येषु केवलं गुरुपारतन्त्र्यनामकः सदाशय आसीद् यैश्च तत्सदाशययोगेनागणितदोषेऽपि द्रव्यदीक्षा गृहीता, तथापि तत्सदाशयकारणेनापूर्ववीर्योल्लासाऽऽविर्भावक्रमेण शुद्धक्रियां प्राप्यानन्ताऽऽत्मानो मुक्तिरूपं परमं पदं प्राप्ताः ॥२७॥

अध्यात्माऽभ्याससमयेऽपि क्रियाज्ञानसम्भवोक्तिः–

अध्यात्माऽभ्यासकालेऽपि, क्रिया काऽप्येवमस्ति हि ।
शुभौघसंज्ञाऽनुगतं, ज्ञानमप्यस्ति किञ्चन ॥ २८ ॥

अध्यात्माऽभ्यासदशायामपुनर्बन्धकादावपि, शमादियुता काचित्, शुद्धक्रिया सम्भवति, ज्ञानमपि

शुभौघसंज्ञाव्याप्तं किञ्चित् सम्भवति, शुभज्ञानमत्र वस्तुतत्त्वस्य विपर्यासविरहितं ज्ञेयम् , ओघज्ञानमत्र वस्तुतत्त्वस्य बहूना विशेषाणामवधारणाऽसमर्थमत एव सामान्यज्ञानमोघज्ञानं कथ्यते ॥२८॥

**ज्ञानक्रियारूपमेवाऽध्यात्मम्-**

अतो ज्ञानक्रियारूपमध्यात्मं व्यवतिष्ठते ।
एतत्प्रवर्धमानं स्यान्निर्दम्भाचारशालिनाम् ॥ २१ ॥

अपुनर्बन्धकादिदशावर्तिषु जीवेष्वपि ज्ञानक्रियारूपमध्यात्मं तिष्ठति, अत एव सर्वत्र गुणस्थानके ज्ञानक्रियारूपमध्यात्म व्यवस्थितं वर्त्तते, एतदध्यात्मं प्रकर्षेण वर्धमानं तु निर्व्याजाचारविशिष्टानामेव स्यान्नतु सकपटाचारवतां कदापीति व्यज्यते ॥२९॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधरश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामऽध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायामध्यात्मस्वरूपो द्वितीयोऽधिकारः समाप्तः ॥५५॥

**दम्भत्यागरूपस्तृतीयोऽधिकारोऽधिक्रियते—**

**कीदृशो दम्भः ?**

दम्भो मुक्तिलतावह्निर्दम्भो राहुः क्रियाविधौ ।
दौर्भाग्यकारणं दम्भो, दम्भोऽध्यात्मसुखार्गला ॥ १ ॥

॥४०॥

'निर्दम्भाचारशालिना' मित्यनन्तरश्लोकोक्तवाक्येनोक्तं हि यो निष्कपटक्रियाकारी तस्याऽध्यात्मं प्रकर्षेण वर्धमानं स्यान्नान्यथेत्येवं प्रसङ्गसङ्गत्या ग्रन्थकारो दम्भत्यागाधिकारमुपक्रमते तथाहि (१) दम्भो हि मुक्तिरूपसाध्यभावनामकलतादहनायाऽलं भवति, दम्भवतां संवेगरङ्गोऽदृश्यतां याति (२) दम्भो हि क्रियारूपचन्द्रग्रासे राहुभूतोऽस्ति, अध्यात्मांशभूतक्रियाभञ्जनकारी (३) दम्भो हि दौर्भाग्यासाधारण-कारणम् , मायया जनो जगति दौर्भाग्यभारभाग् भवति (४) दम्भो हि अध्यात्मजन्यसुखविषयेऽर्गला-ऽर्थात् प्रतिबन्धको भवति, दम्भेनाऽध्यात्मसुखजानन्दस्याऽत्यन्ताऽभावः ॥१॥

पुनः कीदृशो दम्भः ?

दम्भो ज्ञानाद्रिदम्भोलिर्दम्भः कामाऽनले हविः ।
व्यसनानां सुहृद् दम्भो, दम्भश्चौरो व्रतश्रियः ॥ २ ॥

(५) दम्भो हि ज्ञानरूपपर्वतस्य चूर्णने वज्रतुल्यः, अध्यात्मांशभूतज्ञानविध्वंसकोऽस्ति, (६) कामरूपाऽग्नौ घृताहुतिरिव दम्भः, दम्भहविषा कामनामकोऽग्निः पुनः पुनरभिवर्धते एव, (७) व्यसनानां विपदां वेदनानां वा मित्रं दम्भः, दम्भेन दुखोदधिर्निर्मर्यादमुच्छलत्येव (८) व्रतरूपाया लक्ष्म्याश्चौरो दम्भः, दम्भो हि महादुर्लभव्रतरूपां महालक्ष्मीं चोरयत्येव अतो दम्भत्यागायाऽध्यात्मानुरागिभिः प्रयतितव्यम् ॥२॥

दम्भेन व्रतधारणं कृत्वा परमपदेच्छा वन्ध्या भवति–

'दम्भेन व्रतमास्थाय, यो वाञ्छति परं पदम् ।
लोहनावं समारुह्य, सोऽब्धेः पारं यियासति ॥ ३ ॥

यो जनो दम्भपूर्वकं व्रतं प्रतिपद्य परं पदं-मोक्षपदं वाञ्छति, स एतादृशो मूढो भवति हि लोहस्य नावं समारुह्य, अब्धेः–समुद्रस्य पारं-परकूलं यातुमिच्छति, सेच्छा कदाचिदपि पूर्णतां नायाति प्रत्युतोन्मादप्रकारो भात्येव ॥३॥

दम्भो जीवन् व्रततपोजपादिकं निष्फलं करोत्येव–

किं व्रतेन तपोभिर्वा, दम्भश्चेन्न निराकृतः ।
किमादर्शेन किं दीपै-र्यद्यान्ध्यं न दृशोर्गतम् ॥ ४ ॥

यदि दम्भो व्रतादिरूपजीवनतो न निष्काशितस्तदा व्रतेन किं तपोभिः किमर्थात्तपोव्रतादिकं निरर्थकमेव तद् वस्तु दृष्टान्तेन द्रढयति यदि नयनयोः स्थितमन्धत्वं न गतं तदाऽऽदर्शेन-दर्पणेन किं, दीपैः किमर्थाद् दर्पणदीपादिसहकारिरूपसाधनं निरर्थकं, साध्यसिद्धौ दम्भाऽभावो मुख्यसाधनं, तत्र तपोव्रतादिकं सहायकसाधनं द्रष्टव्यम् , यथा दर्शनविधौ चक्षुः परं कारणं, प्रकाशकदीपादिकं निमित्तकारणम् ॥४॥

॥४२॥

दम्भेन सर्वः शुभाचारो दूष्यत एव—

'केशलोचधराशय्या-भिक्षाब्रह्मव्रतादिकम् ।
दम्भेन दूष्यते सर्वं त्रासेनैव महामणिः ॥५॥

टीका:—केशस्य लोचः-लुञ्चन, पृथिव्यां शयनं धरारूपशय्या वा, निर्दोषभिक्षणशीला भिक्षा, ब्रह्मव्रतादिकं सर्वं, आचरणमेकेन दम्भेन दूष्यते-दूषितं क्रियते, यथा महामूल्यवान् महामणिः, त्रास-नामकमणिदोषेण दूषितः सन् मूल्यरहितो भवतीति ॥५॥

दम्भस्याचरणं दुःखेन त्यक्तुं शक्यते—

'सुत्यजं रसलाम्पट्यं, सुत्यजं देहभूषणम् ।
सुत्यजाः कामभोगाद्या, दुस्त्यजं दम्भसेवनम् ॥६॥

टीका:—रसनाया रसविषयकपरमासक्तिः सुखेन त्यक्तुं शक्यते, रसलाम्पट्यनिवारणं सुशकम्, देहस्यालङ्कारादिकभूषणं सुखेन त्यक्तुं शक्यते, कामभोगादयः सुखेन त्यक्तुं शक्यन्तेऽपितु दम्भ-सेवनं महादुःखेन त्यक्तुं शक्यते, निःस्पृहतायोगेन दम्भत्यागो दुष्करोऽपि सुकरो भवति ॥६॥

मूढानामेव दम्भेन महती कदर्थना—

'स्वदोषनिह्नवो लोक-पूजा स्याद् गौरवं तथा ।
इयतैव कदर्थ्यन्ते, दम्भेन बत बालिशाः ॥७॥

टीका:—'स्वदोषनिहनवो'=आत्मना कृतानां दोषाणामपलापः स्थगनमावरणमिति यावद् , एष दोषो दम्भेन भवतीत्येका विडम्बना, दम्भेन 'लोककृतसत्कारसन्मानादिरूपा पूजा भवतीति द्वितीया कदर्थना, 'स्याद् गौरवं तथा'=यथा पूजा तथा जगति जनकृतगुरुभावो, गुरुरेषोऽस्माकमिति जनकृतोच्चतरस्थानतेति तृतीया विडम्बना, एताभिस्तिसृभिर्विडम्बनाभिर्बालिशा दम्भेन कदर्थनाविषयाः क्रियन्ते, महाधूर्त्तो दम्भो मूढान् गौरवादिना प्रलोभ्य, नरकादिदुर्गतौ पातयतीति, मूढा गौरवादिके प्रलोभने लुब्धप्रसन्ना दम्भं शरणं गच्छन्ति ॥७॥

वेषधारिणां व्रतमपि दम्भोऽव्रतवर्धकं करोत्येव—

'असतीनां यथा शील-मशीलस्यैव वृद्धये ।
दम्भेनाऽव्रतवृद्ध्यर्थं, व्रतं वेषभृतां तथा ॥८॥

टीका:—यथाऽसतीनां=वेश्यानां कुलटानां वा परेषामाकर्षणहेतवे पालितमपि शीलमशीलस्य

रूपमूलगुणान् करणमप्रतिरूपानुत्तरगुणान् (अथवामहाव्रतरूपमूलगुणसहायकभावनादिरूपानुत्तरगुणान्) धर्तु--पालयितुं नाऽलं--न समर्थः, तस्य साधोः सुश्राद्धता (परमश्रावकधर्मो नंदीषेणवत्) युक्तिसम्पन्ना परन्तु दम्भेन-साधुताशून्यवेषमात्रेण, जीवनं--साधुवेषेण जीवनं सर्वथाऽनुचितमेवेति ॥१२॥

साधुवेषपरिहाराऽसमर्थस्य संविज्ञपाक्षिकरूपा स्थिति र्यक्ता--

'परिहर्तुं न यो लिङ्गमप्यलं दृढरागवान् ।
संविज्ञपाक्षिकः स स्यान्निर्दम्भः साधुसेवकः ॥१३॥

टीकाः--केचिदात्मानो भवन्त्येतादृशा यतो ये साधुवेषस्योपरि दृढं रागं बिभ्रति चातः साधुवेषस्य त्यजनं तेषां स्वशक्तेर्बाह्यं कार्यं भवति, अस्तु साधुवेषस्तथापि तादृशैः साधुवेषं बिभ्रद्भिः 'संविज्ञ (ग्न) साधु' रूपां स्वप्रसिद्धिं त्यक्त्वा 'संविज्ञपाक्षिक' रूपा स्वस्थितिः कर्त्तव्या, तथा सुविहितसाधुसेवकीभूय निर्दम्भत्वं सेवनीयम् ॥१३॥

संविज्ञपाक्षिकस्य स्वल्पाऽपि यतना निर्जरां दत्ते--

'निर्दम्भस्याऽवसन्नस्या--प्यस्य शुद्धार्थभाषिणः ।
निर्जरां यतना दत्ते, स्वल्पाऽपि गुणरागिणः ॥१४॥

दुराचारस्य वृद्धिं विधत्त एव तथा वेषधारकाणां व्रतं दम्भद्वाराऽव्रतस्यैव-व्रताऽभावस्यैव वृद्धये भवतीति दम्भो व्रतमव्रते परिवर्त्तयत्येव दम्भः सर्वशुभमशुभं कर्त्तुं प्रत्यलः ॥८॥

**दम्भे विश्वस्ता बालिशाः प्रतिपदं स्खलन्त्येव—**

जानाना अपि दम्भस्य; स्फुरितं बालिशा जनाः ।
तत्रैव दृढविश्वासाः प्रस्खलन्ति पदे पदे ॥ ९ ॥

टीका० अहो कीदृशा मूर्खाः ! मायाया प्रपञ्चलीलां जानन्तोऽपि बालिशाः, तस्मिन् दम्भ एव दृढविश्वासाः—दृढप्रतीति धारकाः सन्तः पदे पदे—स्थाने स्थाने प्रस्खलन्ति—पतनं प्राप्नुवन्त्येव-हानिमन्तो, दुःखभाजो भवन्त्येवेति ॥९॥

**दम्भो मोहस्य माहात्म्यप्रकटने साहाय्यं करोत्येव**

'अहो मोहस्य माहात्म्यं, दीक्षां भागवतीमपि ।
दम्भेन यद्विलुम्पन्ति, कज्जलेनैव रूपकम् ॥१०॥

टीकाः—महदाश्चर्यमिदं लोके, पश्यत लोकाः । अहो ! मोहस्य माहात्म्यं—प्रभावो यतो भागवतीं—पारमेश्वरी प्रव्रज्यां दम्भेन बालिशा विलुम्पन्ति—विनाशयन्ति, यथा कज्जलेन रूपकं—शुभचित्रं विलोपविषयीभवति. ॥१०॥

षड्भिरुपमाभि धर्मे दम्भ उपप्लवः—

'अब्जे हिमं तनौ रोगो, वने वह्नि दिने निशा ।
ग्रन्थे मौर्ख्यं कलिः सौख्ये, धर्मे दम्भ उपप्लवः ॥११॥

टीका:-(१) सहस्रदले कमले हिमस्य पातो यथोपप्लवो-महाभयम्, (२) सौष्ठवशालिनि शरीरे रोगो यथोपप्लवो महाभयरूपः, (३) वृक्षावलिमहामनोहरेऽपि वने वह्निर्यथोपप्लवो-महाभयम् (४) दिवसे भयङ्करपुष्कलवार्दलजनितान्धकारनिशारूप उपप्लवः, (५) स्वविरचितपुस्तकरूपग्रन्थे मूर्खता-बुद्धिविकलता, उपप्लवः, (६) कुटुम्बिस्नेहिजनमत्कसुखममये स्नेहिभिः सह मिथःकलिरुपप्लवः, तथाऽऽचाररूपे धर्मे दम्भ उपप्लव उपद्रवभूतमहाभयम्, अतो धर्मसम्बन्धिचरणकरणरूपक्रियामात्रे दम्भः समूलमुन्मूलनीयः ॥११॥

मूलोत्तरगुणपालनेऽसमर्थस्य साधोः सुश्रावकता युक्ता—

'अत एव न यो धर्तुं, मूलोत्तरगुणानलम् ।
युक्ता सुश्राद्धता तस्य, न तु दम्भेन जीवनम् ॥१२॥

टीका:--एतावती भयानकता दम्भस्य विद्यतेऽत एवैवं कथयितुं शक्यते यतो यो साधुश्चरणसप्तति-

टीकाः-(१) निर्दम्भस्य=दम्भरहितस्य, यादृशः स्वयमस्ति तादृशस्वरूपदर्शकस्य, (२) शुद्धार्थ भाषिणः=जिनेश्वरप्रणीतप्रवचनोक्तस्यात एव शुद्धसूत्रार्थप्ररूपकस्यार्थाच्छुद्धप्ररूपणाकारकस्य (३) गुणरागिणः=गुणवन्निष्ठगुणपक्षपातिनः, अस्य=संविज्ञपाक्षिकरूपस्य, 'अवसन्नस्याऽपि'=चारित्राचारे शैथिल्यवतोऽपि, बकुशकुशीलसदृशस्याऽपि, 'स्वल्पाऽपि यतना'=अत्यन्ताऽल्पोऽपि शुद्धश्चारित्रविषयकप्रयत्नो 'निर्जरां दत्ते'=कर्मनिर्जरारूपं फलं करोत्येवेति ॥१४॥

**दम्भिनां यतिनां नामाऽपि पापाय कल्पते—**

'व्रतभाराऽसहत्वं ये, विदन्तोऽप्यात्मनः स्फुटम् ।
दम्भाद् यतित्वमाख्यान्ति, तेषां नामाऽपि पाप्मने ॥१५॥

टीकाः-महाव्रतानां मेरुभारमुत्पाटयितुं स्वीय आत्मा, सर्वथासमर्थत्वाभाववानस्तीति सम्यग् जानन्तोऽपि ये वेषविडम्बका विश्वं वञ्चयितुं स्वं 'सुविहितो यतिरहं' इति दम्भेन प्रख्यापयन्ति, तेषां नामाऽपि पापायैवाऽन्यस्य तु का वार्त्ता ? ॥१५॥

**ये यतनां कुर्वते ते यतिनः, ये यतनां न कुर्वते ते यतिनः कथंस्युः ?**

कुर्वते येन यतनां सम्यक्कालोचितामपि ।
तैरहो यतिनाम्नैव दाम्भिकैर्वञ्च्यतेजगत् ॥ १६ ॥

टीका० "तत्तत्कालोचितामपि यतनाम्—तत्तत्कालकरणीयतारूपेणोचितपडावश्यकादिरूपसाधु-क्रियापालनरूपं प्रयत्नं सम्यग्—सुविधिना ये वेषविडम्बका न कुर्वते, अहो तैर्दाम्भिकै—र्वञ्चकैर्यतिनाम्नैव-नाममात्रयतिशब्देनैव विश्वं वञ्च्यते ॥१६॥

हीनोऽपि दम्भो विश्वं तृणाय मन्यते—

धर्मीतिख्यातिलोभेन प्रच्छादितनिजाश्रवः ।
तृणाय मन्यते विश्वं हीनोऽपि धृतकैतवः ॥१७॥

टीका:–'धर्मीति ख्यातिलोभेने'ति=लोकानां मध्ये स्वं 'धर्मीतिप्रसिद्धिं प्रज्ञापयितु' महत्त्वाऽऽकाङ्क्षया, 'प्रच्छादितनिजाश्रवः'=स्थगितनिजपापमालिन्यः, कपटपटावृतः, धर्महीनोऽपि-हीनताभागपि, विश्वं-जगत्, तृणाय-तृणवत्तुच्छं मन्यते, श्रेष्ठताहीनोऽपि स्वं श्रेष्ठं गणयन्, विश्वं तृणाय मन्यते कपटपटुः ॥१७॥

दम्भी योगप्रतिबन्धक कठिनंकर्म बध्नाति—

आत्मोत्कर्षात्ततो दम्भी परेषां चाऽपवादतः ।
बध्नाति कठिनं कर्म बाधकं योगजन्मनः ॥१८॥

टीका:, ततः=विश्वं तृणाय मन्यते कपटी, तत्कारणात्, आत्मोत्कर्षात्='अहमेवोत्कृष्टो नाऽन्यः' अर्थाद् दम्भी स्वस्य महत्त्वप्रशंसया, 'परेषां चापवादतः' अन्येषां च निन्दया, अर्थान्मत्तः सर्वोऽपकृष्टः' ॥४१॥

इति मान्यतया 'योगजन्मनो बाधकं कर्म कठिनं बध्नाति'=मोक्षमार्गनामकसम्यग्दर्शनज्ञानचारित्राऽऽत्मकयोगस्योत्पत्ति प्रति प्रतिबन्धकं कठिनं (निकाचितं) कर्म बध्नात्येवेति, दम्भिनां मोक्षमार्गयोगो दुर्लभः ॥१८॥

आत्माऽर्थिना दम्भाऽऽरम्भाभावः कर्त्तव्यः—

आत्माऽर्थिना ततस्त्याज्यो दम्भोऽनर्थनिबन्धनम् ।
शुद्धिः स्यादृजुभूतस्ये-त्यागमे प्रतिपादितम् ॥१९॥

टीकाः=ततः=दम्भस्य मोक्षमार्गरूपयोगस्य प्रतिबन्धकत्वात्, 'आत्मार्थिना=आत्मा—स्वस्वरूपं, अर्थः प्रयोजनमस्त्यस्मिन्नित्यात्मार्थी, तेन, आत्मश्रेयोऽर्थिनेत्यर्थः, 'अनर्थनिबन्धनं दम्भस्त्याज्यः'=दुःखदुर्गत्यादिरूपाऽनर्थमूलकारणभूतो दम्भस्त्यागविषयीकर्त्तव्यः, यत उत्तराध्ययनसूत्ररूपागमे 'शुद्धिः स्याद् ऋजुभूतस्ये'ति=सरलात्मन्येव धर्मः स्थिरो भवतीति प्रतिपादितं भूयो भूयो स्मर्त्तव्यमेव ॥१९॥

काऽऽज्ञा पारमेश्वरी ?

जिनै र्नाऽनुमतं किञ्चि-न्निषिद्धं वा न सर्वथा ।
कार्ये भाव्यमदम्भेने त्येषाऽऽज्ञा पारमेश्वरी ॥२०॥

टीका:--जिनैः=तीर्थङ्करैः, सर्वथा=एकान्तेन 'किञ्चिन्नानुमतं'=न किञ्चिद् विहितं, एकान्तेन किञ्चिन्न निषिद्धं-प्रतिषिद्धं, परन्तु परमेश्वरेणैषाऽऽज्ञा=शासनं प्रकटितं, यद् यद् विहितं—शास्त्रे विहितं सर्वं विधातव्यम् , यद् यन्निषिद्धं सर्वं न कर्त्तव्यमपितु तत्र सर्वत्र कार्याकार्यमध्ये सर्वथा दम्भरहितेन भाव्यं नाऽन्यथेति, यदि दम्भश्चेत्तत्र तदा सर्वं निष्फलं, तस्माद् दम्भस्य त्यजनं सर्वस्मात् प्रथमं निरन्तरमावश्यकमनिवार्यं कार्यं तिष्ठत्येवेति ॥२०॥

आत्मार्थिनां स्वल्पोऽपि दम्भो नोचितः—

अध्यात्मरतचित्तानां दम्भः स्वल्पोऽपि नोचितः ।
छिद्रलेशोऽपि पोतस्य, सिन्धुं लङ्घयतामिव ॥२१॥

टीका:--अध्यात्मामृतभावे रममाणमानसानां स्वल्पोऽपि=अत्यन्ताऽल्पोऽपि दम्भो--मायाभावो, नोचितः=नौचित्यमञ्चति, सर्वथा मनसाप्यस्पर्शनीयो दम्भोऽस्ति, यथा सिन्धुं-सागरं, लङ्घयतां--पारमुत्तरतां सांयात्रिकानां वा, पोतस्य-प्रवहणस्य छिद्रस्य-विवरस्य लेशोऽपि=छिद्रांशोऽपि नोचितः ॥२१॥

महतामपि दम्भांशो महानर्थहेतुः--

'दम्भलेशोऽपि मल्ल्यादेः, स्त्रीत्वाऽनर्थनिबन्धनम् ।
अतस्तत्परिहाराय यतितव्यं महात्मना ॥२२॥

॥५१॥

टीका:--एकोनविंशतितमतीर्थंकरमल्लिनाथादीनां महतामपि त्वरूपमहाऽनर्थमूलकारणं दम्भलेशोऽपि जातः, गणनाऽतीतदम्भस्य तु का वार्त्तेत्यपि शब्दार्थः, अतो महात्मनाऽन्तरात्मना, तद्दम्भमात्रपरिहाराय यतितव्यमेव, दम्भाऽऽरम्भजन्यदुरितदूरीकरणाय सातत्येन यत्नो विधेयः ॥२२॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधरश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणाऽध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां दम्भत्यागाख्यस्तृतीयोऽधिकारः समाप्तः ॥७९॥

चतुर्थो भवस्वरूपचिन्ताऽधिकारः प्रस्तूयतेऽधुना--

भवस्वरूपचिन्तनस्यापूर्वमाहात्म्यम्--

'तदेवं निर्दम्भाऽऽचरणपटुना चेतसि भव--
स्वरूपं संचिन्त्यं क्षणमपि समाधाय सुधिया ।
इयं चिन्ताऽध्यात्मप्रसरसरसी नीरलहरी,
सतां वैराग्याऽऽस्था प्रियपवनपीना सुखकृते ॥१॥

टीका:--तस्मादेवंपद्धत्या दम्भस्याऽऽत्यन्ताभावपूर्वकसदाचरणे पटुना-कुशलेन, सुधिया--समीचीनबुद्धिवैभवशालिना पुरुषेण क्षणमपि चेतसि--आत्मनि, समाधाय-समाहितो भूत्वा, भवस्य स्वरूपं-अध्यात्म

॥५२॥

प्रसरणरूपसरस्या नीरलहरी, वैराग्यविधायकश्रद्धारूपप्रियपवनेन पीना सती सतां सुखकृते एव, यथा सरोवरस्य नीरतरङ्गः, अनुकूलसुमधुरपवनेन विलसितः सतां सुखाय भवति, तथा भवस्वरूपचिन्तारूपाध्यात्मप्रसारः, वैराग्यसम्यग्दर्शनोभयतः परिपुष्टः सतामध्यात्मरसिकानां सुखाय--आनन्दाय जायत एवेति ॥१॥

संसारसागरस्याऽतिभयानकता—

'इतः कामौर्वाऽग्नि ज्र्वलति परितो दुःसह इतः,
पतन्ति ग्रावाणो विषयगिरिकूटाद् विघटितः ।
इतः क्रोधावर्त्तो विकृतितटिनीसङ्गमकृतः
समुद्रे संसारे तदिह न भयं कस्य भवति? ॥२॥

टीकाः–इतः, एकतो दुःसहः कामनामको वडवानलः परितः–समन्ताज्ज्वलति, अत्र कामरूपवडवानलः, संसारसागरे मुख्यमहाभैरवः, इतः पश्य भाग्यवन्! विषयनामकगिरिशिखराद् विघटितास्त्रुटिताः प्रस्तराः पतन्ति, इतो विकारनामकनदीनां सङ्गमेन कृतः-सृष्टः क्रोधरूप आवर्त्तो भयङ्करः, तत्- तस्मादिहसंसारसागरे कस्य ज्ञानिनो भयं न भवति? अर्थात् सर्वस्य सम्यग्दर्शिनो भवत्येवेति ॥२॥

वह्निस्वरूपसंसारदर्शनम्—

प्रियाज्वाला यत्रोद्वमति रतिसन्तापतरला
कटाक्षान् धूमौघान् कुवलयदलश्यामलरुचीन् ।
अथाऽङ्गान्यङ्गाराः कृतबहुविकाराश्च विषयाः
दहन्त्यस्मिन् वह्नौ भववपुषि शर्म क्व सुलभम् ॥३॥

टीकाः–अहो ! किंविशिष्टो भवाग्निः प्रदीप्तो दृश्यते ? पश्यत भो भव्या यत्र=भवाऽग्नौ रतिजन्यसन्तापेन चञ्चला सती प्रियानामकज्वाला, नीलकमलदलश्यामलकान्तिविशिष्टान्, कटाक्षनामकधूमसमुदायान्, उद्वमति-ऊर्ध्वं क्षिपति, 'अथाऽङ्गान्यङ्गाराः' 'कृतबहु विकाराश्चविषयाः'=यथाऽङ्गारा अङ्गानि दहन्ति तथा विषयरूपा अङ्गारा, शरीरादिरूपद्रव्याऽङ्गाध्यात्मिकज्ञानादिरूपभावाऽङ्गानि दहन्ति, एतादृशेऽस्मिन् संसारशरीरे (रूपे) वह्नौ 'क्व शर्म सुलभम्'=कुत्र कुतो वा शर्म-सुखं सुलभं ? अर्थाद् दुःखमेव सुलभम् ॥३॥

संसारनामकवधस्थानवर्णनम्—

'गले दत्वा पाशं तनयवनितास्नेहघटितम्,
निपीड्यन्ते यत्र प्रकृतिकृपणाः प्राणिपशवः ।

॥५४॥

नितान्तं दुःखार्त्ता विषमविषयै र्घातकभटै—
र्भवः सूनास्थानं तदहह महासाध्वसकरम् ॥४॥

टीकाः--यत्र--भवरूपे सूनास्थाने पुत्रस्त्रीसम्बन्धिस्नेहेन निर्मितं पाशं गले दत्त्वा 'प्रकृति कृपणाः'=निसर्गतो दीनरङ्काः, दुःखार्त्ताः, 'प्राणिपशवः'-जीवरूपाः पशवः, विषमविषयनामकैः र्घातकभटैःसौनिकजनैः नितान्तं-सातत्येन, निपीड्यन्ते-निबिडपीडाविषयीक्रियन्ते, तत्-तस्मात्, अहहेति खेदे, महासाध्वसकरं-महाभयङ्करं भवरूपं सूनास्थानं पश्यतर भो भो भव्याः ॥४॥

भवरूपनिशाचरचित्रम्—

'अविद्यायां रात्रौ चरति वहते मूर्ध्नि विषमम्
कषायव्यालौघं क्षिपति विषयास्थीनि च गले ।
महादोषान् दन्तान् प्रकटयति वक्रस्मरमुखो
न विश्वासार्होऽयं भवति भवनक्तञ्चर इति ॥५॥

टीकाः—अहो कीदृशो निशाचरः ? पश्य पश्याधुना परिदर्श्यमानं विशेषणै र्भवनिशाचरं, (१) एष भवनिशाचरः, अविद्यायां=आत्मविषयकाऽज्ञानतानामकघनश्यामायां रात्रिरूपायां, चरति=भ्रमति भक्ष-

यति वा, मूर्ध्नि=मस्तके (मस्तिष्कान्तः) विषमं कषायनामकसर्पसमूहं वहते–धत्ते, गले च विषयनामकान्यस्थीनि क्षिपति–परिधत्ते, किञ्च वक्रं स्मर एव मुखं यस्य स=वक्रकामसंज्ञारूपमुखः सन् , महादोषनामकान् दन्तान् , प्रकटयति--दर्शयति, एतादृशोऽयं भवनिशाचरः कथमपि न विश्वासयोग्यो=प्रीतिप्रतीतिपात्रं भवत्येव विश्वजनाऽविश्वनीय एवैष भवनक्तञ्चरः ॥५॥

अस्यां भवाटव्यां विना सहायेन गमनमनुचितम्—

जना लब्ध्वा धर्म्मद्रविणलवभिक्षां कथमपि
प्रयान्तो वामाक्षीस्तनविषमदुर्गस्थितिकृता ।
विलुट्यन्ते यस्यां कुसुमशरभिल्लेन बलिना,
भवाऽटव्यां नास्यामुचितमसहायस्य गमनम् ॥६॥

टीकाः--केचिज्जना मार्गदर्शकगुरोः कस्यचित् साहाय्यं विना भववनं पारयितुं साहसं कृतवन्तः, कथमपि धर्मनामकद्रव्यलवस्य भिक्षां लब्ध्वा प्रयान्तः, 'वामाक्षीस्तनविषमदुर्गस्थितिकृता=कामिनीकाञ्चनकुम्भकल्पस्तनरूपविषमदुर्गनिवासकारिणा 'कुसुमशरभिल्लेन बलिना'=कामदेवनामकभिल्लेन बलवता, यस्यां-भवाटव्यां, विलुटयन्ते=चौर्यविषयीक्रियन्ते, पथिकानां धर्मधनादिपदार्थाः सर्वेऽपह्रियन्ते, अतोऽस्यां भवनामकाटव्यां, सहायरहितस्यैककस्य गमनं नोचितं ॥६॥

अयं संसारः कूटघटनाप्रचुरः—

'धनं मे गेहं मे मम सुतकलत्रादिकमतो
विपर्यासादासादितविततदुःखा अपि मुहुः ।
जना यस्मिन् मिथ्यासुखमदभृतः कूटघटना-
मयोऽयं संसारस्तदिह न विवेकी प्रसजति ॥७॥

टीकाः--धनं मदीयं, गृहं मम, मे पुत्रवनितादिकं, 'अतो विपर्यासात्' मिथ्याज्ञानरूपविपरीतबुद्धितो, मुहुः--वारंवारं, 'आसादितविततदुःखाः'=बहुविधविस्तृतदुःखपरम्परासम्पन्ना जनाः, कूटघटनामये यस्मिन् संसारे 'मिथ्यासुखमदभृतः'=सुखाभासस्य सुखत्वेनाऽभिमानं विभ्रतो भवन्ति, तस्मादयं संसारः, 'कूटघटनामयः'=असत्यरचना--कल्पनामयः, कल्पितोऽस्ति, ततोऽसद्--भ्रमाऽऽत्मके भवेऽस्मिन् 'विवेकी न प्रसजति' विवेकविशिष्टो न प्रकर्षेण सक्तिं करोत्येवेति ॥७॥

संसारोऽयं कारागार एव—

'प्रियास्नेहो यस्मिन्निगडसदृशो यामिकभटो--
पमः स्वीयो वर्गो धनमभिनवं बन्धनमिव ।

मदामेध्यापूर्णं व्यसनबिलसंसर्गविषमम्,
भवः कारागेहं तदिह न रतिः क्वाऽपि विदुषाम् ॥८॥

टीकाः–यस्मिन् संसारकारागृहे निगडसदृशः प्रेमवत्याः स्नेहोऽस्ति प्राहरिकभटस्थानीयः स्वीयो वर्गः=स्वजनवर्गः, नवीनबन्धनस्थानीयं धनं वर्त्तते 'मदामेध्यापूर्णं'=अभिमाननामकापवित्रपदार्थेन, आ-समन्तात् पूर्णं, 'व्यसनबिलसंसर्गविषमम्'=विपत्तिवाररूपबिलानां संसर्गेण विषमं भवनामककारागेह-मस्ति, तत् तस्मादिह-अस्मिन् भवकारागेहे क्वापि–कुत्राऽपि, विदुषां-सम्यग्ज्ञानिनां, न रतिः-रमणताऽस्ति, विद्वांसो भवचारके कुत्रचिदपि न रमन्ते ॥८॥

श्मशानसमानसंसारप्रदर्शनम्—

'महाक्रोधो गृध्रोऽनुपरतिशृगाली च चपला,
स्मरोलूको यत्र प्रकटकटुशब्दः प्रचरति ।
प्रदीप्तः शोकाग्निस्ततमपयशो भस्म परितः,
श्मशानं संसारस्तदभिरमणीयत्वमिह किम् ॥९॥

टीकाः–यत्र–प्रेतवनभूतसंसारे, महाक्रोधनामकदूरदृक्, उड्डयते, अविरतिनामकशृगाली चापल्यवती मती धावन्ती वर्त्तते, कुटिलकामवासनारूपाऽमङ्गलकारिकाकारिः, अपशुकनकरं कटुशब्दं प्रकट-

यन् प्रचरति च, शोकनामकोऽग्निः प्रदीप्तः, अपकीर्तिरूपं भस्म, परितः—समन्तात् , ततं विस्तृतमस्ति, एतैः कारणैः संसारः श्मशानमेव, तत्—तस्मादिह—भवप्रेतगृहे किमभिरमणीयत्वं ? अर्थात् न किमप्यभितो रमणीयत्वमस्ति ॥९॥

विषवृक्षेण सह संसारस्य तोलनम्—

'धनाशा यच्छायाऽप्यति विषममूर्च्छाप्रणयिनी,
विलासो नारीणां गुरुविकृतये यत्सुमरसः ।
फलाऽऽस्वादो यस्य प्रसरनरकव्याधिनिवह-
स्तदाऽऽस्था नो युक्ता भवविषतरावत्र सुधियाम् ॥१०॥

टीकाः—यस्य—भवविषतरो र्धनाशानामकच्छायाऽपि (छायात इतरस्य तु का कथेत्यप्यर्थः) अत्यन्त-विषममूर्च्छा-(चैतन्याभाव) प्रणयिनी 'यत्सुमरसः'=यस्य भवविषतरो नारीणां—विलासिनीनां हावभावकटाक्षादिरूपविलासनामकः पुष्परसः 'गुरुविकृतये' अनन्तजन्ममरणादिवर्धकत्वेन दुरन्तत्वेन महाविकाराय प्रगल्भते, यस्य—भवविषतरोः प्रसर—व्यापकनरकान्तर्गतकोटिकोटिमितव्याधिसमुदायनामको रसास्वादो निगद्यते, तत्—तस्मादत्र भवविषतरौ सुधियां=सम्यग् ज्ञानवतां, 'आस्था'=स्थितिर्विश्वासो वा, 'नो युक्ता'=युक्तिमती नेत्यर्थः । ॥१०॥

भवस्याऽनेकरङ्गत्वेन विविधविषमता—

'क्वचित् प्राज्यं राज्यं क्वचन धनलेशोऽप्यसुलभः,
क्वचिज्जातिस्फातिः क्वचिदपि च नीचत्वकुयशः ।
क्वचिल्लावण्यश्रीरतिशयवती क्वापि न वपुः ।
स्वरूपं वैषम्यं रतिकरमिदं कस्य नु भवे ? ॥११॥

'क्वचित्'=व्यक्तिविशेषे प्राज्य-विशालं राज्यं—
" " धनस्य लेशोऽपि न सुलभः—
" " जातेरुच्चत्वं यशो वृद्धिश्च—
" " नीचजातित्वं कुयशश्च—

क्वचिद्—व्यक्तिविशेषेऽतिशयवती, रूपलावण्यश्रीः-अर्थात् सर्वाऽतिशायिरूपलावण्यसुषमा, क्वचिद्—व्यक्तिविशेषे कुब्जं—लक्षणविहीनं शरीरं वर्त्तते जाने न वपुः—न शरीरमिव दृश्यते, अस्मिन् भवे स्वरूपं विषमतामयमिदं कस्य—पुरुषस्य रतिकरं—सुखकरं स्यादर्थान्न कस्यापीत्यर्थः । ॥११॥



प्रकटसुखरहितभवनामकधाम—

'इहोद्दामः कामः खनति परिपन्थी गुणमही—
मविश्रामः पार्श्वस्थितकुपरिणामस्य कलहः ।

बिलान्यन्तःक्रामन्मदफणभृतां पामरमतम् ,
वदामः किं नाम प्रकटभवधामस्थितिसुखम् ॥१२॥

टीकाः—इह-संसाररूपगृहे कामनामकः परिपन्थी—शत्रुः, उद्दामः—उच्छृङ्खलः सन् । गुणरूपपृथिवीं खनति, अत्र ज्ञानादिगुणकामयोः परस्परं शत्रुत्वमावेदितम् , यत्र कामो न तत्र ज्ञानादिगुण इति बोध्यम्, किञ्च 'पार्श्वस्थितकुपरिणामस्य कलहोऽविश्रामः'=प्रातिवेश्मिकाशुभपरिणतिरूपकुमतेः कलहो—वाग्युद्धं, विरामविरहितो वर्त्तते, तथाचाऽन्तःक्रामतामन्तःप्रविशतां मदाष्टकरूपाणां फणिनां बिलानि दृश्यन्ते, 'पामरमतं प्रकटभवधामस्थितिसुख किं नाम वदामः'=अज्ञानिभिर्मतं, संसाररूपगृहस्थितेः सुखं प्रकटं कदाचित्किमपि नेत्येव वदामः, पामरमतं न प्रतिपत्तव्यं, परमपुरुषमतं तु माननीयमेवेति ॥१२॥

भीमभवरूपग्रीष्मर्तु वर्णनम्—

'तृषार्त्ताः खिद्यन्ते विषयविवशा यत्र भविनः,
करालक्रोधार्कोच्छमसरसि शोषं गतवति ।
स्मरस्वेदक्लेदग्लपितगुणमेदस्यनुदिनम् ,
भवग्रीष्मे भीष्मे किमिह शरणं तापहरणम् ॥१३॥

टीका:-यत्र-भवनामकग्रीष्मे त्रयोविंशतिविधेन्द्रियविषयविवशा भविनः, तृपार्त्ताः-तृष्णया तृषिताः, खिद्यन्ते खिन्ना भवन्ति, 'करालक्रोधाऽर्कात्'=प्रचण्डक्रोधनामकचण्डकिरणात् , 'शमसरसि शोषं गतवति'= उपशमरूपकमलाकरे शुष्कतां प्राप्तवति, अनुदिनं-प्रतिदिनं 'स्मरस्वेदक्लेदग्लपितगुणमेदसि'=कामवासना-रूपस्वेदार्द्रतया शोषितगुणनामकमेदोरूपधातुविशेषे, इह भवनामके भीष्मे-भयङ्करे ग्रीष्मे निदाघे ताप-हरणं शरणं किं? न किमपि शरणमस्ति, अतोऽशरणोऽयं भवग्रीष्मः ॥१३॥

स्वार्थपरायणत्वेन भवसुखस्य रसत्यागः श्रेयान्—

'पिता माता भ्राताऽप्यभिलषितसिद्धावभिमतो,
गुणग्रामज्ञाता न खलु धनदाता च धनवान् ।
जनाः स्वार्थस्फातावनिशमवदाताशयभृतः,
प्रमाता कः ख्याताविह भवसुखस्याऽस्तु रसिकः ॥१४॥

टीका:-'अभिलषितसिद्धौ'=अभीष्टस्वार्थसिद्धौ सत्यामेव पिता पितृत्वेन, माता मातृत्वेन, भ्राता भ्रातृत्वेनाऽभिमतः-मानितो नान्यथा, यत्र च वसन् धनवान् न गुणग्रामज्ञाता खलु-निश्चये न धनदाता, यत्र 'जनाः स्वार्थस्फातौ=स्वार्थवृद्धिमपेक्ष्य सुष्ठुव्यवहारकरणैकाभिप्रायवन्तः सन्ति, इह-संसारे भवसुख-

स्यैतादृशी ख्यातिः–प्रसिद्धिरस्ति तदा कः प्रमाता–सम्यग्दृष्टिरात्मा, भवसुखस्य रसिकोऽस्तु ? न कोऽपि प्रमाता भवसुखरसिकः स्यादिति ॥१४॥

विश्वासघातकोऽयं भवः—

'पणैः प्राणैः गृह्णात्यहह महति स्वार्थ इह यान्,
त्यजत्युच्चैर्लोकस्तृणवदघृणस्तानपरथा ।
विषं स्वान्ते वक्त्रेऽमृतमिति च विश्वासहतिकृद्,
भवादित्युद्वेगो यदि न गदितैः किं तदधिकैः ॥१५॥

टीकाः–अहहेत्याश्चर्ये, इह–संसारे महति स्वार्थ उपस्थिते लोकः, पणैः प्राणैः=प्राणान् मुक्त्वा-विक्रीय, यान्-पुरुषान् गृह्णाति–स्वसात् करोति, अपरथा=स्वार्थसमाप्तौ सत्यां लोकः, अघृणः–निर्दयः सन्, तान्=स्वार्थे सिति ये प्राणवद् गृहीतास्तान् पुरुषान् उच्चैः–सर्वथा तृणवत् त्यजति–क्षिपत्येव, किञ्चैतादृशदाम्भिकहृदये विषं-हलाहलं मुखेऽमृतमिति भेदभृतमायामयाद् विश्वासघातकारिभवाद् यदि निर्वेदरूपोद्वेगो न भवेत्तदा ततोऽधिकैर्गदितैः किं ? अर्थादलं विशेषकथनेनेति ॥१५॥

मोहस्य भवभवनवैषम्यघटना—

'दृशां प्रान्तैः कान्तैः कलयति मुदं कोपकलितै-
रमीभिः खिन्नः स्याद् घनधननिधीनामपि गुणी ।

उपायैः स्तुत्याद्यैरपनयति रोषं कथमपी ।
त्यहो मोहस्येयं भवभवनवैषम्यघटना ॥१६॥

टीका:—'धनधननिधीनाम्'=कुबेरसदृशां महतां श्रीमतां दृशां नयनानां 'प्रान्तैः कान्तैः'—सौम्यरम्यैः प्रान्तभागैः 'अपि गुणी'—गुणसम्पन्नोऽपि मुदं—हर्षं, कलयति—अनुभवति, अमीभिः=दृशां प्रान्तैरमीभिः, कोपकलितैः मद्भिः, गुणशाल्यपि खेदसम्पन्नो भवेत्, तथा च कथमपि चटुलचाटुशतैः प्रशंसागर्भित प्रशस्तिप्रभृतिभिरुपायैः 'रोषमपनयति'—क्रोधमपाकरोति, 'इत्यहो मोहस्येयं भवभवनवैषम्यघटना'= अहो ! इत्याश्चर्ये संसाररूपगृहस्य मोहनाम्ना राज्ञा घटिता कीदृशी वैषम्यवैचित्र्यचित्रिता घटनानाटक नटीपटिका ? ॥१६॥

अपूर्वाऽऽध्यात्मिककुटुम्बकम्—

'प्रिया प्रेक्षा पुत्रो विनय इह पुत्री गुणरतिः,
विवेकाख्यस्तातः परिणति रनिंद्या च जननी ।
विशुद्धस्य स्वस्य स्फुरति हि कुटुम्बं स्फुटमिदम्,
भवे तन्नो दृष्टं तदपि बत संयोगसुखधीः ॥१७॥

टीकाः—इह—अध्यात्मजगति, प्रियास्थानीया तत्वचिन्तनरूपा प्रेक्षा (बुद्धिविशेषः) पुत्रस्थानीयो गुरुजनादरबहुमानादिरूपो विनयो (धर्मं प्रति मूलभूतो विनयोऽस्ति) पुत्रीस्थानीया गुणरतिः=गुणिजनगणगुणाऽनुरागः) 'विवेकाऽऽख्यस्ततः'=सारासारादिविवेचनशक्तिरूपः पिता, 'परिणतिरनिन्द्या च जननी'=पवित्रप्रशस्ता परिणतिः--परिणामधारा, जननी--मातृस्थानीया 'विशुद्धस्य स्वस्य स्फुरति कुटुम्बं हि स्फुटमिदं'=विशुद्धिविशिष्टस्य स्वस्याऽऽत्मनः, हीति निश्चये, इदं स्पष्टं प्रेक्षाप्रियादिरूपं कुटुम्बं स्फुरति विलसति, तत्--स्वाऽऽत्मकुटुम्बं 'भवे नो दृष्ट'=अदृष्टपूर्वमिदमाध्यात्मिककुटुम्बमस्ति, 'तदपि बत संयोगसुखधीः'=तथापि खेदजनिकेयं कथा यत् पौद्गलिकसंयोगेषु दुःखपरम्पराजनकेषु सुखाभावेषु सुखबुद्धिं भ्रमात्मिकां जीवः करोति, पुद्गलद्रव्यस्य न गुणः सुखं, चेतनस्य गुणः सुखं, सुखाऽभाववति संयोगात्मकमनोज्ञपुद्गलद्रव्ये सुखकल्पना भ्रमः, यथा रजतत्वाभाववत्यां शुक्तिकायां रजतमिदमिति बुद्धि मिथ्याज्ञानाऽऽत्मिका भ्रान्ता ॥१७॥

अस्मिन् संसारे क्वचिदपि सुखं न—

'पुरा प्रेमारम्भे तदनु तदविच्छेदघटने,
तदुच्छेदे दुःखान्यथ कठिनचेता विषहते ।

विपाकादापाकाहितकलशवत्तापबहुला-
ज्जनो यस्मिन्नस्मिन् क्वचिदपि सुखं हन्त न भवे ॥१८॥

टीकाः-पुरा--प्रथमं तावत् प्रेम्ण आरम्भे--प्रेमसृष्टेरादौ दुःखानि, तदनु--प्रेमाऽऽरम्भानन्तरं 'तदविच्छेद घटने'=तस्य प्रेम्णोऽविच्छेदघटने-अखण्डितत्वकरणे दुःखानि, अथ 'तस्य--प्रेम्ण उच्छेदे--प्रियपात्रवियोगे सति पापोदये वा परपाक्षिकप्रेमविनाशे दुःखानि कठिनमना विषहते, 'आपाकाहितकलशवत्'--इष्टकापाकस्थानाऽग्निना परिपक्ववरक्तघटवत् 'तापबहुलाद् विपाकाद्'=प्रचण्डतापरूपोग्रपापकर्मोदयात , यस्मिन् भवे वज्रवत्कठिनचेताः सन , जनस्तादृशदुःखानि, विशेषतः सहते, तस्मादस्मिन् भवे क्वचिदपि स्थाने हन्तेति खेदे, न सुखमानन्दोऽपितु, अन्ततो गत्वा दुःखमेव सर्वत्र जृम्भते ॥१८॥

महामोहराजमात्रस्य रणभूमि र्भवः—

'मृगाक्षीदृग्बाणैरिह हि निहतं धर्मकटकम्,
विलिप्ता हृद्देशा इह च बहुलै रागरुधिरैः ।
भ्रमन्त्यूर्ध्वं क्रूरा व्यसनशतगृध्राश्च तदियम्,
महामोहक्षोणीरमणरणभूमिः खलु भवः ॥१९॥

टीका:- हीति निश्चये, इह=संसाररूपसमराङ्गणे 'मृगाक्षीदृग्बाणैर्निहतं धर्मकटकम्'=ललनानयनाऽपाङ्गदर्शनवेधककटाक्षलक्षबाणवर्षणै धर्मनामकं सर्वथा संरक्षणीयसेनाकदम्बकं निहतं=खण्डखण्डशः कृतं, 'इह च बहुलै रागरुधिरैं विलिप्ता हृद्देशाः'=इह यत्र भवसमराङ्गणे धर्मसैनिकानां हृदयप्रदेशा बहुलै रागनामकरुधिरै विलिप्ताः-खरण्टिताः, किञ्च 'व्यसनशतगृध्राश्च भ्रमन्त्यूर्ध्वं क्रूराः'=विपत्तिशतनामकगृध्राः क्रूराःसन्त ऊर्ध्वं भ्रमन्ति, यत्र संसारसमराङ्गणे तत्-तस्मादियं खलु--निश्चये विजयहेतवे महामोहरूपमहाराजस्य रणभूमिरूपभव एवेति न संशयः ॥१९॥

भवे मोहोन्मादस्य प्रदर्शनम्—

'हसन्ति क्रीडन्ति त्क्षणमथ च खिद्यन्ति बहुधा'
रुदन्ति क्रन्दन्ति त्क्षणमपि विवादं विदधते ।
पलायन्ते मोदं दधति परि नृत्यन्ति विवशाः,
भवे मोहोन्मादं कमपि तनुभाजः परिगताः ॥२०॥

टीका.—'भवे कमपि मोहोन्मादं परिगतास्तनुभाजः'=अस्मिन् संसारे वचनाऽतीतां मोहस्योन्मत्ततां सर्वतः परिगताः शरीरिणः, विवशाः-विह्वलाः सन्तः, क्षणं हसन्ति--हास्यं कुर्वन्ति, क्रीडन्ति-क्रीडां

विदधति, अथ च क्षणं बहुधा=बहुभिः प्रकारैः खिद्यन्ति--विषादवन्तो भवन्ति, क्षणमपि रुदन्ति, क्रन्दन्ति-परिदेवनं कुर्वन्ति, क्षणं विवादं-कलहं विदधते, क्षणं पलायन्ते=द्रुतं द्रुतं धावन्ति, क्षणं मोहं--मूढतां दधति धारयन्ति, क्षणं परिनृत्यन्ति=विविधैः प्रकारैः हर्षेण नृत्यं कुर्वन्ति. ॥२०॥

भवक्रीडा दहति हृदयं तात्त्विकदृशाम्--

'अपूर्णा विद्येव प्रकटखलमैत्रीव कुनय-
प्रणालीवाऽऽस्थाने विधववनिता यौवनमिव ।
अनिष्णाते पत्यौ मृगदृश इव स्नेहलहरी,
भवक्रीडाव्रीडा दहति हृदयं तात्त्विकदृशाम् ॥२१॥

टीका.--'अपूर्णा विद्येव'--पूर्णताविहीनज्ञानवत् (अल्पज्ञानं महाहानिकरं), 'प्रकटखलमैत्रीव'=नामाऽङ्कितदुर्जनेन सह मित्रतावत् 'कुनयप्रणालीवाऽऽस्थाने'=सभायां न्यायतो विपरीतपद्धतिवत्, 'विधववनितायौवनवत्'=मृतपतिकाया वनिताया यौवनवत् 'अनिष्णाते पत्यौ मृगदृश इव स्नेहलहरी'=शृङ्गाररङ्गविविधप्रकाराऽनभिज्ञे स्वामिनि प्रियायाःस्नेहलहरीवद् व्रीडा=लज्जाऽऽत्मिका, भवक्रीडा--कर्मकृतभवीयविविधलीला, तात्त्विकदृशां=तत्त्वपर्यन्तगामुकदृष्टिकानां, सम्यग्दृशां, पूर्वकथितदृष्टान्तवद् दहति हृदयं--अशान्तं करोत्येव, व्रीडात्मकभवक्रीडात्याग एव हृदयं शीतं शान्तं शुद्धं जनयत्येवेति ॥२१॥

भवोऽयं मिथ्यारूपः—

'प्रभाते सञ्जाते भवति वितथा स्वापकलना,
द्विचन्द्रज्ञानं वा तिमिरविरहे निर्म्मलदृशाम् ।
तथा मिथ्यारूपः स्फुरति विदिते तत्त्वविषये,
भवोऽयं साधूनामुपरतविकल्पस्थिरधियाम् ॥२२॥

टीकाः—यथा प्रभाते सञ्जाते स्वापकलना=स्वप्नगतसमृद्धिर्वितथा-अथवा सुन्दर स्वप्नानां समृद्धि र्वितथाऽसत्या भवति, यथा वा तैमिरिकरोगस्य विरहे निर्मलदृशां पूर्वीयद्विचन्द्रज्ञानं मिथ्या भवति, तथा तत्त्वभूतविषये विज्ञाते सति, उपरता विकल्पा येषां तेऽतएव स्थिरा धी येषां, तेषां साधूनां सत्पुरुषाणां भवोऽयं मिथ्यारूपो- मायारूपः स्फुरति--भासते ॥२२॥

इदानीं तु स्वात्मनि रतिरेव—

'प्रियावाणी वीणाशयनतनुसम्बाधनसुखै--
र्भवोऽयं पीयूषै र्घटित इति पूर्वं मतिरभूत् ।

अकस्मादस्माकं परिकलिततत्त्वोपनिषदा-
मिदानीमेतस्मिन्नरतिरपि तु स्वात्मनि रतिः ॥२३॥

टीका:--प्रेयसीमधुरप्रियवाचा, वीणावादित्रादिश्रवणेन शय्याकोमलस्पर्शेन शरीरशुश्रूपासंस्कार-सुगन्धपरिकर्मादिभिः जन्यैः सुखैः, अयं संसारः, पीयूषैरमृतै घंटितो-निर्मापितोऽस्ति विधात्रेति मे-मदीया मति र्बुद्धिः पूर्वमभूदासीत्, अकस्माद्-निसर्गतो, परिकलिततत्त्वोपनिषदां=सम्यगवगततत्त्वरहस्यानाम स्माकमिदानीमधुना, एतस्मिन् प्रत्यक्षरूपेऽस्मिन् भवे न रती रमणता, अपितु-परन्तु, स्वात्मनि स्वाऽऽत्म-स्वरूपे रतिरानन्द एवेति ॥२३॥

भवप्रपञ्चेभ्यो विरतिरस्तु-

'दधानाः काठिन्यं निरवधिकमाविद्यकभव-
प्रपञ्चाः पाञ्चालीकुचकलशवन्नातिरतिदाः ।
गलत्यज्ञानाऽभ्रे प्रसृमररुचावात्मनि विधौ,
चिदानन्दस्यन्दः सहज इति तेभ्योऽस्तु विरतिः ॥२४॥

टीका:—अविद्यायां भवमाविद्य', आविद्यमेवाऽविद्यकमर्थात्, 'नित्यशुच्यात्मताख्यातिरनित्याशुच्यनाऽत्मसु, अविद्येति लक्षणरूपाऽविद्याजन्या भवप्रपञ्चाः, पाञ्चालीकुचकलशवत्, निरवधिकं—निः सीमं काठिन्यं दधानाः, 'नातिरतिदाः=अतीव रतिं न ददतीत्येवंशीलाः, नातिरतिदाः, सामान्यरतिकरा भवन्ति परन्तु यदाऽज्ञाननामकेऽभ्रे-वार्दले गलति सति, प्रसृमररुचौ—विसारिकलाकिरणवति, आत्मनि विधौ-आत्मनामकचन्द्रे (आत्मनामकचन्द्रतः) चिदानन्दस्यन्दः—ज्ञानाऽऽनन्दप्रवाहः सहजो भवतीति स्थिते 'तेभ्योऽस्तु विरतिः'=अविद्याजन्यभवप्रपञ्चेभ्यो विरामो भवत्वितीच्छा ॥२४॥

को मूर्खः स्वाधीनं सुखं त्यक्त्वा पराधीनं सुखमिच्छेत्?

'भवे या राज्यश्रीर्गजतुरगगोसङ्ग्रहकृता,
न सा ज्ञानध्यानप्रशमजनिता किं स्वमनसि ।
बहिर्याः प्रेयस्यः किमु मनसि ता नाऽऽत्मरतयः,
ततः स्वाधीनं कस्त्यजति सुखमिच्छत्यथ परम् ॥२५॥

टीका:—भवे-संसारे या गजतुरगगोसङ्ग्रह-परिग्रहेण कृता राज्यश्रीरस्ति, सा राज्यलक्ष्मीः स्वमनसि ज्ञानेन ध्यानेन प्रशमेन जनिता किं न? अर्थाद् गजादिपरिग्रहकृतभवीयबाह्यराज्यलक्ष्मीतो ज्ञानादि

जनितात्मीयाऽऽभ्यन्तरीयराज्यलक्ष्मीः शाश्वती सत्या स्वतन्त्रैवेति बोध्यम् , या बहिः प्रेयस्यः--कान्तास्ता मनसि-आत्मनि, आत्मरतयः--आत्मस्वरूपरमणतानामिकाः प्रेयस्यः किमु न ? अर्थात् , आत्मन आत्मरमणतानामकप्रेयसीं मुक्त्वा नाऽन्या, शाश्वतशर्मदायिनी प्रेयसी विद्यते, ततः=तेन हेतुना स्वाधीनं सुखं कस्त्यजति ? अथ परमन्यत्सुखं क इच्छति ? न कोऽपीच्छति ॥२५॥

पराधीने सुखे को रमते ? च स्वाधीने सुखे के रमन्ते ?--

'पराधीनं शर्म क्षयि विषयकाङ्क्षौघमलिनम्,
भवे भीतेः स्थानं तदपि कुमतिस्तत्र रमते ।
बुधास्तु स्वाधीनेऽक्षयिणि करणौत्सुक्यरहिते,
निलीनास्तिष्ठन्ति प्रगलितभयाऽऽध्यात्मिकसुखे ॥२६॥

टीकाः -भवीयं सुखं विशेषयति, तथाहि-भवे-भवीयं शर्म (१) पराधीनं=स्वात्मभिन्नपुद्गलपदार्थसापेक्ष, (२) क्षयि-क्षणविनश्वरं, (३) विषयकाङ्क्षौघमलिनं=विषयविषयकरसाऽऽसक्तितो मलिनम् , (४) भीतेः स्थानं=रोगादिदुर्गत्यादिभयस्य स्थानमधिष्ठानम् , समस्ति तदपि-तथापि, कुमतिः-दुष्टदृष्टिसृष्टिविशिष्टः, तत्र भवसुखे रमते-रमणतां कुरुते, परन्तु बुधाः-सम्यग्दृष्टिज्ञप्तिसम्पन्नाः, (१) स्वाधीने-

स्वात्ममात्रमापेक्षे, (२) अक्षयिणि शाश्वते (३) करणौत्सुक्यरहिते=इन्द्रियाणामाकुलतामुक्ते (४) प्रगलित भयाऽऽध्यात्मिकसुखे=सर्वथासर्वभयरहिताऽऽध्यात्मिकसुखे निलीनास्तिष्ठन्ति–प्रलग्नाः सन्ति ॥२६॥

भवस्वरूपचिन्ताप्रकरणस्योपसंहारः—

'तदेतद् भाषन्ते 'जगदभयदानं खलु भव–
स्वरूपाऽनुध्यानं शमसुखनिदानं कृतधियः ।
स्थिरीभूते यस्मिन्विधुकिरणकर्पूरविमला,
यशः श्रीःप्रौढा स्याज्जिनसमयतत्त्वस्थितिविदाम् ॥२७॥

टीकाः—तद्=तस्मात् , कृतधियः=विद्वांसः, खलु-निश्चये, जगदभयदानं=जगज्जन्तुभ्योऽभयस्य दानं यस्मात्तत् , संवेगतो निरपेक्षतया जगति भयदानाऽभावः, 'शमसुखनिदानं' शमनामकसुखस्य निदानं–मूलकारण, वैराग्यतो–वैतृष्ण्यतः प्रशमाऽऽनन्दनिदानं, एतद्भवस्वरूपाऽनुध्यानं-प्रत्यक्षतो दृश्यमानं भव-स्वरूपचिन्तनं भाषन्ते, यस्मिन्-भवस्वरूपचिन्तने मनसि स्थिरीभूते सति, 'जिनसमयतत्त्वस्थितिविदां' =सर्वज्ञप्रणीतसिद्धान्तरहस्यस्थितिवेत्तॄणां, विधुकिरणकर्पूरविमला यशःश्रीः प्रौढा स्यादिति ॥२७॥

इत्याचार्यश्रीमद् विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद् विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां भवस्वरूपचिन्ताऽऽख्यश्चतुर्थोऽधिकारः समाप्तः ॥

अथ वैराग्यसम्भवाधिकारः पञ्चमः प्रारभ्यते–

वैराग्यलक्षणं निरूप्यते -

'भवस्वरूपविज्ञानाद् द्वेषान्नैर्गुण्यदृष्टिजात् ।
तदिच्छोच्छेदरूपं द्राग् वैराग्यमुपजायते ॥१॥

टीकाः–'भवस्वरूपविज्ञानात्'=पूर्वाधिकारवर्णितभवस्वरूपविज्ञानजन्यं, 'नैर्गुण्यदृष्टिजाद् द्वेषात्'=भवो निर्गुणः–सदोषोऽस्तीति दृष्टिः सञ्जायते, भवनैर्गुण्यदृष्टितो भवं-भवसुखं तत्साधनानि प्रति द्वेषो–अरुचिः–रसाभावो जायतेऽत एव भवद्वेषजन्यं, 'तदिच्छोच्छेदरूपं वैराग्यं द्राग् जायते' नैर्गुण्यदृष्टि-जन्यभवद्वेषजन्यं, 'तदिच्छोच्छेदरूपं वैराग्यं द्राग् जायते' नैर्गुण्यदृष्टिजन्यभवद्वेषतो संसारभोगस्येच्छा-नाशो जायते, भवेच्छानाशरूपं–मोक्षतत्साधनभिन्नवैषयिकपुद्गलपदार्थमात्रं प्रति रसासक्तिभावस्य नाशरूपं वैराग्यं झटिति सञ्जायते, वैराग्यस्योत्पत्तिक्रमश्चेत्थं (१) भवस्वरूपस्य विज्ञानं (२) ततो भवं प्रति नैर्गुण्यदृष्टिः (३) ततो भवं प्रति पूर्णद्वेषः (४) ततः भवीयसुखतत्साधनभोगेच्छानाशरूपं वैराग्यम् ॥

—विषयसौख्यसिद्धया वैराग्यमिति कुमतस्य खण्डनम्—

'सिद्धया विषयसौख्यस्य वैराग्यं वर्णयन्ति ये ।
मतं न युज्यते तेषां यावदर्थाऽप्रसिद्धितः ॥२॥

टीका:-केचिदेवं कथयन्ति यत् 'भवस्वरूपविज्ञानाद् वैराग्यं न प्रादुर्भवति परन्तु प्रियविषयसौख्य-स्य सिद्धया-प्राप्त्या विषयान् प्रति वैराग्यं भवति' अर्थाद् ये विषयसौख्यस्य सिद्धया वैराग्यं वर्णयन्ति तेषां मतं न युज्यते, कथमिति चेत् 'यावदर्थाऽप्रसिद्धितः'=यावन्तोऽर्था-विषयास्तेषामप्रसिद्धितोऽसिद्धितः, अर्थात् सर्वेषामर्थानामप्राप्तिरूपाऽसम्भवतः कथं वैराग्यं भवेत् , कारणाऽभावप्रयुक्तोऽत्र कार्याऽभावो ज्ञेयः, विषयसौख्यसिद्धितो वैराग्यं भवतीति न वक्तव्यमपितु भवस्वरूपविज्ञानादिक्रमसिद्धितो वैराग्यमेव भवति नाऽन्यथेति वक्तव्यमिति ॥२॥

**पूर्वकथितं विषयं पुनर्द्रढयति—**

**'अप्राप्तत्वभ्रमादुच्चै-रवाप्तेष्वप्यनन्तशः ।**
**कामभोगेषु मूढानां समीहा नोपशाम्यति ॥३॥**

टीका:-अनन्तभवाऽपेक्षयाऽनन्तशः-अनन्तवारान् , कामभोगेषु प्रत्येकविषयसुखेषु, अवाप्तेषु-प्राप्तपूर्वेषु सत्सु, 'अप्राप्तत्वभ्रमात्'=इमे कामभोगा अभिनवा मया प्राप्ता इति मोहजनितमहाभ्रमवशात् , मूढानां मोहमूढानां 'कामभोगेषु समीहा नोपशाम्यति'=अनन्तशः प्राप्तकामभोगविषयकभवेच्छा न शान्ता भवति प्रत्युतोद्दीप्यमाना भवति

विषयोपभोगेन पुनः कामो वर्धमानो भवति–

'विषयैः क्षीयते कामो नेन्धनैरिव पावकः ।
प्रत्युत प्रोल्लसच्छक्ति-र्भूय एवोपवर्द्धते ॥४॥

टीका:–इन्धनैः पावको न शाम्यति यथा, तथा विषयैः–कामभोगैः कामः=वेदाऽऽख्यवासना न क्षीयते, 'प्रत्युत प्रोल्लसच्छक्तिः'=कामवासनाक्षयस्तु दूरेऽस्तु प्रत्युत कामानामुपभोगेन प्रवर्धमानशक्तिशाली कामनामकः पावको 'भूय एवोपवर्द्धते'–पुनरेवाऽभिवर्धते, कामनाशं प्रति विषयसिद्धि र्न कारणम्, कामस्योत्तरोत्तरवृद्धिं प्रति कामोपभोगः कारणम्, ॥४॥

विषयेषु प्रवृत्तानां वैराग्यं दुर्लभम्—

सौम्यत्वमिव सिंहानां, पन्नगानामिव क्षमा ।
विषयेषु प्रवृत्तानां, वैराग्यं खलु दुर्लभम् ॥५॥

टी० 'सिंहानां सौम्यत्वमिव'=सिंहेषु प्रकृतितः शान्तत्वं नास्ति ततः कथ्यते यथा सिंहेषु सौम्यत्वं दुर्लभम्, 'पन्नगानामिव क्षमा'=क्रोधप्रकृतीनां सर्पाणां क्षमा–सहनशीलता दुर्लभा, तथा खलु–निश्चये 'विषयेषु प्रवृत्तानां=स्पर्शादिविषयेषु प्रवृत्तिशीलानां, वैराग्यं दुर्लभं–दुःखेन लभ्यत' इति ॥५॥

वैराग्यं प्रति विषयत्यागः कारणम्—

'अकृत्वा विषयत्यागं यो वैराग्यं दिधीर्षति ।
अपथ्यमपरित्यज्य, स रोगोच्छेदमिच्छति ॥६॥

टीकाः—'अकृत्वा विषयत्याग'=विषयाणामुपभोगं कृत्वा 'यो वैराग्यं दिधीर्षति' यो वाह्यतो वैराग्यं दिधीर्षति'—धर्त्तुमिच्छति, 'सोऽपथ्यमपरित्यज्य रोगोच्छेदमिच्छति'=कुपथ्यमत्यक्त्वा स मूर्खो रोगस्य समूलमुच्छेदमिच्छति यथा रोगस्योच्छेदं प्रति कुपथ्यत्यागः कारणम् , तथा वैराग्यं प्रति विषयोपभोग-त्यागः कारणम् ॥६॥

विषयाऽऽसक्ते चित्ते वैराग्य न तिष्ठति—

'न चित्ते विषयासक्ते, वैराग्यं स्थातुमप्यलम् ।
अयोघन इवोत्तप्ते, निपतन् बिन्दुरम्भसः ॥७॥

टीकाः—'न चित्ते विषयाऽऽसक्ते वैराग्यं स्थातुमप्यलम्'=विषयरसरसिके चित्ते—आत्मनि, वैराग्यं—भवेच्छानाशरूपं वैराग्यं स्थातुमपि नाऽलं—क्षणमपि स्थितिं कर्त्तुं न समर्थं, 'उत्तप्तेऽयोघने अम्भसो निपतन् बिन्दुरिव'=उत्कृष्टाग्नितापतप्ते लोहगोलके जलस्य बिन्दुर्निपतन्न स्थातुं यथा समर्थस्तथाऽत्रापि ज्ञेयम् ॥७॥

विषयाधीने चित्ते वैराग्यप्रतिबिम्बाऽभावः—

'यदीन्दुः स्यात् कुहूरात्रौ, फलं यद्यवकेशिनि ।
तदा विषयसंसर्गिचित्ते वैराग्यसङ्क्रमः ॥८॥

टीका:-'यदीन्दुः कुहूरात्रौ स्यात्'=यदा चन्द्रोऽमावास्यारात्रौ भवेत्, 'यद्यवकेशिनि फलं स्यात्' यदा फलवन्ध्यवृक्षे फल भवेत्, 'तदा विषयसंसर्गिचित्ते वैराग्यसङ्क्रमः'=विषयरससम्पृक्तमानसे-विषयवासनावासिताऽऽत्मपरिणामे वैराग्यप्रतिबिम्बसम्भवो भवेत्, विषयरागविरागयोः छायाऽऽतपवत् परस्परमेकत्राऽनवस्थानरूपविरोधः ॥८॥

निराबाधवैराग्यविवेचनम्—

'भवहेतुषु तद्द्वेषा-द्विषयेष्वप्रवृत्तितः ।
वैराग्यं स्यान्निराबाधं, भवनैर्गुण्यदर्शनात् ॥९॥

टीका:-'तद् भवनैर्गुण्यदर्शनात्'=तस्मात् पूर्वकथनानुसारेण भवगतगुणा भावस्य प्रत्यक्षतः, 'भवहेतुषु तद्द्वेषात्' संसारहेतुभूतमिथ्यात्वादीन्-संसारसुखहेतून् वनितादीन् प्रति तीव्रतमतिरस्कारात्, 'विषयेष्वप्रवृत्तितः'=संसारसुखजनकविषयेषु प्रवृत्तिप्रतिबन्धतः, 'वैराग्यं निराबाधं स्यात्'=भवसुखेच्छा-

नाशरूपं वैराग्यमविच्छिन्नं भवेदेव नाऽन्यथा, निराबाधवैराग्यं प्रति द्वे हेतू सम्भवतः, (१) प्रथमो हेतुः, भवनैर्गुण्यदर्शनम् (२) द्वितीयो हेतुः, विषयेषु प्रवृत्तेरभावः ॥९॥

भवनैर्गुण्यदर्शनजन्यत्वरूपवैराग्यलक्षणेऽन्वय व्यभिचारः—

'चतुर्थेऽपि गुणस्थाने, नन्वेवं तत् प्रसज्यते ।
युक्तं खलु प्रमातॄणां, भवनैर्गुण्यदर्शनम् ॥१०॥

टीकाः=ननु सम्यक्त्वनामकचतुर्थगुणस्थानेऽपि भवेच्छानाशरूपं वैराग्यं प्रसज्यते-अतिप्रसङ्गापन्नं भवति, यतः चतुर्थगुणस्थाने प्रमातॄणां-सम्यग्दृष्टिमतां भवनैर्गुण्यदर्शनं तु विद्यत एव, भवनैर्गुण्यदर्शनं तु वैराग्यरूपकार्यं प्रति कारणमस्त्येव, सति कारणे कार्येण भाव्यम् , परन्तु चतुर्थे गुणस्थानके विशिष्ट-विषयवैराग्यं नास्त्येव यतस्तत्र विषयेषु प्रवृत्तिरस्ति विषयेषु प्रवृत्तानां वैराग्यं कुतः ? तथापि भवनैर्गुण्य-दर्शनरूपकारणे विद्यमाने तत्र भवेच्छानाशरूपवैराग्यरूपकार्यापत्तिरिति चेत् ?

अन्वयव्यभिचारदोषनिवारणम्--

'सत्यं, चारित्रमोहस्य, महिमा कोऽप्ययं खलु ।
यदन्यहेतुयोगेऽपि, फलाऽयोगोऽत्र दृश्यते ॥११॥

टीकाः–'सत्यं' युष्माकं कथनं सत्यं यत् 'समग्रसामग्रीरूपभवस्वरूपविज्ञानजन्यभवनैर्गुण्यादिसत्त्वेऽपि वैराग्यकार्यरूपफलस्याऽभावोऽत्र=चतुर्थगुणस्थाने दृश्यते इत्येवं भवने कोऽपि–महाबलवान्, चारित्रमोहस्य चारित्रमोहनीयकर्मणो महिमा विद्यतेऽर्थात्, भवनैर्गुण्यदर्शनरूपकारणसत्तायामपि वैराग्यकार्यं न निष्पद्यते तत्र तेषां सम्यग्दृष्टिरूपप्रमातॄणामत्युग्रचारित्रमोहनीयकर्मण उदयः प्रबलप्रतिबन्धकोऽस्त्येव तथा च कार्यं प्रति सकलकारणसत्त्वेऽपि कश्चित् प्रबलः प्रतिबन्धक उपस्थितो भवेत्तदा सर्वकारणानि सम्भूय कार्यं न जनयन्त्येव तस्मान्नैयायिकैः प्रतिबन्धकाऽभावोऽपि कारणत्वेन गणितोऽस्ति, एवं च सम्यग्दृष्टिप्रमातॄणां भवनैर्गुण्यदर्शनम्, ततो भवद्वेषो, विषयेष्वप्रवृत्तिरपि च कारणानि भाव्यानि परन्तु तेषां सम्यग्दृष्टीनां विषयेषु प्रवृत्तिरस्ति, भवनैर्गुण्यदर्शनसत्त्वेऽपि, अत्युत्कटवैराग्यं नास्ति, यतस्तत्र चारित्रमोहनीयकर्मणो बलवदुदयरूपः प्रतिबन्धको विद्यमानोऽस्ति ॥११॥

विशिष्टदशासम्पन्ने सम्यग्दृष्टिप्रमातरि वैराग्सम्भवः–

दशाविशेषे तत्राऽपि न चेदं नास्ति सर्वथा ।
स्वव्यापारहताऽऽसङ्गं तथाच स्तवभाषितम् ॥१२॥

टी० ये सम्यग्दृष्टयः षष्ठीयोगदृष्टिप्राप्तिरूपाऽवस्थासम्पन्नाः सन्ति तेषु भवनैर्गुण्यदर्शनजन्यं भवेच्छानाशस्वरूपं वैराग्यं सम्भवत्येव विषयप्रवृत्तौ सत्यामपि, तथाच सम्यग्दर्शनस्य विशिष्ट विशददशा-

यामपि सर्वथा वैराग्यमनासक्तिरूपं न भवतीति नाऽपितु भवत्येव 'स्वव्यापारहताऽऽसङ्गं'=वैराग्यवासिताऽध्यात्मक्रियाद्वारा हत-नष्टासक्तिरूपं वैराग्यं विशिष्टसम्यग्दृष्टिप्रमातरि विद्यते एवार्थात्तेषु विषयप्रवृत्तेष्वप्यनासक्तिरूपं वैराग्यम प्रतिहतं भवत्येव, तथाच स्तवभाषितम्'=भगवद्भि र्हेमचन्द्रसूरीश्वरैर्वीतरागस्तवे तथाच भाषितमस्ति ॥१२॥

— वीतरागस्तवस्य साक्षिरूपा गाथा —

यदा मरुन्नरेन्द्रश्रीस्त्वया नाथोपभुज्यते ।
यत्र तत्र रति र्नाम विरक्तत्वं तदापि ते ॥१३॥

टीकाः-हे देवाधिदेव ! नाथ ! त्वया यदा सुरेन्द्रस्य नरेन्द्रस्य च श्रीरैश्वर्यमुपभुज्यते, तदाऽपि यत्र तत्र रतिर्नाम विरक्तत्वं-वैराग्यं; ते-तव विद्यतेऽर्थाद् या काऽपि रति र्यत्र कुत्र दृश्यते तत्र सर्वत्र परमात्मनो वैराग्यमेव, स्वकीयसम्यगुत्कृष्टदृष्टिबलात्प्रभू रागस्थानमपि वैराग्यस्थाने परिवर्त्तयते ॥१३॥

विरक्तस्य सर्वत्र रतिः शुभवेद्यत एव भवति

भवेच्छा यस्य विच्छिन्ना, प्रवृत्तिः कर्मभावजा ।
रतिः साऽस्य विरक्तस्य, सर्वत्र शुभवेद्यतः ॥१४॥

टीकाः—यस्य=सम्यग्दृष्टेः प्रमातु र्भवेच्छा=विषयसुखविषयिणी लालसा विच्छिन्ना=विच्छेदमापन्ना, तस्य=भवेच्छाविच्छेदमापन्नस्य विशिष्टसम्यक्त्वसम्पन्नस्य, विरक्तस्य-वैराग्यवतो, विषयेषु प्रवृत्ति र्निकाचितकर्मोदयप्रभावतो भवति, तत एव कथ्यते, विरक्तस्य यत्र यत्र रतिभावस्तत्र सर्वत्र शुभवेद्यतो दृश्यते, सातवेदनीयकर्मण उदय एव मुख्यं कारणं भवति, विशिष्टज्ञानदशास्थिताः सम्यग्दृष्टयो निकाचितभोग्यावलिकर्मोदयेन सांसारिकविषयेषु बाह्यतो रमन्ते न तु मनसा ॥१४॥

— अस्मिन् विषये आक्षेपकज्ञानतो भोगसान्निध्येऽपि न शुद्धिक्षयः

'अतश्चाक्षेपकज्ञानात् कान्तायां भोगसन्निधौ ।
न शुद्धिप्रक्षयो यस्माद्धारिभद्रमिदं वचः ॥१५॥

टीकाः—'अतश्चाक्षेपकज्ञानात्'=रागवत्यामवस्थायां रममाणं मानसं, तत आक्षिपदाकर्षयद् विषयान् प्रति सविवेकं ज्ञानं 'आक्षेपकज्ञानं' तस्माद्, विशिष्टसम्यग् दृष्टीनां 'कान्तायां भोगसन्निधौ'=कान्तानामकषष्ठीयोगदृष्टौ कामिन्यादिभोगोपभोगसामग्रयाः सान्निध्येऽपि 'शुद्धिप्रक्षयो न'=वैराग्यादिरूपमानसिकनैर्मल्यस्य प्रकर्षेण क्षयो न भवत्यर्थाद् भोगस्य पार्श्वे कायस्य सत्तायामपि मनस्तु मोक्षादौ रमते, योगदृष्टिसमुच्चये कान्तानामकषष्ठीयोग दृष्टौ भगवतो हरिभद्रसूरेरिदं वचोऽस्ति तदग्रेतनश्लोकेषु श्रूयताम् ॥१५॥

हारिभद्रवचःसाक्षिकगाथा

'मायाऽम्भस्तत्त्वतः पश्यन्ननुद्विग्नस्ततो द्रुतम् ।
तन्मध्येन प्रयात्येव यथा व्याघातवर्जितः ॥१६॥

टीकाः—षष्ठीकान्तादृष्टौ कथितमस्ति यन्मायाऽम्भः—मायारूपजलं मरुमरीचिकातत्त्वतः—मायाजलत्वेन जलाभासत्वेन, पश्यन्-सम्यग् जानन्नात्मा, 'अनुद्विग्नः'उद्वेगशून्यः सन् , यथा व्याघातवर्जितस्ततो द्रुतं तन्मध्येन प्रयात्येव'=ततस्तन्मायाजलमध्येन यथा बाधारहितः सन् स्वकमार्गेऽस्खलितगत्या प्रयाणं करोत्येव ॥१६॥

— तदेवाधिकं स्पष्टयति-घटयति च —

'भोगान् स्वरूपतः पश्यं-स्तथा मायोदकोपमान् ।
भुञ्जानोऽपि ह्यसङ्गः सन् प्रयात्येव परं पदम् ॥१७॥

टीकाः—'तथा मायोदकोपमान्'=पूर्वोक्तदृष्टान्तवत्तेन प्रकारेण, मायाजलसदृशान् 'स्वरूपतः' प्रकृतितः, भोगान् मायारूपेण 'पश्यन्' तत्त्वदृष्टितो जानानो भुञ्जानोऽपि हि निःसङ्गोऽनासक्तः सन्, परं पदं प्रयात्येव , भोगे रागरसाभावो दुर्लभः दशाविशेषे सुलभस्ततो यः कोऽपि निःसङ्गः स परं पदं प्रयात्येवेति नियमः 'सङ्गः सर्वाऽऽत्मना त्याज्यः' इति भगवद्गीतोक्त्याऽपि त्याग एव श्रेयानिति ॥१७॥

**भोगाऽभिनन्दिनो जीवस्य भवसागरतस्तरणं न**

'भोगतत्त्वस्य तु पुन-र्न भवोदधिलङ्घनम् ।
मायोदकदृढावेशा-त्तेन यातीह कः पथा ॥१८॥

टीकाः-पुनः-किञ्च, तुर्भेदे, 'भोगतत्त्वस्य'=भोग एव तत्त्वं-सारं यस्य तस्य भोगतत्त्वस्य, 'मायोदकदृढावेशात्' मायाजलरूपभोगे सत्यजलसुखत्वेन दृढ-परिपक्वभ्रमबुद्धिहेतुतः 'न भवोदधिलङ्घनम्' संसारसागरान्निस्तारो न भवत्येव तस्मादिह जगति कः, सत्यजलरूपमोक्षसुखविपयकबुद्धिमान् उत्तमः पुरुषः, तेन मायोदकसमभोगवता मार्गेण याति ? न कोऽपि सत्यज्ञानी कदाचिदपि यातीत्यर्थः ॥१८॥

**भोगतत्त्वस्थितस्य जीवस्य मोक्षमार्गे गतिर्न**

'स तत्रैव भयोद्विग्नो यथा तिष्ठत्यसंशयम् ।
मोक्षमार्गेऽपि हि तथा भोगजम्बालमोहितः ॥१९॥

टीकाः-मायाजलं सत्यत्वेन मन्यमानः स बहिरात्मा-भोगतत्त्वः सभयः सोद्वेगः सन्, तत्रैव=मायोदकाभभोगतत्त्वे निःसंशयं तथा तिष्ठत्येव यथा भोगरूपकर्दमे मोहमूढः सन् मोक्षमार्गेऽपि पदमपि पुरतो गन्तुं न शक्नोतीति ॥१९॥

– कान्तादृष्टिस्थसम्यग्दृशां भोगयोगो बलीयसीं धर्मशक्तिं न हन्त्येव –

'धर्मशक्तिं न हन्त्यत्र भोगयोगो बलीयसीं ।
हन्ति दीपाऽपहो वायु–र्ज्वलन्तं न दवानलम् ॥२०॥

टीकाः दशाविशेषमापन्नानां सम्यग्दृशां 'भोगयोगः'=विषयेषु प्रवृत्तिमान् , आत्यन्तिकबलवत्त्वात् , आत्मीयधर्मशक्तिं न हन्त्येव, भोगयोगो धर्मशक्तिं हन्तीति सामान्यम् , परन्तु भोगयोगो बलीयसीं धर्मशक्तिं न हन्त्येवेति विशेषः, 'यथा दीपापहो वायुः' अल्पशक्तिकं दीपं वायुर्हन्ति परन्तु ज्वलन्तं दावानलं वायुर्न हन्ति तथाऽल्पशक्तिवतीं धर्मशक्तिं भोगयोगोऽवश्यं हन्ति परन्तु बलीयसीं न हन्त्येव ॥२०॥

– कर्मबन्धे विषयासक्तिरेव हेतुर्न विषयमात्रम् –

बध्यते बाढमासक्तो, यथा श्लेष्मणि मक्षिका ।
शुष्कगोलकवदश्लिष्टो, विषयेभ्यो न बध्यते ॥२१॥

टीकाः–विषयेषु बाढमत्यन्तमासक्तः कर्मभिर्बध्यते यथा श्लेष्मणि मक्षिका, कर्मबन्धं प्रति रागः-स्नेहः कारणम् , अश्लिष्टोऽनासक्तो विषयेभ्यो न बध्यते–विषयमात्रेण कर्मभिर्न बध्यते, यथा शुष्कगोलको वा पुष्करपलाशवन्निर्लेपो भवतीति ॥२१॥

॥८५॥

—योगस्य स्वामिनां प्रवृत्तिरपि निवृत्तिरिव नो दुष्टा—

'बहुदोषनिरोधार्थमनिवृत्तिरपि क्वचित् ।
निवृत्तिरेव नो दुष्टा, योगाऽनुभवशालिनाम् ॥२२॥

टीकाः—'योगानुभवशालिनाम्'=योगस्य योऽनुभवस्तद्विशिष्टानां 'बहुदोषनिरोधार्थे'=बहूनां दोषाणां निरोधमुद्दिश्य, 'अनिवृत्तिरपि'=विषयेषु प्रवृत्तिरपि 'क्वचिद्' अपवादपदे पुरुषविशेषाणां वा 'निवृत्तिरिव—महादोषस्य निवृत्तिरिव नो दुष्टा'—नो दोषावहा, विशिष्टाऽन्तरात्मा विषयेषु प्रवृत्तोऽपि, अनासक्तिरूपवैराग्येण सुवासितस्तिष्ठत्येव ॥२२॥

—येन यस्य कदाचनाऽशुद्धिस्तेन तस्य कदाचिच्छुद्धिः—

'यस्मिन्निषेव्यमाणेऽपि यस्याऽशुद्धिः कदाचन ।
तेनैव तस्य शुद्धिः स्यात्, कदाचिदिति हि श्रुतिः ॥२३॥

टीकाः—श्रुतावपि कथितमस्ति यद् यस्मिन्—भोगे निषेव्यमाणेऽपि यस्याऽऽत्मनः कदाचनाऽशुद्धिः—कर्मलेपो भवति, कदाचिद् विशिष्टापूर्वाऽवस्थाप्राप्त्यनन्तरं, तस्याऽऽत्मनः, तेन—भोगेन, शुद्धिः निर्लेपता स्यादिति ॥२३॥

**कर्मबन्धं प्रति नियमाऽनियमविवेकः**

'विषयाणां ततो बन्ध-जनने नियमोऽस्ति न ।
अज्ञानिनां ततो बन्धो ज्ञानिनां तु न कर्हिचित् ॥२४॥

टीकाः—ततो-तस्मात्कारणाद् 'बन्धजनने'-कर्मबन्धं प्रति विषयाणां—विषयप्रवृत्तेर्न नियमोऽर्थाद् विषयसम्बन्धमात्रेण कर्मबन्धोऽवश्यं भवतीति न नियमः-एकान्तः, परन्तु 'अज्ञानिनां-आत्मादितत्त्वज्ञान-विवेकरहितानां विषयेषु प्रवृत्तावप्रवृत्तौ वा सत्यां कर्मबन्धोऽवश्यं भवति, ज्ञानिनां तु, आत्मादितत्त्व-विशेषज्ञानिनां तु विषयेषु प्रवृत्तावप्रवृत्तौ वा सत्यां कर्मबन्धोऽवश्यं कदाचिन्न भवति, कर्मबन्धाऽबन्धविषये ज्ञानाऽज्ञानयोः कोऽप्यपूर्वः प्रभावः ॥२४॥

**विषयसेवनाऽसेवनव्यतिक्रमे परमार्थः**

सेवतेऽसेवमानोऽपि सेवमानो न सेवते ।
कोऽपि परजनो न स्या-दाश्रयन् परजनानपि ॥२५॥

टीकाः—यो मिथ्यादृगज्ञानी विषयानसेवमानोऽपि (कायेन) विषयान् सेवत एव (मनसा) यदा यः सम्यग् दृग् ज्ञानी विषयान् सेवमानोऽपि वस्तुतो न सेवते, विशिष्टदशापन्नः सम्यग् दृगात्मा

संसारस्याश्रयमात्रेण संसारी न भवत्येव, कारणवशात्, परजनानप्याश्रयन् कोऽपि परजनो न स्यादेवेति ॥२५॥

उत्तमोत्तमानां सर्वत्र वैराग्यं न हन्यत एव

'अत एव महापुण्य-विपाकोपहितश्रियाम् ।
गर्भादारभ्य वैराग्यं नोत्तमानां विहन्यते ॥२६॥

टीका:—'अत एव'=विशिष्टज्ञानी सम्यग्दृगात्मा, विषयान सेवमानोऽप्यसेवमानो वैराग्यवान् भवत्यत एव 'महापुण्यविपाकोपहितश्रियां'=पुण्यानुबन्धिपुण्यशिरोमणिभूततीर्थङ्करनामकर्मविपाकृत उपनीतबाह्याभ्यन्तरपरमैश्वर्य-परमविभूतिसम्पन्नानामुत्तमानां, 'गर्भादारभ्य' गर्भावस्थात आरभ्य 'वैराग्यं न विहन्यते'=भवेच्छानाशरूपं वैराग्यमप्रतिहतं विद्यत एव ॥२६॥

—वैराग्यलाभस्य राजमार्ग एष—

'विषयेभ्यः प्रशान्तानामश्रान्तं विमुखी–कृतैः ।
करणैश्चारुवैराग्य–मेष राजपथः किल ॥२७॥

टीका:—'अश्रान्तं=सातत्येन विषयेभ्यो—शब्दादिविषयेभ्यो विमुखीकृतैः—समाहृतैः, करणैरिन्द्रियैर्द्वारैः प्रशान्तानां—उपशान्तचित्तविकाराणां, यद्वैराग्यं तच्चारुवैराग्यं भवतीत्येष किल वैराग्यप्राप्ते राजपथः--

राजमार्ग एवेति अत्र ग्रन्थकारेण महर्षिणैवं सूचितमस्ति यदिन्द्रियविषयेभ्यो निवृत्तिरेव वैराग्यस्य राजपथः ॥२७॥

वैराग्यलाभस्यैकपदीरूपमार्गः—

'स्वयं निवर्त्तमानैस्तै–रनुदीर्णैरयन्त्रितैः ।
तृप्तैर्ज्ञानवतां तत् स्या-दसावेकपदी मता ॥२८॥

टीकाः–ज्ञानवतां'=विशिष्टज्ञानातिशयशालिनां, 'अयन्त्रितैः=विषयान् प्रति गच्छत्स्विन्द्रियेषु नियन्त्रणरहितैः, 'अनुदीर्णैः=विषयेभ्यः प्रतिनिवृत्त्यर्थं प्रयत्नरहितैः, तृप्तैः स्वयं निवर्त्तमानैस्तैः'=सदा सन्तुष्टैः स्वयं विषयेभ्यो निवर्त्तमानैस्तैरिन्द्रियै र्यद् वैराग्यं स्यादसौ–वैराग्यलाभस्यायमेकपदीरूपो-मार्गः, राजमार्गः सर्वैःसाधारणतया सेवनीयः स्यात्, क्वचित् केनचित् समर्थेनामुकसंयोगेषु गन्तुं शक्यतेऽसावेकपदीमार्गः ॥२८॥

बलेन न करणानि दमनीयानि––

'बलेन प्रेर्यमाणानि, करणानि वनेभवत् ।
न जातु वशतां यान्ति, प्रत्युताऽनर्थवृद्धये ॥२९॥

टीकाः-बलेन -बलात्कारेण दमनरूपं नियन्त्रणं प्रति प्रेर्यमाणानि करणानीन्द्रियाणि 'वनेभवत्'-वन्यहस्तिवन्न कदाचित् स्ववशे यान्ति प्रत्युताऽनर्थानां वृद्धये भवन्ति-भयङ्करोत्पादने क्षमाणि भवन्ति॥२९॥

सम्यग्ज्ञानगर्भितवैराग्यं विना क्रियादम्भो नरकायैव—

'पश्यन्ति लज्जया नीचै-र्दुर्ध्यानं च प्रयुञ्जते ।
आत्मानं धार्मिकाभासाः क्षिपन्ति नरकाऽवटे ॥३०॥

टीकाः--'पश्यन्ति लज्जया नीचैः'=बहुलज्जिता सर्वथा नीचै र्दृष्ट्वा गच्छन्ति परन्तु हृदयान्त-र्दुर्ध्यानं=आर्त्तरौद्रात्मकं दुर्ध्यानद्वयं 'प्रयुञ्जते'=प्रयोगविषयीकुर्वतेऽर्थाद् ये स्वचित्तमध्येऽर्थकामविषयक-विषयवासनावह्निसाद् भवन्ति ते 'धार्मिकाऽऽभासाः'=वेषतो दम्भक्रियातो वा धार्मिकवद् भासमानाः, बाह्यतो लज्जया नीचैः पश्यन्तो हृदि च दुर्ध्यानं कुर्वाणा धार्मिकाभासा आत्मानं नरकावटे क्षिपन्ति--नरक-कूपके नयन्ति ॥३०॥

अद्भुतवैराग्यवानेवेन्द्रियवञ्चको भवति—

'वञ्चनं करणानां तद्विरक्तः कर्त्तुमर्हति ।
सद्भावविनियोगेन, सदा स्वाऽन्यविभागवित् ॥३१॥

टीकाः–'सदा स्वाऽन्यविभागवि'दिति–निरन्तरं, किं स्वं ? किं स्वतोऽन्यत्तस्य विभागं-भावनादिद्वारा भेदं वेत्तीत्यर्थः, अर्थात् परं परत्वेन स्वं च स्वत्वेन विभजन् विरक्त आत्मा, प्रतिबोधयतीन्द्रियाणि 'भो इन्द्रियवर्ग ! विषयरूपे परवस्तुनि कथं त्वं रज्यसि तेन सह रागमम्बधेनाऽलमेवं सम्बोध्येन्द्रियाणां भोगविषयिणी याचनां शमयतीत्येतद् वञ्चनं करणैः सह विरक्ताऽऽत्मनाम्, प्रकारान्तरेण वेन्द्रियाणामाहारादिरूपादिविषयकलोभस्योपस्थितौ वीतरागदेवजिनवचनादिसद्भावेषु योजनरूपमूर्ध्वीकरणं कर्त्तव्यमित्येवं विषयपात्रविनिमयेन करणानि वञ्चनीयानीति चातुर्यविशेषं दर्शयति कथमिति चेत् ? स स्वाऽन्य विभागविदस्ति--स्वपरभेदविज्ञानस्वामी वर्तते यतः ॥३१॥

अत्यद्भुतविरागताया लक्षणम्--

'प्रवृत्तेर्वा निवृत्तेर्वा न सङ्कल्पो न च श्रमः ।
विकारो हीयतेऽक्षाणामिति वैराग्यमद्भुतम् ॥३२॥

टीकाः-यत्र विषयेषु प्रवृत्ति विधातुं सङ्कल्पो-विचारो न, विषयेभ्यः करणानि निवर्त्तयितुं न श्रमः-प्रयासः कर्त्तुं युज्यते, तथापि निसर्गतस्तद्विकारो हीयते–क्षीयत एव तद्वैराग्यमद्भुतकोटिकं भवेदिति, अर्थाच्चारुवैराग्यसत्कराजपथे, इन्द्रियाणि विषयेभ्यो निवर्त्तयितुं परिश्रमो विद्यते, वैराग्यस्य चैकपदीमार्गे विषयेषु प्रवृत्तो भवितुं सङ्कल्पो विद्यते, द्वयमिदं यत्र न विद्यते तथापि यत्र वैराग्यं तदद्भुतं वैराग्यं कथ्यते ॥३२॥

ज्ञानिनां लोकवर्तिनां योगिनां विषयगतप्रवृत्तयो नो बाधायै—

'दारुयन्त्रस्थपाञ्चालीनृत्यतुल्याः प्रवृत्तयः ।
योगिनो नैव बाधायै, ज्ञानिनो लोकवर्त्तिनः ॥३३॥

टीकाः—संसारस्था अप्याक्षेपकज्ञानस्वामिनः कान्तादृष्टेरवस्थास्थाविरतसम्यग्दृष्टियोगिनो विषय-भोगादिविषयकप्रवृत्तयः सर्वा अपि दारुयन्त्रस्थपाञ्चालीनृत्यतुल्या भवन्ति यथा काष्ठपाञ्चाल्यो नृत्यन्ति क्रीडन्ति तिष्ठन्ति च सर्वत्र क्रियासु हृदये न हर्षशोकौ भवतो यतः सूत्रधारेण प्रेरिताः काष्ठपाञ्चाल्यः सर्वक्रियां कुर्वते, तथा विशिष्टज्ञानदृष्टिसम्पन्ना योगिनस्तथाविधा भवन्ति, भोगस्य सर्वप्रवृत्तिषु योगिनां केऽपि रागादिभावा न प्रायःस्पृशन्ति, परन्तु निकाचितभोगावलि(भोग्य)कर्मरूपसूत्रधारेण प्रेरिता योगिनो भोगभोगिनो भवन्ति अर्थाद्विषयेषु प्रवृत्तौ सत्यां विरक्तौ च सत्यामेतेषां योगिनां भोग-भोगप्रवृत्तिरपि कदाचिन्न बाधायै प्रत्युत कर्मनाशायैव भवति ॥३३॥

इयं च 'योगमायेति कथ्यते परैः—

'इयं च योगमायेति प्रकटं गीयते परैः ।
लोकानुग्रहहेतुत्वान्नास्यामपि च दूषणम् ॥३४॥

टीका परैः-दर्शनान्तरीयैः, इयं च परमात्मशक्तिः, 'योगमाये' ति शब्देन प्रकटं गीयते-परिभाष्यते, ते कथयन्ति च यद् दुष्टं कंसं हन्तुं परमात्मशक्तिः कृष्णरूपं प्रतिपद्य देवकीतो जन्म प्राप्य दुष्टं कंसं जघान अत्र दुष्टकंससंहारद्वारा, लोकस्योपर्यनुजग्राहैतदनुग्रहदृष्ट्यैतद् दुष्टवधप्रवृत्तावपि न किञ्चि-द्दूषणम् , ॥३४॥

### सिद्धान्तद्वारैतद् विषयसमर्थनम्

'सिद्धान्ते श्रूयते चेयमपवादपदेष्वपि ।
मृगपर्षत्परित्रासनिरासफलसङ्गता ॥३५॥

टीकाः-'इयं चापवादपदेषु सिद्धान्तेऽपि श्रूयते'=दुष्टवधादिरूपलोकानुग्रहकारकप्रवृत्तिः सिद्धान्ते-ऽपवादपदेषु श्रूयते, मृगपर्षत्परित्रासनिरासफलसङ्गता=धर्मभयान्वितागीतार्थताऽसम भावोपेतसंसारस्थाऽऽत्म-रूपमृगपर्षद्द्वारा [दुष्टसमूहद्वारा] जैनशासनस्योपरिविहिताक्रमणं [परित्रासः] यदाऽऽगच्छेत्तदा-तदाऽऽक्रमणप्रतिनिवर्त्तनफलं, अपवादपदस्य सेवनरूपप्रवृत्तित, आगच्छति, भगवान् कालकाचार्यः, साध्व्या उपरि (शासनस्योपरि) आगत आक्रमणे सति तत् प्रतिकारार्थं, अपवादपदभूता प्रवृत्तिः प्रसिद्धैवेति ? (३५) [सिद्धान्ते-जिनकल्पसूत्रे, सप्ताधिकाशीतितमगाथायां तच्चूर्णिमध्ये विषमपदवृत्तौ]

—चतुर्थगुणस्थानेऽपि विशिष्टवैराग्यं विद्यत एव—

'औदासीन्यफले ज्ञाने, परिपाकमुपेयुषि ।
चतुर्थेऽपि गुणस्थाने, तद्वैराग्यं व्यवस्थितम् ॥३६॥

टीकाः—औदासीन्यफले=स्वपरविवेकज्ञानजन्यमौदासीन्यं समता वा माध्यस्थ्यं, फलं यस्य तस्मिन्, परिपाकमुपेयुषि=परिपक्वतां सम्प्राप्ते ज्ञाने सति चतुर्थेऽपि गुणस्थाने पूर्वोक्तसम्यग् दृष्टिमतामात्मनां विशिष्टयोगदृष्टिसम्पन्नानां विषयजन्यसुखादिषु तद्विशिष्टं वैराग्यं व्यवस्थितम्, अर्थादेतादृशौदासीन्य-प्राप्त्यनन्तरमपि ते सम्यग्दृष्टिमहात्मानो विषयेषु यां प्रवृत्तिं कुर्वन्ति तत्र निकाचितभोग्यकर्मैव हेतु र्ज्ञेयः, विषयसुखप्रवृत्तावपि चतुर्थगुणस्थानेऽपि वैराग्यमप्रतिहतमेव ॥३६॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद् विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां वैराग्यसम्भवाख्यः पञ्चमो ऽधिकारः समाप्तः ! श्लो. सं. १३८ ।

अथ वैराग्यभेदनामकःषष्ठोऽधिकारः प्रक्रम्यते

—वैराग्यस्य भेदत्रयस्य वर्णनम्—

तद्वैराग्यं स्मृतं दुःख-मोहज्ञानाऽन्वयात् त्रिधा ।
तत्राद्यं विषयाऽप्राप्तेः, संसारोद्वेगलक्षणम् ॥१॥

टीकाः—तद्-पूर्वोक्तलक्षणलक्षितं वैराग्यं दुःखगर्भ-मोहगर्भज्ञानगर्भभेदात् त्रिधा—त्रिविधं, तत्र त्रिविधवैराग्यमध्ये, आद्यं-प्रथमं दुःखगर्भं वैराग्यं, 'विषयाऽप्राप्तेः' सांसारिकेन्द्रियसुखादिसाधनरूपविषयाणां प्राप्तेरभावजन्याद् दुः खात् संसारत उद्वेग--खेदलक्षणं कथ्यते दुःखगर्भितं वैराग्यमिति ॥१॥

दुःखगर्भवैराग्यवतां विनिपातोऽपि जायते

'अत्राङ्गमनसोः खेदो, ज्ञानमाप्यायकं न यत् ।
निजाऽभीप्सितलाभे च. विनिपातोऽपि जायते ॥२॥

टीका-अत्र दुःखगर्भवैराग्ये दुःखात् संसारं त्यजतां जीवानां केशलुञ्चनविहारादिकष्टतः कायस्य च गुर्वाज्ञापारतन्त्र्यतः सततं मनसः खेद उद्वेगो वर्त्तते, यतो दुःखभीरुभ्यो न कष्टानि रोचन्ते, यत्किञ्चिच्छास्त्रज्ञानमल्पीयस्तरं प्राप्तमस्ति, तदपि स्वात्मानं प्रीणयितुं नाऽलमत एवापुष्टज्ञानं शरीरमनसोर्विषयाभावप्रयुक्तं खेदं जनयितुं समर्थं, किञ्च दुःखगर्भवैराग्यवतां स्वमनोमनीषितपदार्थसार्थस्य लाभे सति 'विनिपातोऽपि जायते'=त्यागिदशासूचकवेषत्यागाऽनन्तरमधःपातोऽपि जायते, सर्वेषां दुःखगर्भितवैराग्यवतां विनिपात एव जायते इत्यपि न परन्तु 'विनिपातोऽपि' अत्रापिशब्देनैवं सूचितं यत् केषाञ्चिद् विनिपातोऽपि जायते ॥२॥

—दुःखगर्भवैराग्यवन्तः पूर्वमेव यत्कुर्वन्ति तद्वर्णनम्—

'दुःखाद्विरक्ताः प्रागेवे-च्छन्ति प्रत्यागतेः पदम् ।
अधीरा इव सङ्ग्रामे प्रविशन्तो वनादिकम् ॥३॥

टीका: 'दुःखाद् विरक्ता--उद्विग्नास्त्यक्तसंसारा अत्यन्तकष्टं भविष्यति सम्भाव्य साधुत्वेपप्रतिपत्तेः पूर्वमेव साधुत्वे यदा कष्टपातो भवेत्तदा साधुत्वतः प्रतिनिवृत्त्य 'प्रत्यागतेः पदमेवेच्छन्ति'=प्रत्यागत्य स्थिरतार्थं स्थानं पूर्वमेव निश्चिन्वन्त्येव यथा सङ्ग्रामेऽधीराः-कातरा योग्यसमयं प्राप्य ततो नंष्ट्वा कुत्रचित् प्रविश्य-निलीय स्थिरतार्थं यथा कमलवनादि स्थानं पूर्वमेव निश्चितं कुर्वन्ति तथाऽत्रापि ज्ञेयम् ॥३॥

दुःखगर्भवैराग्यवन्तः शुष्कतर्कादिकं पठन्ति स्वार्थाय

'शुष्कतर्कादिकं किञ्चि—द्वैद्यकादिकमप्यहो ।
पठन्ति ते शमनदीं, नतु सिद्धान्तपद्धतिम् ॥४॥

टीकाः—दुःखगर्भवैराग्यविशिष्टा जीवाः शुष्कतर्कादिकमहो इत्याश्चर्ये किञ्चिद् वैद्यकज्योतिपादिकमपि पठन्ति--भणन्ति परन्तु ते-दुःखगर्भितविरागिणो रङ्काः, 'शमनदीं'=शमनीरभरितनदीरूपां सिद्धान्त-पद्धतिं=शास्त्रशासितमार्गरूपां प्रणालिकां न स्पृशन्त्यपि ॥४॥

— ग्रन्थानामुपर्युपरिबोधेन दुःखगर्भविरागिणो गर्विष्ठा भवन्ति—

ग्रन्थपल्लवबोधेन, गर्वोष्माणं च बिभ्रति ।
तत्त्वान्तं नैव गच्छन्ति, प्रशमाऽमृतनिर्झरम् ॥५॥

टीकाः—'ग्रन्थपल्लवबोधेन'=ग्रन्थानामुपर्युपरि—अन्तरङ्गरहस्यरहितबोधेन गर्वोष्माणं=गर्वस्योष्णतां बिभ्रति—धारयन्ति परन्तु एते दुःखगर्भितवैराग्याधीनाः, 'प्रशमाऽमृतनिर्झरं'=प्रशम एवामृतं तस्य निर्झरसमं 'तत्त्वान्तं=ग्रन्थानां सारभूतमन्तं=सिद्धान्तभूतरहस्यं 'नैव गच्छन्ति'=नैव प्राप्नुवन्ति ॥५॥

दुःखगर्भितवैराग्यवन्तो गृहस्थान्नातिशेरते

'वेषमात्रभृतोऽप्येते, गृहस्थान्नाऽतिशेरते ।
न पूर्वोत्थायिनो चरमा—न्नापि पश्चान्निपातिनः ॥६॥

टीकाः—'वेषमात्रभृतोऽप्येते'=दुःखगर्भितवैराग्यास्त्वेते साधुवेषमात्रधारिणः साधुताशून्याः 'गृहस्था-न्नाऽतिशेरते'=गृहस्थादधिकतां न भजन्ते, 'यस्मान्न पूर्वोत्थायिनः,=गृहस्थत्वतो न पूर्वमुत्थितवन्तः-गृहस्थभावतो न निर्गता इत्यर्थः, 'नाऽपि पश्चान्निपातिनः'=गृहस्थधर्मतः पश्चात् साधुधर्मे न प्रविष्टा हृदयतः, परन्तु मस्तकमात्रं मुण्डितं न मनो मुण्डितमिति रीतिमन्तस्ते ॥६॥

–दुःखगर्भवैराग्यवन्तः पूर्वमेव यत्कुर्वन्ति तद्वर्णनम्–

'दुःखाद्विरक्ताः प्रागेवे-च्छन्ति प्रत्यागतेः पदम् ।
अधीरा इव सङ्ग्रामे प्रविशन्तो वनादिकम् ॥३॥

टीकाः 'दुःखाद् विरक्ता--उद्विग्नास्त्यक्तसंसारा अत्यन्तकष्टं भविष्यति सम्भाव्य साधुत्वेपप्रतिपत्तेः पूर्वमेव साधुत्वे यदा कष्टपातो भवेत्तदा साधुत्वतः प्रतिनिवृत्य 'प्रत्यागतेः पदमेवेच्छन्ति'=प्रत्यागत्य स्थिरतार्थं स्थानं पूर्वमेव निश्चिन्वन्त्येव यथा सङ्ग्रामेऽधीराः-कातरा योग्यसमयं प्राप्य ततो नंष्ट्वा कुत्रचित् प्रविश्य-निलीय स्थिरतार्थं यथा कमलवनादि स्थानं पूर्वमेव निश्चितं कुर्वन्ति तथाऽत्रापि ज्ञेयम् ॥३॥

दुःखगर्भवैराग्यवन्तः शुष्कतर्कादिकं पठन्ति स्वार्थाय

'शुष्कतर्कादिकं किञ्चि—द्वैद्यकादिकमप्यहो ।
पठन्ति ते शमनदीं, नतु सिद्धान्तपद्धतिम् ॥४॥

टीकाः—दुःखगर्भवैराग्यविशिष्टा जीवाः शुष्कतर्कादिकमहो इत्याश्चर्ये किञ्चिद् वैद्यकज्योतिषादिकमपि पठन्ति--भणन्ति परन्तु ते-दुःखगर्भितविरागिणो रङ्काः, 'शमनदीं'=शमनीरभरितनदीरूपां सिद्धान्तपद्धतिं=शास्त्रशासितमार्गरूपां प्रणालिकां न स्पृशन्त्यपि ॥४॥

— ग्रन्थानामुपर्युपरिबोधेन दुःखगर्भविरागिणो गर्विष्ठा भवन्ति—

ग्रन्थपल्लवबोधेन, गर्वोष्माणं च बिभ्रति ।
तत्त्वान्तं नैव गच्छन्ति, प्रशमाऽमृतनिर्झरम् ॥५॥

टीकाः—'ग्रन्थपल्लवबोधेन'=ग्रन्थानामुपर्युपरि—अन्तरङ्गरहस्यरहितबोधेन गर्वोष्माणं=गर्वस्योष्णतां बिभ्रति—धारयन्ति परन्तु एते दुःखगर्भितवैराग्याधीनाः, 'प्रशमाऽमृतनिर्झरं'=प्रशम एवामृतं तस्य निर्झरसमं 'तत्त्वान्तं=ग्रन्थानां सारभूतमन्तं=सिद्धान्तभूतरहस्यं 'नैव गच्छन्ति'=नैव प्राप्नुवन्ति ॥५॥

दुःखगर्भितवैराग्यवन्तो गृहस्थान्नातिशेरते

'वेषमात्रभृतोऽप्येते, गृहस्थान्नाऽतिशेरते ।
न पूर्वोत्थायिनो यस्मा-न्नापि पश्चान्निपातिनः ॥६॥

टीकाः—'वेषमात्रभृतोऽप्येते'=दुःखगर्भितवैराग्यास्त्वेते साधुवेषमात्रधारिणः साधुताशून्याः 'गृहस्था-न्नाऽतिशेरते'=गृहस्थादधिकतां न भजन्ते, 'यस्मान्न पूर्वोत्थायिनः,=गृहस्थत्वतो न पूर्वमुत्थितवन्तः-'नाऽपि पश्चान्निपातिनः'=गृहस्थधर्मतः पश्चात् साधुधर्मे न प्रविष्टा गृहस्थभावतो न निर्गता इत्यर्थः, हृदयतः, परन्तु मस्तकमात्रं मुण्डितं न मनो मुण्डितमिति रीतिमन्तस्ते ॥६॥

दुःखगर्भवैराग्यस्य लक्षणम्

गृहेऽन्नमात्रदौर्लभ्यं, लभ्यन्ते मोदका व्रते ।
वैराग्यस्यायमर्थो हि, दुःखगर्भस्य लक्षणम् ॥७॥

टीकाः–गृहेऽन्नमात्रस्य दुर्लभता, 'व्रते'–साधुव्रते मोदका लभ्यन्ते हि वैराग्यस्याऽयमर्थः'–वैराग्य शब्दार्थज्ञानं, एतादृशोऽर्थ एव दुःखगर्भस्य लक्षणम् ॥७॥

मोहगर्भितवैराग्यस्य स्वरूपवर्णनम्

'कुशास्त्राऽभ्याससम्भूत–भवनैर्गुण्यदर्शनात् ।
मोहगर्भं तु वैराग्यं मतं बालतपस्विनाम् ॥८॥

टीकाः–बौद्धादीनामेकान्तवादिनां कुशास्त्राणामेकान्तनित्यत्वादिवादस्याऽभ्यासतो जातभवस्य नैर्गुण्यदर्शनाद् यद् वैराग्यं भवेत् तन्मोहगर्भं वैराग्यं कथ्यते, अत्र मोहस्यार्थोऽज्ञानं मिथ्याज्ञानं वा ततो निष्पन्नं वैराग्यं मोहगर्भं, मोहगर्भवैराग्यस्य स्वामिनो बालतपस्विनः सन्ति ॥८॥

सिद्धान्तस्य नाम गृहीत्वा विरुद्धार्थभाषिणां मोहगर्भमेव वैराग्यम्

'सिद्धान्तमुपजीव्याऽपि, ये विरुद्धार्थभाषिणः ।
तेषामप्येतदेवेष्टं, कुर्वतामपि दुष्करम् ॥९॥

टीकाः-'सिद्धान्तमुपजीव्यापि'='यदहं कथयामि तदेव जैनमतमस्तीति रीत्या जैनसिद्धान्तस्य नाम गृहीत्वैव 'ये विरुद्धार्थभाषिणः'=ये मोहगर्भिता जिनसिद्धान्तविरुद्धार्थप्रतिपादनपराः 'तेषामपि दुष्करं-कुर्वतामप्येतदेवेष्टं'=तेषां सिद्धान्तविरुद्धार्थभाषिणामपि, जमालिप्रभृतिवदाभिनिवेशिकमिथ्यात्विनां दुष्कर-तपश्चर्याब्रह्मचर्यादिकारकाणामपि मोहगर्भितवैराग्यमेव मतमेव नान्यद् वैराग्यमिति ॥९॥

आभिनिवेशिकमिथ्यात्विनां शुभोऽपि परिणामो न तात्त्विकः

'संसारमोचकादीना-मिवैतेषां न तात्त्विकः ।
शुभोऽपि परिणामो य-ज्जाता नाज्ञारुचिस्थितिः ॥१०॥

टीकाः--'संसारमोचकादीनामिवैतेषां शुभोऽपि परिणामो न तात्त्विकः'=यथा संसारमोचकमतानु-सारिणां जीवानां जीवदयादिपरिणामः शुभोऽपि न तात्त्विकः--सत्यः, तथैतेषां--आभिनिवेशिकमिथ्यात्विनां मोहगर्भित--वैराग्यवतां बाह्यदृष्ट्या शुभोऽपि परिणामो न वास्तविकः, यतस्तेषामन्तरात्मनि जिनाज्ञां प्रति रुचिः--श्रद्धा प्रीतिर्वा न स्थिरस्थितिका भवतीत्येतेषां तपआदिप्रवृत्तिरपि स्वकल्पनाकल्पितैव न जिना-ऽऽज्ञारुचिपूर्विकैवेति 'संसारमोचकस्यैवं मतमस्ति यत् 'प्रत्येकजीवानां भवा नियता एवेति कथनानुसारत एव दुःखार्त्तानां शीघ्रमारणे तस्य जीवस्यैको भवः शीघ्रतया समाप्तो भवेत्, चिरकालं च दुखभोगो न

आत्मोत्कर्षः परद्रोहः, कलहो दम्भजीवनम् ।
आश्रवाच्छादनं शक्त्यु-लङ्घनेन क्रियाऽऽदरः ॥१३॥
गुणानुरागवैधुर्यमुपकारस्य विस्मृतिः ।
अनुबन्धाद्यचिन्ता च, प्रणिधानस्य विस्मृतिः ॥१४॥
श्रद्धामृदुत्वमौद्धत्य-मधैर्यमविवेकिता ।
वैराग्यस्य द्वितीयस्य स्मृतेयं लक्षणावली ॥१५॥

टीकाः-(१)'कुशास्त्रार्थेषु दक्षत्वं'=अध्यात्मशास्त्रविरुद्धकुत्सितशास्त्रार्थेषु निपुणत्वं, (२) 'शास्त्रार्थेषु विपर्ययः'-सत्यशास्त्राणामर्थेषु नैपुण्याऽभावो मिथ्यामतिकल्पितत्वं वा (३) 'स्वच्छन्दता'-गुरुशास्त्राज्ञाऽऽद्यनुपमालम्बनस्य परतन्त्रताया अभावः, (४) कुतर्कः-असत्तर्कादिकरणे परमप्रियता, (५) 'गुणवत्संस्तवोज्झनम्'-ये गुणवन्तः स्युस्तेषां परिचयपरित्यागः, (६) 'आत्मोत्कर्षः-स्वकीयोत्कर्षस्य गाने पूर्णपरायणता, (७) 'परद्रोहः'-परस्य नीचैःपातनसर्वविनाशादिकरणे प्रसक्तत्वं (८) 'कलहः'-नारदवत्कलहकरणैकचित्तत्वं (९) 'दम्भजीवनम्'-मायापूर्वकाऽऽयुःकालनिर्वहणम्, (१०) 'आश्रवाच्छादनम्'=पापानामाच्छादने प्रयत्नः, (११) 'शक्त्युल्लङ्घनेन क्रियादरः'-शक्तिमतिक्रम्य क्रियां कर्तुमादरः, (१२)

**–मीमांसासुदृढप्रतिभावतो ज्ञानगर्भवैराग्यविवृद्धिः–**

'मीमांसामांसला यस्य, स्वपरागमगोचरा ।
बुद्धिः स्यात्तस्य वैराग्यं, ज्ञानगर्भमुदश्चति ॥१७॥

टीकाः–'यस्य मीमांसामांसला'–यस्यात्मनो विचारणया परिपुष्टा, 'स्वपरागमगोचरा'–स्वकीय परकीयशास्त्रविषयिणी, 'बुद्धिः स्यात्तस्य' प्रतिभा स्यात्तस्यात्मनः, 'ज्ञानगर्भं वैराग्यमुदश्चति'=ज्ञानगर्भितं वैराग्यमुन्नतिं गच्छतीति ॥१७॥

**–स्वपरावगाहिबुद्धिरहितानां निश्चयसारमनुष्ठानस्य न प्राप्नोति–**

न स्वाऽन्यशास्त्रव्यापारे, प्राधान्यं यस्य कर्मणि ।
नाऽसौ निश्चयसंशुद्धं सारं प्राप्नोति कर्मणः ॥१८॥

टीकाः–पूर्वोक्तं यज्ज्ञानगर्भितवैराग्यहेतोः स्वपरागमावगाहिनी प्रतिभाऽऽवश्यकी विद्यते, इत्येत द्विधानमनुलक्ष्य निश्चयनयदृष्टयाऽत्र श्लोके कथ्यते, यथाहि 'यस्य कर्मणि प्राधान्यं' चारित्रवत आत्मनोऽनुष्ठान एव प्राधान्यं दृश्यते 'न स्वाऽन्यशास्त्रव्यापारे'–स्वपरागमावगाहनरूपे व्यापारे प्राधान्यं न दृश्यतेऽतोऽसौ–चारित्रवानात्मा 'निश्चयसंशुद्धं कर्मणः सारं न प्राप्नोति'–निश्चयनयदृष्टयात्यन्तशुद्धं कर्मणोऽनुष्ठानस्य सारं-फलं न प्राप्नोतीति ॥१८॥

'[illegible]'-गुणवत्सु गुणान् प्रति प्रीतिरहितत्वम् (१३) 'उपकारस्य विस्मृतिः'-स्वात्मानं प्रत्युपकारिणामुपकारस्य महतोऽपि विस्मरणम् (१४) 'अनुबन्धपापचिन्ता'-भाविन्या अनर्थपरम्परायाश्चिन्तायाः शून्यत्वम् (१५) 'प्रणिधानस्य विस्मृतिः'-धर्मयोगे चित्तस्यैकाग्रतायाः स्मरणाभावः, (१६) 'श्रद्धामृदुत्वम्' सामान्यनिमित्तमात्र प्रतिज्ञादिखण्डनशीला शिथिलीभूता श्रद्धा, (१७) 'औद्धत्यम्'-नम्रताया विरुद्धत्वम् (१८) 'अधैर्यम्'-विकृतिनिमित्तसद्भावे धीरताया असद्भावः (१९) 'अविवेकिता' मानावमानादिविवेचनपटुत्वविवेकदोषकविख्यापनम् , इत्येवं, द्वितीयस्य-मोहगर्भितवैराग्यस्य 'स्मृतेयं लक्षणावली'-एकोनविंशतिलक्षणानि कथितानीति ॥१२।१३।१४।१५॥

—तृतीयस्य ज्ञानगर्भितवैराग्यस्य स्वरूपवर्णनम्—

'ज्ञानगर्भं तु वैराग्यं, सम्यक् तत्त्वपरिच्छिदः ।
स्याद्वादिनः शिवोपायस्पर्शिनस्तत्त्वदर्शिनः ॥१६॥

टीका- 'सम्यक् तत्त्वपरिच्छिदः'=सर्वज्ञप्रणीतत्वेन सम्यक्तत्त्वपरिच्छेदकस्य, 'स्याद्वादिनः' स्याद्वादस्य निरूपणविचक्षणः 'शिवोपायस्पर्शिनः'=मोक्षोपायभूतरत्नत्रयीस्पर्शकारकस्य, 'तत्त्वदर्शिनः' सम्यग्दर्शनवतस्य, एतादृशविशेषणविशिष्टस्यात्मनो यद्वैराग्यं तज्ज्ञानगर्भं वैराग्यं निगद्यते ॥१६॥

-तत्र किमनुष्ठानस्य सारं ? इत्येतत्प्रश्नस्य प्रत्युत्तरम्—

'सम्यक्त्वमौनयोः सूत्रे, गतप्रत्यागते यतः ।
नियमो दर्शितस्तस्मात्, सारं सम्यक्त्वमेव हि ॥१९॥

टीका:-'सूत्रे सम्यक्त्वमौनयोर्गतप्रत्यागते यतो नियमो दर्शितः'=आचारांगनामके सूत्रे सम्यक्त्व-मौनयोः समव्याप्ते नियमो दर्शितोऽस्ति, अर्थाद् यदेव सम्यक्त्वं तदेव मुनित्वं, यदेव मुनित्वं तदेव सम्यक्त्वमित्येतन्नियमतो निश्चितमेवं स्याद् यच्चारित्रस्य सारं सम्यक्त्वमेव, इदमत्रहृदयं-निश्चयनयदृष्टया सम्यक्त्वं सप्तमगुणस्थान एव सम्भवति यतः कर्मणः-चारित्रस्य सारं शुद्धसम्यक्त्वमेव, किञ्चैतच्छुद्ध-सम्यक्त्वं स्वपरागमावगाहनजन्यबोधं विना प्राप्तुं न शक्यते ॥१९॥

-सम्यक्त्वचारित्रयोः समव्याप्तिं समर्थयति-

'अनाश्रवफलं ज्ञान-मव्युत्थानमनाश्रवः ।
सम्यक्त्वं तदभिव्यक्ति-रित्येकत्वविनिश्चयः ॥२०॥

टी० 'अनाश्रवफलं ज्ञानं'=(१) अनाश्रवः फलं यस्य तज्ज्ञानमर्थाज्ज्ञानस्य फलमनाश्रवो विरति-रित्यर्थः, (२) 'अव्युत्थानमनाश्रवः'=सर्वपापाश्रवेष्वप्रवृत्तिरर्थाच्चारित्रं (३) तदभिव्यक्तिः सम्यक्त्वं'=

तस्य चारित्रस्याऽभिव्यक्तिः प्राकटयं सम्यक्त्वमेव, 'इत्येकत्वविनिश्चयः'=इत्येवं सम्यक्त्वज्ञानचारित्राणां त्रयाणामेकत्वविनिश्चयो ज्ञेयः, इदमत्र हृदयं=यत्र ज्ञानं तत्र तस्य कार्येण चारित्रेण भवितव्यमेव, चारित्रस्य चाभिव्यञ्जकं सम्यक्त्वमस्ति ततो यत्र चारित्रं तत्र सम्यक्त्वसत्त्वमेव, अभिव्यञ्जकोऽपि विनाऽभिव्यङ्ग्यं न सम्भवति, अतो यत्र सम्यक्त्वसत्ता तत्र चारित्रसत्तैवेत्येवं निश्चयनयदृष्टया पूर्वश्लोकदर्शितचारित्र-सम्यक्त्वयोः समव्याप्तिः स्थिरत्वेन समर्थितेति ॥२०॥

-व्यावहारिकनैश्चयिकचारित्रयो र्भेदतो वर्णनम्-

'बहिर्निवृत्तिमात्रं स्या-च्चारित्रं व्यावहारिकम् ।
अन्त.प्रवृत्तिसारं तु, सम्यक्प्रज्ञानमेव हि ॥२१॥

टीकाः-ननु चतुर्थगुणस्थाने सम्यक्त्वमस्ति, तत्र किं चारित्रमस्ति ? सप्तमे च गुणस्थान एव सम्यक्त्वचारित्रसमव्याप्तिरस्ति ततः षष्ठगुणस्थाने यच्चारित्रमस्ति तत्र किं सम्यक्त्वं नास्तीतीति चेन्न, तत्र षष्ठगुणस्थाने यच्चारित्रमस्ति तत्तु बाह्यपदार्थनिवृत्तिमात्रस्वरूपं, व्यवहारतएव चारित्रं कथ्यते, अत एव तच्चारित्रं व्यावहारिकमुच्यते, तत्र व्यावहारिकं सम्यक्त्वमपि भवत्येव, तथापि तत्र निश्चयनय-दृष्टया सम्यक्त्वं-सम्यक्प्रज्ञानं भवितु' नार्हति यतः सम्यक्त्वं-सम्यक्प्रज्ञानं तु 'अन्तःप्रवृत्तिसारं' आत्मनि

रमणतैव मारं-फलं यस्य तदन्तः प्रवृत्तिसारवत्सम्यक्प्रज्ञानमेव सम्यक्त्वं ज्ञेयं, अन्तः प्रवृत्तिस्तु सप्तमगुणस्थान एव सम्भवति तस्माद्व्यावहारिकचारित्रेण सह निश्चयसम्यक्त्वं न सम्भवति, अर्थादेकतां प्राप्तानि निश्चयशुद्धानि सम्यक्त्वचारित्रज्ञानानि सप्तमगुणस्थानत एव सम्भवन्ति ततोऽधस्तेषामसम्भवः ॥२१॥

–निश्चयनयदृष्ट्यैकान्तेन षट्कायश्रद्धानेऽपि न शुद्धता–

'एकान्तेन हि षट्काय-श्रद्धानेऽपि न शुद्धता ।
सम्पूर्णपर्ययालाभाद्, यन्न याथात्म्यनिश्चयः ॥२२॥

टीकाः–एकान्तेन षड् जीवनिकायस्य श्रद्धानकरणे निश्चयनयस्य शुद्धसम्यक्त्वं न सम्भवति, (१) 'षडेव जीवाः सन्ति कायश्चास्ति' इत्येतदेकान्तश्रद्धानमस्ति, यतो जीवानां च तेषां कायानां समूहमपेक्ष्य तदेकैकमेवास्ति, षड् न सन्ति (२) अथ यदि 'षड्जीवनिकायोऽस्ति' इत्येतस्मिञ्श्रद्धाने षड् जीवनिकाये जीवत्वं मन्येत तदप्यसद् यतो जीवपुद्गलाः परस्परं क्षीरनीरवदेकत्वमापन्नाः सन्ति जीवे जीवत्वमस्ति तथा पुद्गलत्वमप्यस्ति, (३) षड्जीवनिकायस्य श्रद्धाने 'षण्णां जीवानां समुदाये निकायत्वं यदा मन्येत तदप्यसद् यतः समुदाये निकायत्वे सति प्रत्येकजीवस्य पृथक्त्वेन प्रधानतया विवक्षा क्रियेत तदा तेषां समूहो न भवेदर्थात्तेषु तदपेक्षयाऽनिकायत्वप्रयागच्छेदित्येवमेवकारं 'षड्जीवनिकाये' भिन्नभिन्नरीत्या संयोज्य यद्येकान्तो ग्राह्यस्तदैतदेकान्तश्रद्धानमेव शुद्धसम्यक्त्वं नास्ति, निश्चयनयत एष आत्मा मिथ्या-

दृष्टिरेव कथ्येत, कुत इति चेद् यतः पदार्थोऽनन्तपर्यायमयोऽस्ति (१) अतः 'जीवे जीवत्वमस्ति तथाऽजीवत्वमप्यस्ति (२) षड्जीवनिकाये षट्त्वमस्ति तथैकत्वमप्यस्ति (३) निकायत्वमस्ति तथाऽनिकायत्वमप्यस्ति, एवं रीत्या पदार्थस्य यद् यथार्थस्वरूपं यत् 'पदार्थः सर्वपर्यायवानस्ति' तस्य निश्चयाभावादर्थात् सम्पूर्णपर्यायाऽलाभाद् यथार्थत्वविनिश्चयाभावादेतादृशमेकान्ततावत् षड्जीवनिकायश्रद्धानं शुद्धसम्यक्त्वरूपं न भवति ॥२२॥

–जगतः किञ्चनाऽप्येकमेव द्रव्यं सर्वपर्यायमयमस्तीति साधना–

'यावन्तः पर्यया वाचां, यावन्तश्चार्थपर्ययाः ।
साम्प्रताऽनागतातीतास्तावद् द्रव्यं किलैककम् ॥२३॥

टीकाः–शब्दसमभिरूढैवंभूतनया अथवा शब्दादिनयत्रयेण वाच्या वस्त्वंशा वस्तुनो 'वचनपर्यायाः' सङ्ग्रहादिनया अथवा तद्वाच्या वस्त्वंशा वस्तुनो 'अर्थपर्यायाः' उच्यन्ते, प्रत्येकवस्तुनोऽनन्तानन्ता वचनपर्यायाः सन्ति, अर्थपर्यायाश्चाऽपि सन्ति, यतोऽतीतादिकालत्रयवर्तिनः सर्वपर्यायाः प्रत्येकद्रव्यस्य भवन्ति, तथाहि=घटद्रव्यस्य कालत्रयवर्त्तिनः पर्यायाः, यथा वर्त्तमानघटद्रव्यस्य तथा तस्यैव घटद्रव्यस्य पटादिसर्वद्रव्याणां सर्वे पर्याया अपि सन्त्येव कथमिति चेत् ? पटादिपर्याया अपि घटादिद्रव्ये, नास्तित्वरूपेणाऽन्योऽन्यमनुगता भवन्ति, एवमेकमेव द्रव्यं सर्वद्रव्याणां सर्वकालीनसर्वपर्यायमयं युगपत्क्रमेणाऽपि च भवति ॥२३॥

-स्यात् सर्वमयमिति विषयस्य प्रतिपादनम्-

'स्यात् सर्वमयमित्येवं, युक्तं स्वपरपर्ययैः ।
अनुवृत्तिकृतं स्वत्वं, परत्वं व्यतिरेकजम् ॥२४॥

टीकाः-एवं रीत्यैकैक द्रव्यं सर्वैः स्वपर्यायैः सर्वैश्च परपर्यायैर्युक्तत्वात् सर्वपर्यायमयं भवति, शङ्का=पर्यायनिष्ठं कि स्वत्वं परत्वं च किं ? अर्थाद् घटस्याऽमुकाः पर्यायाः स्वत्वेनामुकाश्च परत्वेन कथ्यन्ते तत् किं ? समाधानं=येषां पर्यायाणां घटेऽनुवृत्तिः (स्ववृत्तित्वं) ते पर्याया घटस्य स्वपर्यायाः कथ्यन्ते, किञ्च घटे वृत्तित्वाभावजन्या (व्यतिरेकजाः) घटस्य ये पर्याया भवन्ति ते पर्याया घटस्य परपर्यायाः कथ्यन्ते यथा घटे घटत्वपर्यायोऽस्ति तस्मिन्नेव घटे पटत्वपर्यायोऽप्यस्ति विशेषस्त्वेतावानेव यद्घटत्वपर्यायो घटस्य स्वपर्यायोऽस्ति तदा पटत्वपर्यायो घटस्य परपर्यायोऽस्ति घटस्येमौ द्वौ घटस्यैव स्वपर्यायपरपर्यायौ कथ्येते, अर्थाद् येषां पर्यायाणां घटेऽस्तित्वमस्ति ते सर्वे पर्याया अस्तित्वसम्बन्धेन घटस्य स्वपर्याया उच्यन्ते, येषां च पर्यायाणां घटे नास्तित्वमस्ति ते सर्वे पर्याया नास्तित्वसम्बन्धेन घटस्य परपर्यायास्तथाच येन केनचित् सम्बन्धेन भवन्तो घटस्य स्वपर्यायाः परपर्यायाश्च सर्वे घटस्यैव पर्याया जाता अत एव'घटद्रव्यं सर्वपर्यायमयं' जातं, एवं रीत्या प्रत्येकद्रव्यमनुवृत्त्या (सद् भावतः) अस्तित्वसम्बन्धेन, व्यतिरेकतश्च (असत्त्वेन) नास्तित्वसम्बन्धेन सर्वपर्यायमयं भवतीति ॥२४॥

-पटत्वादिपरपर्याया अपि घटस्य स्वपर्यायीभवने सिद्धिः-

'ये नाम परपर्यायाः, स्वाऽस्तित्वाऽयोगतो मताः ।
स्वकीया अप्यमी त्याग-स्वपर्यायविशेषणात् ॥२५॥

टीकाः-ननु घटस्य ये घटत्वादिपर्यायाः सन्ति, ते तु निश्चयतो घटस्य स्वपर्यायाः कथनीयास्तत्तु स्पष्टं ज्ञायते परन्तु ये पटत्वादिपरपर्याया घटस्य न सन्ति ते तु घटस्य पर्यायाः कथं कथ्यन्ते ? पटत्वादयो घटस्य परपर्याया इति कथ्यन्ते च ते घटस्य पर्यायाः कथं ? यदि घटस्य पर्यायाः स्युस्ते घटस्य परपर्यायाः कथं ? इति चेदुच्यते=घटस्य ये घटत्वादिपर्यायाः सन्ति, तेषां घटेऽस्तित्वमस्ति, ततः कारणात् स्वाऽस्तित्वसम्बन्धेन घटत्वादिपर्याया घटस्य स्वपर्यायाः कथिताः, घटादन्यत्र सर्वेषु पटादिद्रव्येषु ये पटत्वादयोऽनन्तपर्यायाः सन्ति ते यद्यपि घटेऽस्तित्वसम्बन्धेन तु न सन्ति तथाऽपि घटस्य ये परपर्यायास्ते, घटस्य स्वपर्यायत्यागरूपविशेषणवन्तो भूत्वा घटस्यैव स्वपर्याया भवन्ति-इदमत्र हृदयमस्ति=घटत्वादयः पटत्वादयश्च सर्वे घटस्य स्वपर्यायाः सन्ति परन्तु घटत्वादिस्वपर्यायाः स्वपर्यायस्वीकारविशिष्टास्तदा पटत्वादिपर्यायाः स्वपर्यायत्यागविशिष्टाः सन्ति, अर्थात् स्वपर्यायस्वीकाररूपविशेषणवन्तो घटत्वादिपर्याया घटस्य स्वपर्यायाः कथ्यन्ते, स्व (घटत्व) पर्यायत्याग-

रूपविशेषणवन्तः पटत्वादिपर्याया घटस्यैव स्वपर्यायाः कथ्यन्ते, पटत्वादयो नास्तित्वसम्बन्धेन घट एव तिष्ठन्त्यत एव घटस्य पर्याया मन्तव्या एव ॥२५॥

—अतादात्म्येऽपि परपर्यायाणां स्वत्वं धनस्येव व्यज्यते—

'अतादात्म्येऽपि सम्बन्ध-व्यवहारोपयोगतः ।
तेषां स्वत्वं धनस्येव, व्यज्यते सूक्ष्मया धिया ॥२६॥

टीकाः—ननु घटत्वादिपर्यायाणान्तु घटे तादात्म्यमस्ति तस्माद् घटत्वादिपर्याया घटपर्यायाः कथ्यन्ते तच्चारु, परन्तु येषां पटत्वादिपर्यायाणां घटे किमपि तादात्म्यं नास्ति, तेषां पटत्वादीनां घटसत्कस्वपर्यायित्वकथनं कथं चार्विति चेदुच्यते यथा द्वयोरभिन्न (तादात्म्यवद्) वस्तुनोः सम्बन्धो भवति तथा द्वयो भिन्न (अतादात्म्यवद्) वस्तुनोरपि सम्बन्धो भवत्येव यथाहि=एकःपुरुषोऽस्ति तस्य च गृहे पुष्कल धनमस्ति, पुरुषधनयोः सर्वथा भिन्नयोः सतोः 'पुरुषस्य धन' मिति किं न व्यवह्रियते ? तथा घटपटत्वादिपर्याययोः सर्वथा भिन्नयोः सतोः 'पटत्वादिपर्याया घटस्येति कथं न कथनीयाः स्युः ? एष विषयः सूक्ष्मया बुद्धया व्यज्यते-प्रकटीक्रियते एक वस्तु द्वितीयवस्तुतो भिन्नं सदपि तस्योपयोगि स्यात्तदा तद्वस्तु द्वितीयवस्तुनो भवति, यथा देवदत्तधनयोः—सर्वथा भिन्नयोः सतो यद्धनं देवदत्तस्योपयोग्यस्ति तद् धनं देवदत्तस्य कथ्यते, एवं रीत्या घटस्य स्वपर्यायाणां त्यागविशिष्टपटत्वादयः परपर्यायत्वेन

रूपेणोपयोगिनो भवन्ति, तथाहि=यदा 'घटमानये' ति व्यवहारो भवति तदा 'घटत्ववान् घट एवाऽऽनीयते परन्तु पटादयो नानीयन्ते, एतस्माद् व्यवहारात् सिद्ध्यति यत् पटादिषु घटस्य स्वपर्यायाभावः पतितः, तस्मात्ते पटादयस्तदा नानीयन्ते, यत्र घटस्य स्वपर्यायोऽस्ति, तदेव घटद्रव्यमेवाऽऽनीयतेऽर्थादेवंरीत्या घटस्य परपर्याया अपि घटानयनादिव्यवहारे उपयुज्यन्ते तस्मात्तेषां पटादिपरपर्यायाणां घटेन सह सम्बन्धो भवति तस्मात्ते पटादिपर्याया घटस्यैव स्वपर्याया उच्यन्ते ॥२६॥

–भिन्ना अपि पर्याया उपयोगद्वारा स्वकीया एव मन्यन्ते–

'पर्यायाः स्युर्मुने र्ज्ञान-दृष्टिचारित्रगोचराः ।
यथा भिन्ना अपि तथो-पयोगाद् वस्तुनो ह्यमी ॥२७॥

टीकाः–यथा ज्ञानदर्शनचारित्रविषयाः सर्वे द्रव्यपर्याया मुने र्भिन्नाः सन्तोऽपि मुनेरेव कथ्यन्ते कस्मादिति चेदुच्यते यतस्ते द्रव्यपर्यायाः श्रद्धेयत्वेन केचिज्ज्ञेयत्वेन केचन च त्यागद्वारा, केऽपि ग्रहणद्वारा, चारित्रक्रियायामुपयोगित्वेन मोक्षनामकलक्ष्यसिद्धावुपयुज्यन्तेऽर्थात् स्वकार्यसिद्धावुपयोगिभवनद्वारा सर्वे ज्ञानादिपर्याया मुनेर्भिन्नाः सन्तोऽपि मुनेरेव पर्याया उच्यन्ते तथा घटादिवस्तुनः पटत्वादिपर्याया घटादेर्भिन्नाः सन्तोऽपि घटादेः स्वपर्यायाणां त्यागविशिष्टाः परपर्याया अपि व्यवहारे उपयोगिभवनद्वारा घटादेः स्वपर्यायाः कथ्यन्ते ॥२७॥

-ययोर्द्वयोरतादात्म्यं तयोर्द्वयोरपि व्यवहारोपयोगिनोः सतोः सम्बंधः-

'नो चेदभावसम्बन्धाऽन्वेषणे का गति र्भवेत् ।
आधारप्रतियोगित्वे द्विष्ठे न हि पृथग् द्वयोः ॥२८॥

टीका=ययो र्द्वयो र्वस्तुनोरतादात्म्यमस्ति, तयोर्द्वयो र्वस्तुनोरपि सम्बन्धो भवतीत्येतं विषयं यूयं न स्वीकुरुथ तदा युष्माकमापत्तिरागमिष्यति, तथाहि=घटाभाववद् भूतलमित्यत्र यूयं घटाभावस्य भूतलेन सह सम्बन्धं मन्यध्वे तदा वयं पृच्छामः, भूतलेन सह घटाभावस्य सम्बन्धान्वेषणे का गति र्भवेत् , यदि युष्माभिः कथ्यते च तावद् घटाभावस्याधारो भूतलमस्ति, प्रतियोगी च घटोऽस्ति तस्माद् घटाभाव आधारतासम्बन्धेन भूतलेन सह सम्बध्नाति, प्रतियोगितासम्बन्धेन घटेन सह सम्बध्नाति यूयमत्रापि जानीत यदेषाऽऽधारता, प्रतियोगिता च क्रमेणानुयोगिनि च प्रतियोगिनि वर्त्तेते, अर्थाद् घटाभावस्याधारता, आधाररूपे भूतल एव तिष्ठति, परन्तु, आधारतानिरूपकघटाभावे न तिष्ठति, एवं रीत्या घटाभावस्य (घटाभावनिरूपित) प्रतियोगिता प्रतियोगिनि घट एव तिष्ठति, परन्तु प्रतियोगितानिरूपकघटाभावे न तिष्ठति, इदमत्र हृदयम्=अनुयोगिता वा प्रतियोगिता न द्विष्ठा, परन्तु आधारे वा प्रतियोगिन्येव तिष्ठति, तस्मादाधारताप्रतियोगिते, आधारता निरूपकघटाभावप्रतियोगितानिरूपकघटाभावाभ्यां भिन्ने एव स्तः, घटाभावस्याधारताप्रतियोगिते न घटाभावे तिष्ठतः, घटाभावाभिन्ने स्तः, तथापि यूयमतादात्म्यवतीं, आधारतां प्रतियोगितां च घटाभावसम्बन्ध-

॥११२॥

स्वरूपपर्यायत्वेन प्रतिपद्यध्वे, भूतले वा घटे तादात्म्यवन्तौ सन्तावपि तेन सह सम्बन्धात्मकौ पर्यायौ भवतस्तदा तौ युष्माकं मतेन कया रीत्या भवतः ? अर्थाद् युष्माभिरेप विषयः सम्मतश्चेत्तदा ययो र्द्वयोरतादात्म्यमस्ति तयोर्द्वयोरपि व्यवहारे उपयोगे सति सम्बन्धो भवितुमर्हति, एवं सति पटत्वादि-पर्यायैः सह घटस्याऽतादात्म्यमस्ति तथापि घटबोधस्य व्यवहारे पटत्वादय उपयोगिनः सन्ति तस्माद् घटेन सह पटत्वादेः सम्बन्धः किं सम्भवेदर्थादेतेऽपेक्षया पटत्वादयः घटस्य स्वपर्यायाः किं न सम्भवेयुः ? ॥२८॥

–स्वाऽन्यपर्यायसम्बन्धेन प्रत्येकं वस्तु सर्वपर्यायमयमस्ति तत्र सूत्रस्य प्रामाण्यं प्रदर्श्यते–

'स्वान्यपर्यायसंश्लेषात्, सूत्रेऽप्येवं निदर्शितम् ।
सर्वमेकं विदन् वेद, सर्वं जानंस्तथैककम् ॥२९॥

टीकाः–अनया रीत्यैकस्मिन् द्रव्ये स्वपरपर्यायसम्बन्धेन, श्रीमदाचाराङ्गसूत्रेऽपि कथितमस्ति यत्, 'य एकं जानाति स वस्तुतः सर्वं जानाति, यः सर्वं जानाति स एकं जानाति' इति, किञ्चनाऽप्येकं वस्तु स्वपर-पर्यायैर्जानन्नात्मा लोकालोकगतं सर्वं वस्तु सर्वस्वपरपर्यायैर्युक्तं जानाति यतः सर्ववस्तूनां सर्वपर्याय-विषयकज्ञानं विनैकं वस्तु ज्ञातुमशक्यम्, प्रत्येकं वस्तु सर्वस्वपरपर्यायमयमस्ति, अथ सर्वपर्यायविषयकज्ञानं विना सर्वपर्यायमयमेकं वस्तु कया रीत्या ज्ञातुं शक्यते ? सर्वपर्यायान् ज्ञातुं सर्ववस्तु ज्ञेयमेव, यद्येवं स्यात्त-

देकं वस्तु ज्ञातुं शक्यते, अर्थादेकं जानन् सर्वं जानातीति निःशङ्कमेवं कथयितुं शक्यम्, एवंरीत्या सर्वं-जानन्नेकं जानाति, यत एकस्याऽप्यज्ञाने सर्वं ज्ञातं न सम्भवति, अनया रीत्या सर्वज्ञानं विना सर्वपर्याय-मयमेकं ज्ञातुं न शक्यते, एकमपि च न ज्ञायते, तदा सर्वं कथं ज्ञातुं शक्यते प्रोक्तं च 'सर्वं विदन्नेवैकं चैकं जानन्नेव सर्वं जानाति' ॥२९॥

**सम्यग्दृष्टिरात्मा, सम्मुखस्थं पर्यायमेकमर्थं विदन्नपि भावादखिलं वेत्ति**

**'आसत्तिपाटवाऽभ्यास-स्वकार्यादिभिराश्रयन् ।**
**पर्यायमेकमप्यर्थं, वेत्ति भावाद् बुधोऽखिलम् ॥३०॥**

टीकाः—यत् पूर्वोक्तं 'सम्यग्दृष्टिरात्मा प्रत्येकवस्तुनोऽनन्तान् पर्यायान् वेत्त्येवं अत्रायं विशेषः= विवक्षितकाले सम्यग्दृष्टिरात्मा सम्मुखस्थघटस्य घटत्वपर्यायं पश्यन्नपि भावतस्तु तदापि तं घटमनन्त-पर्यायमयं मन्वानोऽस्ति, मिथ्यादृष्टिरेवं न मन्यते, ननु यदि सम्यग्दृष्टिरात्मा सम्मुखस्थं घटमनन्त-पर्यायमय पश्यति, तदा स स्थूलदृष्ट्यैकं घटत्वपर्यायमेव स्वदृष्टिसम्मुखस्थं कथं पश्यति ? इति चेदुच्यते, आसत्तिपाटवाऽभ्यासस्वकार्यादिभिराश्रयन्'= (१) आसत्तिः=सम्बन्ध-, यथा छात्रब्राह्मणयोरध्ययन-क्रियया सम्भवन् सम्बन्धः छात्रोपाध्यायसम्बन्धः, तेन सम्मुखस्थे ब्राह्मणे सति उपाध्यायत्वपर्यायं पुरस्कृत्य 'मम पाठकाः समागताः' इति छात्रेणोच्यते (२) बुद्धिपाटवम्=द्वितीयोऽप्यतिबुद्धिशाली, तं सम्मुखस्थं

ब्राह्मणंदृष्ट्वा वेषदर्शनमात्रेण शीघ्रं कथयति 'एष ब्राह्मण आगतः' इत्यत्र ब्राह्मणत्वपर्यायो मुख्यो जातस्तत्र बुद्धिपाटवं कारणम् ।

(३) अभ्यासः=तृतीयो जनः, सम्मुखस्थं ब्राह्मणं प्रतिदिनभिक्षादानाभ्यासाद् दृष्ट्वैव कथयति 'भिक्षुक आगतः' इत्यत्र भिक्षुकत्वपर्यायपुरस्कारेऽभ्यासः कारणम्, (४) चतुर्थेन जनेन कथाकारण-प्रयोजनेन स ब्राह्मण आहूतोऽस्ति, तं च प्रतीक्षमाणः सन्नुपविष्टोऽस्ति, तं ब्राह्मणं सम्मुखस्थं निरीक्ष्य वदति 'कथाकार आगतः' इत्यत्र कथकत्वपर्यायः पुरस्कृतस्तत्र प्रयोजनमेव हेतुर्जातः इत्येवमासत्त्यादि-भिरनन्तपर्यायमयवस्तुनो एकः पर्यायः सम्मुखीभवति, तदापि सम्यग्दृष्टिरात्मा, भावतस्तु तद्वस्तु, अनन्तपर्यायमयमेव जानाति, परन्तु मिथ्यादृस्तु तदापि भावतोऽपि वस्तुन एकमेव पर्यायं जानाति, नानन्तपर्यायानिति ॥३०॥

श्रद्धाबलेन सम्यग्दृष्टिः प्रत्येकवस्तुनिष्ठाननन्तपर्यायान् भावतोऽवश्यमेव मन्यते जानाति च

अन्तरा केवलज्ञानं, प्रतिव्यक्तेर्न यद्यपि ।
क्वाऽपि ग्रहणमेकांश–द्वारं चातिप्रसक्तिमत् ॥३१॥
अनेकान्तागमश्रद्धा, तथाऽप्यस्खलिता सदा ।
सम्यग्दृशस्तथैव स्यात्, सम्पूर्णार्थविवेचनम् ॥३२॥

टीकाः-यद्यपि केवलज्ञानं विना, 'वस्तुमात्रेऽनन्तपर्यायाः सन्ति' इति प्रत्यक्षज्ञानं कस्यचिदपि न सम्भवति अनन्तपर्यायमयवस्तुनश्च क्वाऽपि, एकांशद्वारं ग्रहणं=एकांशविषयक-ज्ञानं भवेत्तदा तदति-प्रसङ्गदोषाऽन्वित स्यात्तथापि सम्यग्दृष्टेरात्मनोऽनेकान्तमूलके जिनेन्द्रागमे सुनिश्चला श्रद्धा वर्त्तत एव, तयैव श्रद्धया वस्तुमात्रनिष्ठानन्तपर्यायान् भावतो मन्यते जानाति च, ये पदार्था येन रूपेण केवलिना प्रत्यक्षदृष्टास्तान् पदार्थास्तेन रूपेण सम्यग् दृष्टिर्न साक्षात् पश्यति तथाऽपि केवलिनां वचनेषु सम्पूर्ण-श्रद्धाद्वारा सदा-सर्वकाले सम्पूर्णार्थविवेचनम्=वस्तुमात्रस्याऽनन्तपर्यायमयताया विवेचनमवश्यं कर्त्तुं शक्यते ॥३१॥३२॥

आगमार्थोपनयनद्वारा प्राज्ञस्य ज्ञानं सर्वव्यापीति

'आगमार्थोप नयनाद्, ज्ञानं प्राज्ञस्य सर्वगम् ।
कार्यादेर्व्यवहारस्तु, नियतोल्लेखशेखरः ॥३३॥

टीकाः-आगमाऽर्थान् सम्पूर्णश्रद्धया सह पुरस्कुर्वतः सम्यग्दृष्टेरात्मनो ज्ञानं सर्वव्यापीति कथ्यते, यथा केवलिनो ज्ञानं सर्वपदार्थविषयकमस्ति सम्यग्दृष्टे ज्ञानमप्यागमार्थश्रद्धाद्वारा सर्वगतमेवास्ति, (केवली साक्षाद्दृष्ट्वा-यथाऽनन्तकायेऽनन्तान् जीवान् कथयति केवलिवचनश्रद्धयैवैनं विषयं सम्यग्दृष्टिः कथयति) ननु यद्येवं वस्तुन्यनन्तपर्यायवति ज्ञाते सति सम्मुखस्थे वस्तुनि घट इति व्यवहारः कथमिति

चेदुच्यते, तत्र तत्र विवक्षितवस्तुनि घटादिरूपेण तत्र तत्र काले नियतोल्लेखप्रधानो व्यवहारो भवति स पूर्वोक्ताऽऽसत्त्यादिकारणेन जायते निश्चयनयेन निश्चितं यत् प्रत्येकवस्त्वनन्तपर्यायमयताया दर्शनमेव सम्यगूदर्शनम् , तदेव सम्यग् ज्ञानमस्ति तादृशसम्यगूदर्शनादि, सप्तमगुणस्थाने सम्भवति तस्मात् सम्यग् दर्शनं सम्यक् चारित्रमस्ति, त्रयमेकस्वरूपं स्थितम् ॥३३॥

–एकान्तेन जैनाभासस्य विरक्तस्याऽपि कुग्रहः पापकृत्–

'तदेकान्तेन यः कश्चिद्-विरक्तस्याऽपि कुग्रहः ।
शास्त्रार्थबाधनात् सोऽयं, जैनाभासस्य पापकृत् ॥३४॥

टीकाः–पूर्वोक्तं यत् षड्जीवनिकायस्यैकान्तेन श्रद्धानमपि शुद्धसम्यक्त्वं न कथ्यते, इत्येवं विषयमुपसंहृत्याऽस्मिन् , श्लोके ग्रन्थकारो ज्ञापयति यद् विरक्तस्याप्येकान्तेन यः कश्चित् कुग्रहः स्यात् , सोऽयं शास्त्रार्थबाधनाज्जैनाभासस्य पापकृत्=पापकर्मबन्धकृद् भवति ॥३४॥

–ज्ञानगर्भवैराग्यविरोधी कुग्रहः–

'उत्सर्गे वाऽपवादे वा, व्यवहारेऽथ निश्चये ।
ज्ञाने कर्मणि वाऽयं चे-न्न तदा ज्ञानगर्भता ॥३५॥

टीका:-यस्य कस्यचिद् विरक्तस्यापि जैनाभासस्य, उत्सर्गेऽथवाऽपवादविषये, व्यवहारेऽथवा निश्चये, ज्ञाने वा कर्मणि-क्रियायां वा, एकान्तेन कुग्रहश्चेत्तदा शास्त्रार्थबाधनान्न ज्ञानगर्भतेति ॥३५॥

-स्वागमे परागमाऽर्थानां नावतारकुशलत्वं तदा न ज्ञानगर्भता-

'स्वागमेऽन्यागमार्थानां शतस्येव परार्ध्यके ।
नावतारबुधत्वं चेन्न तदा ज्ञानगर्भता ॥३६॥

टीका:-यथा परार्ध्यके=परार्ध्यनामकमहासंख्यायां शतस्य=शतसङ्ख्याया अवतारः-समावेशः सुगमः, तथा स्वागमे=जैनागमे, अन्यागमार्थानां=जैनेतरशास्त्रनिरूपितपदार्थानां, अवतारबुधत्वं=समावेशविचक्षणत्वं, न चेत्तदा विरक्तस्याऽपि जैनाभासस्य ज्ञानगर्भवैराग्यभावो नेति ॥३६॥

-समस्तनयेषु मध्यस्थता न तदा न ज्ञानगर्भता-

'नयेषु स्वार्थसत्येषु, मोघेषु परचालने ।
माध्यस्थ्यं यदि नाऽयातं, न तदा ज्ञानगर्भता ॥३७॥

टीका:-सर्वे नयाः स्वाऽभिप्रेतार्थप्रतिपादने लग्नाः स्युस्तदा तेषां प्रतिपादनं सत्यं भासते परन्तु तत्सम्मुखं तस्य प्रतिपक्षी नयो यदा तस्य खण्डनं कर्तुं लगेत्तदा पूर्वपक्षीयो नयोऽसत्यो भासते यथा

निश्चयनयः स्वाऽभिप्रायं पूर्णबलेन स्थापयति तदा स एव सत्यो भासते परन्तु यदा परनयेन—व्यवहारनयेन खण्ड्यते तदा प्राकृतनो नयोऽसत्यो भासते, तस्मिन् काले नयेषु स्वार्थसत्येषु परचालने—परद्वारा खण्डने सति मोघेषु—निष्फलेषु यदि माध्यस्थ्यं—अपेक्षाद्वारा समन्वं नाऽयातं तदा न ज्ञानगर्भतेति ॥३७॥

—आज्ञया वा युक्तितः पदार्थानां योजकत्वं न, न तदा ज्ञानगर्भता—

'आज्ञयाऽऽगमिकाऽर्थानां, यौक्तिकानां च युक्तितः ।
न स्थाने योजकत्वं चे-न्न तदा ज्ञानगर्भता ॥३८॥

टीकाः—हेतुवादागमवादाभ्यां द्विविधो वाद उच्यते, (१) प्रथमो हेतुवादस्तु पदार्थानां सिद्धिकृते प्रत्यक्षादिप्रमाणैर्हेतुभिश्च जायमानो वादः 'युक्तिवादः' (२) द्वितीय आगमवादः=यत्राऽगमभिन्नप्रमाणानां हेतूनां युक्तीनां च नाऽवकाशः, परन्तु मात्राऽऽप्तोक्तिरूपागमवचनप्रामाण्येन पदार्थसिद्धिर्येन वादेन जायते स 'आगमवादः', केचित्पदार्था युक्त्या साधयितुं शक्यन्ते तत्र हेतुवाद एव योज्यः, केचित् पदार्था अतीन्द्रियविशेषा--अतिसूक्ष्मविशेषा आगमवचनमात्रसाध्यास्तत्राज्ञा (आगम) वादो योजनीयः, यथा जीवपदार्थे चैतन्यसिद्धिर्हेतुवादेन कार्या, निगोदशरीरे त्वनन्तजीवसिद्धिरागमवादेन कर्त्तव्या, अर्थात् पदार्थोऽथवा पदार्थांशो येन वादेन साधयितुं शक्यः, स पदार्थोऽथवा पदार्थांशस्तेन वादेन साधनीयः योग्यस्थाने योग्यवादेन योजयेत्=यौक्तिकपदार्थे युक्तिवादः, आगमिकपदार्थे, आगमवादो योज्यः परन्तु

यदि यौक्तिकपदार्थे आगमवादश्चेत्तदा वैपरीत्यं-न समीचीना पदार्थसिद्धिपद्धतिः, आगमिकार्थे युक्तिवादश्चेत्तदा वैपरीत्यं–न समीचीनपदार्थसिद्धिपद्धतिः, अर्थात् विपरीतपद्धत्या न ज्ञानगर्भतेति ॥३८॥

–गीतार्थस्यैव ज्ञानगर्भितवैराग्यस्यास्तित्वम्–

'गीतार्थस्यैव वैराग्यं, ज्ञानगर्भं ततः स्थितम् ।
उपचारादगीतस्या-प्यभीष्टं तस्य निश्रया ॥३९॥

टीका:–ततः=उपरि निरुक्तवादयोर्योग्यस्थाने नियोजनादिकर्मकर्त्री शक्तिः, स्वपरसमयज्ञातरि गीतार्थे सम्भवति, नाऽन्यत्र, तत एतद्वस्तु स्थितं यज्ज्ञानगर्भं वैराग्यं गीतार्थस्यैवेति निश्चयनयवार्त्ता, उपचारात्=व्यवहारनयतस्तु तस्य–गीतार्थस्य निश्रया–निश्रां प्रतिपन्नस्यागीतस्याऽपि=अगीतार्थस्याऽपि ज्ञानगर्भं वैराग्यमभीष्टं–सम्मतमस्तीति ॥३९॥

–ज्ञानगर्भितवैराग्यविशिष्टानां महात्मनां लक्षणानि–

'सूक्ष्मेक्षिका च माध्यस्थ्यं, सर्वत्र हितचिन्तनम् ।
क्रियायामादरो भूयान्, धर्मे लोकस्य योजनम् ॥४०॥
चेष्टा परस्य वृत्तान्ते, मूकाऽन्धबधिरोपमा ।
उत्साहः स्वगुणाऽभ्यासे, दुःस्थस्येव धनाऽर्जने ॥४१॥

मदनोन्मादवमनं, मदसम्मर्दमर्दनम् ।
असूयातन्तुविच्छेदः, समताऽमृतमज्जनम् ॥४२॥
स्वभावान्नैव चलनं, चिदानन्दमयात्सदा ।
वैराग्यस्य तृतीयस्य, स्मृतेयं लक्षणावली ॥४३॥

टीकाः–(१) सूक्ष्मेक्षिका=नोपरित्वेन, न स्थूलत्वेन दर्शनमपितु गम्भीरतया सूक्ष्मतया वस्तुविवेचनम् (२) माध्यस्थ्यं=एकपक्षस्थितिनिरहेण निष्पक्षत्वम् (३) सर्वत्र हितचिन्तनम्=सर्वजीवविषयकहितचिन्तन-रूपमैत्रीभावः (४) क्रियायामादरो भूयान्=जिनप्रणीतकल्याणकारिक्रियां प्रति महान् बहुमानभावः, (५) धर्मे लोकस्य योजनम्=धर्मविमुखलोकस्य धर्मे सम्मुखीकरणम्, (६) परस्य वृत्तान्ते मूकाऽन्धबधिरोपमा चेष्टा=आत्मवस्तुभिन्नस्य परस्य पौद्गलिकस्य पदार्थस्य वृत्तान्तेऽर्थात् कथने मूकवच्चेष्टा, दर्शनेऽन्धवच्चेष्टा, श्रवणे बधिरवच्चेष्टा, (७) धनाऽर्जने दुःस्थस्येव स्वगुणाऽभ्यासे उत्साहः=यथा निर्धनस्य धनाऽर्जने उत्साहस्तथाऽऽत्मनो दर्शनादिगुणगणविकासाऽभ्यासेऽपूर्ववीर्योल्लासरूप उत्साहविशेषः (८) मदनोन्मादवमनम्=कामवासनाया उन्मादस्य निष्फलीकरणम् (९) मदसम्मर्दमर्दनम्=मानस्य युद्धस्य च भञ्जनभाव इत्यर्थः, (१०) असूयातन्तुविच्छेदः=अन्यगुणदूषणरूपासूयाया अथवा मात्सर्येर्ष्यादिकस्य तन्तो विच्छेदः–विनाशः

(११) ममताऽमृतमज्जनम्=शान्तरसरूपसमतानामकेऽमृते स्नानम्, (१२) सदा चिदानन्दमयात् स्वभावान्नैव चलनम्=सर्वकालाऽवच्छेदेन चिन्मयादानन्दमयात्स्वभावादात्माभिन्नविशेषोपयोगात्, आत्मस्वरूपविषयकज्ञानात् आत्मनिष्ठस्वैश्वर्यपूर्णतादर्शनजन्यादखण्डानन्दान्न चलनं—च्युतिः, इयं लक्षणावली—द्वादशलक्षणानि, तृतीयस्य-ज्ञानगर्भवैराग्यस्य, स्मृता—दर्शिता परमर्षिभिः ॥४०॥४१॥४२॥४३॥

**—वैराग्यभेदस्योपसंहारः—**

ज्ञानगर्भमिहादेयं, द्वयोस्तु स्वोपमर्दतः ।
उपयोगः कदाचित् स्या-न्निजाऽध्यात्मप्रसादतः ॥४४॥

टीकाः—त्रिषु वैराग्यभेदेषु निश्चयतो ज्ञानगर्भवैराग्यमेवोपादेयं, परन्तु दुःखतो वा मोहतः संसारत्यागी भवेत्, तस्य द्वयोस्तु=दुःखगर्भमोहगर्भवैराग्ययोः, स्वोपमर्दतः=दुःखस्य वा मोहस्य दूरीकरणतः, ज्ञानगर्भवैराग्यं भवेत्तदा 'कदाचित् निजाध्यात्मप्रसादतउपयोगः स्यात्=दुःखादिगर्भवैराग्यस्याऽपि कदाचित् कस्यचिद् विरक्तस्य ज्ञानगर्भितवैराग्यजनने उपयोगः स्यात् परन्तु तदर्थं निजाध्यात्मभावमहाराजस्य प्रसादःपरमावश्यकः ॥४४॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां वैराग्यभेदाख्यः षष्ठोऽधिकारः समाप्तः ॥१८२॥

## —वैराग्यविषयकोऽधिकारः सप्तमः—

—विषयगुणभेदाद् वैराग्यं द्विविधम्—

'विषयेषु गुणेषु च द्विधा, भुवि वैराग्यमिदं प्रवर्त्तते ।
अपरं प्रथमं प्रकीर्तितं, परमध्यात्मबुधैर्द्वितीयकम् ॥१॥

टीका:—इन्द्रियविषयान् प्रति वैराग्यं—रागाभावो विषयवैराग्यमेकं, तपश्चर्यासंयमसाधनादिजन्या लब्धीः प्रति वैराग्यं गुणवैराग्यं, पृथिव्यां द्विविधमिदं वैराग्यं प्रवर्त्तमानमस्ति, प्रथमं वैराग्यमपरं, द्वतीयं वैराग्यं परं, अध्यात्मशास्त्रविशारदैः प्रकीर्तितमिति ॥१॥

उपलम्भविषयानुश्रविकरूपेण विषया विकारिणोऽपि विरक्तान् न विकुर्वते

'विषया उपलम्भगोचरा, अपि चानुश्रविका विकारिणः ।
न भवन्ति विरक्तचेतसां विषधारेव सुधासु मज्जताम् ॥२॥

टीका:—इन्द्रियजन्यप्रत्यक्षेणाऽनुभूयमानाः शब्दादिविषयाश्चानुश्रविकाः=शास्त्रवाक्यतो विज्ञायमाना देवलोकगता दिव्या विषयास्तथा चैवंभूता विषया आत्मानं प्रति विकारकरणशीला अपि, वैराग्यरसवासितमनसो न विकारिणो भवन्ति, सुधाकुण्डे स्नानं कुर्वतां यथा विषस्य धारा न विकरोति तथाऽत्रापि ज्ञेयम् ॥२॥

**– कर्णेन्द्रियविषयान् प्रति योगिना मानसम् –**

'सुविशालरसालमञ्जरी--विचरत्कोकिलकाकलीभरैः ।
किमु माद्यति योगिनां मनो निभृताऽनाहतनादसादरम् ॥३॥

टीकाः—अत्यन्तविशालस्याम्रस्य मञ्जरीषु विचरतः सत आनन्दमनुभवतः कोकिलस्य सूक्ष्ममधुर-शब्दसमूहैः, आत्यन्तिकानाहतनामकनादश्रवणे सादरं ससत्कारं योगिनां मनः किमु माद्यति—प्रमोदमत्तं भवति ? अर्थान्न भवत्येवेति ॥३॥

**—पुनरेन विषयं समर्थयते—**

'रमणीमृदुपाणिकङ्कण--क्वणनाकर्णनपूर्णघूर्णनाः ।
अनुभूतिनटीस्फुटीकृत--प्रियसङ्गीतरता न योगिनः ॥४॥

टीकाः—अनुभूतिनट्या=चिदानन्दरूपस्वस्वरूपानुभवनामकनटीद्वारा स्पष्टीकृतप्रियसङ्गीते रतिमन्तो योगिनः, रमण्याः कोमलकरस्थितकङ्कणानां क्वणनस्य--शब्दस्याकर्णनेन-श्रवणेन पूर्णघूर्णनाः=मस्तक-धूननादिक्रियावन्तो न भवन्त्येवेति ॥४॥

—कर्णेन्द्रियविषयविरागविषयो वर्त्तमानोस्ति—

'स्खलनाय न शुद्धचेतसां, ललनापञ्चमचारुघोलना ।
यदियं समतापदावली- मधुरालापरतेर्न रोचते ॥५॥

टीकाः-शुद्धचेतसां=निर्मलमानसानां योगिनां, ललनापञ्चमचारुघोलना=युवतिजनस्य पञ्चमस्वरेण कृता चारुसंगीतस्य पुनः पुनरावृत्तिरूपा घोलना, न स्खलनाय भवति यद् इयं=यत इयं विशिष्टघोलना, समतापदावलीमधुरालापरतेः=वैराग्योत्तेजकसमतावाचकपदानामावलीनां मधुरालापे रति र्यस्य तस्य मुनेर्न रोचते—रुचिविषया न भवति ॥५॥

—चक्षुरिन्द्रियविषयरूपवैराग्यम्—

'सततं क्षयि शुक्रशोणित—प्रभवं रूपमपि प्रियं नहि ।
अविनाशिनिसर्गनिर्मल—प्रथमानस्वकरूपदर्शिनः ॥६॥

टीकाः-शुक्रशोणितप्रभवं=पितुः शुक्रेण, मातुश्च शोणितेन जनितं मानवदेहसत्कं सततं क्षयि=निरन्तरविनश्वरं रूपसौन्दर्यमपि, अविनाशिनिसर्गनिर्मलप्रथमानस्वकरूपदर्शिनः=अच्युतस्वतोविशुद्धविस्तृतस्वात्मरूपसौन्दर्यदर्शिनो योगिनो नहि प्रियं भवतीति ॥६॥

— पुना रूपवैराग्यवर्णनम् —

'परदृश्यमपायसङ्कुलं, विषयो यत् खलु चर्मचक्षुषः ।
नहि रूपमिदं मुदे, यथा निरपायाऽनुभवैकगोचरः ॥७॥

टीकाः–रूपमिदं=दैहिकसौन्दर्यरूपं, परदृश्यं=परैरपि दर्शनीयं-दर्शनद्वारा सर्वैरूपं भुज्यते, अपायसङ्कुलं=रोगजराद्यपायैः सर्वकालं संव्याप्तं, यत्खलु चर्मचक्षुषो विषयः=यतो निश्चयतश्चर्मचक्षुषो-बाह्यचक्षुषो विषयोऽस्ति ततो मानवादिदेहगतं रूपं योगिनां नहि मुदे-हर्षाय भवति, यथा निरपायाऽनुभवैकगोचरः=अपायमात्रेण शून्यं अनुभवनामकान्तरनयनेनैकेन गम्यविषयरूपं स्वात्मस्वरूपं भृशं हर्षाय भवतीति ॥७॥

—ललनानां गतिहास्यादिचेष्टासु वैराग्यम्—

'गतिविभ्रमहास्यचेष्टितैर्ललनानामिह मोदतेऽबुधः ।
सुकृताऽद्रिपविष्वमीषु नो, विरतानां प्रसरन्ति दृष्टयः ॥८॥

टीकाः–इह–जगति, ललनानां=क्रीडावतीनां युवतीनां, मत्तेभगतिविभ्रमवामनयनस्मितहास्यहावभावादिचेष्टितै र्मोहमूढो मोदते–हर्षान्वितो भवति, परन्तु, अमीषु गत्यादिविकारिचेष्टितेषु, सुकृताद्रिपविषु=

पुण्यनामकपर्वतानां भञ्जने वज्ररूपेषु अर्थात् समुपार्जितधर्मपुण्यविनाशकत्वेन, ललनानां गत्यादिचेष्टितेषु, विरतानां=सर्वसावद्ययोगतो विरतानां-वैराग्यवतां, दृष्टयः-नेत्राणि, नो प्रसरन्ति=नो गतिमाप्नुवन्तीति ॥८॥

–घ्राणेन्द्रियविषयगन्धवैराग्यम्–

'न मुदे मृगनाभिमल्लिका-लवलीचन्दनचन्द्रसौरभम् ।
विदुषां निरुपाधिबाधित-स्मरशीलेन सुगन्धिवर्ष्मणाम् ॥९॥

टीका:–'निरुपाधिबाधितस्मरशीलेन सुगन्धिवर्ष्मणां विदुषां'=सर्वोपाधिरहितेन, कामेच्छामात्रप्रतिबन्धकेन शीलेन–ब्रह्मचर्येण शोभनगन्धसुरभितशरीराणां वैराग्यविशिष्टसम्यग्ज्ञानिनां योगिनां मृगनाभेः–कस्तुर्याः, मल्लिकायाः–विचकिलस्य, चन्दनस्य, चन्द्रस्य-कर्पूरस्य सौरभं मुदे-आनन्दाय न भवतीति ॥९॥

–शीलसौरभं हि परं सौरभम्–

'उपयोगमुपैति यच्चिर, हरते यन्न विभावमारुतः ।
न ततः खलु शीलसौरभा-दपरस्मिन्निह युज्यते रतिः ॥१०॥

टीका:-'उपयोगमुपैति यच्चिरं'=यच्छीलनामक-सौरभं चिरं–बहुकालं यावत् उपयोगापेक्षया स्वसमीपे तिष्ठति, यतः शीलसौरभभिन्नं सौरभं क्षणिकम्, 'हरते यन्न विभावमारुतः'=स्वभावभिन्नपरभावनामकः

पवनः यच्छीलसौरभं नान्यत्र नयति, यतः शीलसौरभं परमस्थिरं, न कोऽपि तदधोघटयितुं क्षमः, ततः–
तस्माच्छीलसौरभादपरस्मिन्-द्वितीयस्मिन् सौरभे इह-संसारेऽस्मिन्, निश्चयतो, रती रागो न युज्यते ॥१०॥

—रसनेन्द्रियविषयभूतरसवैराग्यम्—

'मधुरैर्न रसैरधीरता, क्वचनाऽध्यात्मसुधालिहां सताम् ।
अरसैः कुसुमैरिवाऽलिनां, प्रसरत् पद्मपरागमोदिनाम् ॥११॥

टीकाः-प्रसरत् पद्मपरागमोदिनां=सर्वत्र व्यापकैः कमलपरागैः (तद्रजोभिः) मोदशालिनामलिनां-भ्रमराणां 'यथाऽरसैः कुसुमैः=रसरहितैः पुष्पैः नाधीरताऽर्थाद् रसरहितसुमनांसि प्रति गमनोत्सुकता न तथाऽध्यात्मसुधालिहां सतां'=ज्ञानगर्भितवैराग्यनामकाध्यात्माऽमृतपानरसिकानां विरक्तानां मुनीनां' मधुरै 'रसैर्नाऽधीरता'=मधुररसवत्पदार्थान्-पुद्गलविशेषान् प्रति पासिक्ते मानसिकस्थिरताया अभावो न, भोगोपभोगान् प्रति स्वौत्सुक्याभावः ॥११॥

-शान्तरससरसि निमग्नानां रसनारसैरलम्-

'विषमायतिभिर्नु किं रसैः, स्फुटमापातसुखैर्विकारिभिः ।
नवमेऽनवमे रसे मनो, यदि मग्नं सतताऽविकारिणि ॥१२॥

टीकाः—'सतताऽविकारिणि'=नैरन्तर्येण विकारविरहिते अविकारके वा 'नवमेऽनवमे रसे यदि मनो मग्नं'=शृङ्गारादिनवसु रसेषु मध्ये, तृष्णाक्षयरूपस्थायिभावजन्ये शान्तरसनामके नवमे, सर्वोत्तमे, रसे यदि चित्तं मग्नं स्यात्तदा, 'स्फुटमापातसुखैः=स्पष्ट प्रारम्भे सुखरूपैः 'विषमायतिभिः=उत्तरकाले-भविष्यत्काले विषमैः=भयङ्करदुःखरूपैः, 'विकारिभिः'=विकारकारिभिः 'रसैर्नु किं'=मधुरादिरसभृतै मिंष्टान्न-पक्वान्नादिभिः, नीरसीभावं मनसि सम्प्राप्य त्यागबुद्धिरूपापेक्षया कथितं किं—पर्याप्तं—सृतमित्यर्थः ॥१२॥

रसविषये रसलोभिनां विरक्तानामपि जलं पतति—

'मधुरं रसमाप्य निष्पतेद्, रसलोभिनां जलम् ।
परिभाव्य विपाकसाध्वसं, विरतानां तु ततो दृशोर्जलम् ॥१३॥

टीकाः='मधुरं रसमाप्य'—मधुरादिरसपरिपूर्णान् पदार्थान् भोज्यवस्तूनि प्राप्य 'रसलोभिनां रसनातो जलं निष्पतेत्' रसलम्पटानां स्वजिह्वातः सुगन्धागमनाऽनन्तरं जलं मुखतो बहि निर्गच्छेत् , 'विरतानां तु'=वैराग्यवतां त्यागिनां तु, 'परिभाव्य विपाकसाध्वसं'=उत्तरकालीनमहाभयरूपं परिणामं परितो विचार्य, ततः=मधुरादिरसवत्पदार्थप्राप्त्यनन्तरं 'दृशोर्जलम्'=नयनयुगलतो जलमश्रुनामकजलं पतति यतो रसरागस्य कीदृशः करुणविपाक आगच्छतीति ॥१३॥

-स्पर्शनेन्द्रियविषयवैराग्यम्-

'इह ये गुणपुष्पपूरिते, धृतिपत्नीमुपगुह्य शेरते ।
विमले सुविकल्पतल्पके, क्व बहिःस्पर्शरता भवन्तु ते ॥१४॥

टीकाः—इह-संसारे ये योगिनः गुणनामकपुष्पैः पूरिते विमले-निर्मले सुविकल्पतल्पके-शुभशुक्लध्यानरूपशय्यायां धृतिनामकपत्नीमुप गुह्य-परिरभ्य ते योगिनः शेरते-शयनं कुर्वते, 'बहिःस्पर्शरताः' बाह्यजगतो ललनादिकोमलस्पर्शपरायणास्ते योगिनः 'क्व भवन्तु'=कुतः कथं वा भवन्तु अर्थात् कुत्रापि कथमपि न भवेयुः ॥१४॥

-स्पर्शनेन्द्रियविषयस्पर्शासत्क वैराग्यं वर्त्तमानमस्ति—

'हृदि निर्वृतिमेव बिभ्रतां, न मुदे चन्दनलेपनाविधिः ।
विमलत्वमुपेयुषां सदा, सलिलस्नानकलाऽपि निष्फला ॥१५॥

टीकाः—हृदि—आत्मनि, निर्वृतिमेव—चिदानन्दमेव बिभ्रतां धारयतां योगिनां चन्दनलेपनाविधिः'—चन्दनद्रवविलेपनक्रिया 'न मुदे'—हर्षाय न भवति 'विमलत्वमुपेयुषां सदा'—सर्वकालं ब्रह्मचर्यादिपरम-

शुद्धिजन्यविमलत्वं प्राप्तानां योगिनां 'सलिलस्नानकलाऽपि निष्फला' जलीयस्नानस्यांऽशोऽपि निरुपयोग्येवेति ॥१५॥

-योगिनां भोगिनां च दृष्टेर्महदन्तरम्—

'गणयन्ति जनुः स्वमर्थवत् सुरतोल्लाससुखेन भोगिनः ।
मदनाहिविषोग्रमूर्च्छनामयतुल्यं तु तदेव योगिनः ॥१६॥

टीकाः—'भोगिनःसुरतोल्लाससुखेन' भोगरसिका जीवाः स्पर्शनेन्द्रियजन्यविषयसुखानुभवजनितोल्लाससुखेन 'स्वजनुरर्थवद् गणयन्ति=स्वकीयं जन्म सार्थकं गणयन्ति, योगिनस्तु तदेव'=तदेव भोगिनो जन्म, 'मदनाहिविषोग्रमूर्च्छनामयतुल्यं=कामरूपसर्पविषजातभयङ्करमूर्च्छाप्राचुर्यपूर्णेन सहसमानं गणयन्त्येव ॥१६॥

-ऐहिकपारलौकिकविषया विरक्तानां हर्षाय न—

'तदिमे विषयाः किलैहिका, न मुदे केऽपि विरक्तचेतसाम् ।
परलोकसुखेऽपि निःस्पृहाः, परमानन्दरसाऽलसा अमी ॥१७॥

टीकाः-'तदिमे विषयाः किलैहिकाः'=तस्मादिमे—इन्द्रियसम्बन्धिनः किलेहलौकिकाः केऽपि मनोहराद्या अपि विषया 'विरक्तचेतसां न मुदे'=वैराग्यवासितमानसानां न हर्षाय भवन्ति 'अमी परमानन्दर-

-स्पर्शनेन्द्रियविषयवैराग्यम्-

'इह ये गुणपुष्पपूरिते, धृतिपत्नीमुपगुह्य शेरते ।
विमले सुविकल्पतल्पके, क्व बहिःस्पर्शरता भवन्तु ते ॥१४॥

टीकाः—इह-संसारे ये योगिनः गुणनामकपुष्पैः पूरिते विमले-निर्मले सुविकल्पतल्पके-शुभशुक्लध्यानरूपशय्यायां धृतिनामकपत्नीमुप गुह्य-परिरभ्य ते योगिनः शेरते-शयनं कुर्वते, 'बहिःस्पर्शरताः' बाह्यजगतो ललनादिकोमलस्पर्शपरायणास्ते योगिनः 'क्व भवन्तु'=कुतः कथं वा भवन्तु अर्थात् कुत्रापि कथमपि न भवेयुः ॥१४॥

-स्पर्शनेन्द्रियविषयस्पर्शसत्क वैराग्यं वर्त्तमानमस्ति—

'हृदि निर्वृतिमेव बिभ्रतां, न मुदे चन्दनलेपनाविधिः ।
विमलत्वमुपेयुषां सदा, सलिलस्नानकलाऽपि निष्फला ॥१५॥

टीकाः—हृदि—आत्मनि, निर्वृतिमेव—चिदानन्दमेव बिभ्रतां धारयतां योगिनां चन्दनलेपनाविधिः'—चन्दनद्रवविलेपनक्रिया 'न मुदे'—हर्षाय न भवति 'विमलत्वमुपेयुषां सदा'—सर्वकालं ब्रह्मचर्यादिपरम-

शुद्धिजन्यविमलत्वं प्राप्तानां योगिनां 'सलिलस्नानकलाऽपि निष्फला' जलीयस्नानस्यांऽशोऽपि निरुपयोग्येवेति ॥१५॥

—योगिनां भोगिनां च दृष्टेर्महदन्तरम्—

'गणयन्ति जनुः स्वमर्थवत् सुरतोल्लाससुखेन भोगिनः ।
मदनाहिविषोग्रमूर्च्छनामयतुल्यं तु तदेव योगिनः ॥१६॥

टीकाः—'भोगिनःसुरतोल्लाससुखेन' भोगरसिका जीवाः स्पर्शनेन्द्रियजन्यविषयसुखानुभवजनितोल्लाससुखेन 'स्वजनुरर्थवद् गणयन्ति=स्वकीयं जन्म सार्थकं गणयन्ति, योगिनस्तु तदेव'=तदेव भोगिनो जन्म, 'मदनाहिविषोग्रमूर्च्छनामयतुल्यं=कामरूपसर्पविषजातभयङ्करमूर्च्छाप्राचुर्यपूर्णेन सहसमानं गणयन्त्येव ॥१६॥

—ऐहिकपारलौकिकविषया विरक्तानां हर्षाय न—

'तदिमे विषयाः किलैहिका, न मुदे केऽपि विरक्तचेतसाम् ।
परलोकसुखेऽपि निःस्पृहाः, परमानन्दरसाऽलसा अमी ॥१७॥

टीकाः—'तदिमे विषयाः किलैहिकाः'=तस्मादिमे—इन्द्रियसम्बन्धिनः किलेहलौकिकाः केऽपि मनोहराद्या अपि विषया 'विरक्तचेतसां न मुदे'=वैराग्यवासितमानसानां न हर्षाय भवन्ति 'अमी परमानन्दर-

॥१३१॥

सालसाः'=एते ज्ञानगर्भितवैराग्यवन्तः परमाध्यात्मिकशान्तरसजन्यानन्दरसास्वादैकलीनाः, अत एव 'परलोकसुखेऽपि निःस्पृहाः'=पारलौकिकस्वर्गादिगतसुखानन्दरसेऽपि स्पृहाशून्याः, अर्थात् सांसारिकसांयोगिकौपयिकसुखमात्रे निःस्पृहाः, परमानन्दरसालसत्वान्मोक्षैककामिनः ॥१७॥

–आनुश्रविकविषयत्यागरूपवैराग्यवर्णनम्–

'मदमोहविषादमत्सर-ज्वरबाधाविधुराः सुरा अपि ।
विषमिश्रितपायसान्नवत्, सुखमेतेष्वपि नैति रम्यताम् ॥१८॥

टीकाः=ननु देवलोकेषु दिव्यविषया इन्द्रियजन्याः किमानन्ददायिनो न ? इति चेदुच्यते 'सुरा अपि मदमोहमत्सरज्वरबाधाविधुराः' देवा अपि किमुताऽन्य इत्यपि शब्दार्थः, अभिमानमोहनीयकर्मोदयरूपमोहेर्ष्यारूपज्वरजन्यपीडाभिः पीडिताः सन्ति, तादृशदेवेषु दिव्यविषयसुखं वास्तविकं सुखं कथं ? यतो मदादिदोषप्राचुर्यंपरिणामकटुता तत्रास्ति अत एव 'विषमिश्रितपायसान्नवत्'=तालपुटविषकणेनाऽपि मिश्रितपायस-(पयसानिष्पन्नदुग्धपाकरूप) क्षैरेयीभोजनतुल्यं, 'एतेष्वपि सुखं न रम्यतामेति'=देवसम्बन्धिविषयेष्वपि, किमुताऽन्यविषयेष्वपिशब्दार्थः, रमणीयतारहितसुखं, अर्थाद् योगिनामानुश्रविकदेवसत्कविषयभ्यो वैराग्यमेव, देवसुखं न रम्यसुखमपितु परिणामतो दुःखदुर्गतिदत्वेन दुःखरूपमेवेति योगिन एव जानन्ति ॥१८॥

**–स्वर्गेऽपि देवानां सुखस्य सम्भवो न–**

'रमणीविरहेण वह्निना, बहुबाष्पाऽनिलदीपितेन यत् ।
त्रिदशैर्दिवि दुःखमाप्यते, घटते तत्र कथं सुखस्थितिः ॥१९॥

टीकाः--बहुबाष्पाऽनिलदीपितेन'=बहूष्णनिःश्वासवायुप्रज्वलितेन रमण्या विरहरूपाऽग्निना, यत् त्रिदशै र्देवैः दिवि--स्वर्गे दुःखमाप्यते, आर्त्तध्यानजन्यं दुःखं लभ्यते, तत्र कथं सुखेन स्थितिर्युज्यते ? ॥१९॥

**—देवानां हृदयं च्यवनचिन्ताऽपि दहति तत्र किं सुखं ?**

'प्रथमानविमानसम्पदां, च्यवनस्यापि दिवो विचिन्तनात् ।
हृदयं नहि यद्विदीर्यते, द्युसदां तत्कुलिशाणुनिर्मितम् ॥२०॥

टीकाः—'प्रथमानविमानसम्पदां द्युसदां'=विस्तारवद्विमानसम्बन्धिमहैश्वर्यमाहत्म्यशालिनां नाकिनां 'दिवश्च्यवनस्याऽपि विचिन्तनात्' स्वर्गतश्च्यवनस्य -मरणस्याऽपि (च्यवनभिन्नस्य तु का वार्त्तेत्यपि-शब्दार्थः) कल्पनातो हृदयं यन्नहि विदीर्यते तद् हृदयं वज्रस्याऽणुभिनिर्मितमिति मन्तव्यम् ॥२०॥

—सकलगतिगतविषयेषु शिवार्थिनो नो रतिः—

'विषयेषु रतिःशिवार्थिनो, न गतिष्वस्ति किलाऽखिलास्वपि।
घननन्दन--चन्दनार्थिनो, गिरिभूमिष्वपरद्रुमेष्विव ॥२१॥

टीकाः--'शिवार्थिनः' मोक्षपुरुषार्थरूपप्रयोजनैकनिश्चयपूर्णश्रमशालिनो वैराग्यमूर्तेर्मुनेः 'किलाऽखिलासु गतिषु विषयेषु न रतिरस्ति'=सकलदेवादिगतिषु स्थितेषु इन्द्रियसत्कशब्दादिविषयेषु न रतिः--रमणता नास्ति यथा 'घननन्दनचन्दनार्थिनः'=सान्द्रनन्दनवनचन्दनस्पृहावतः 'गिरिभूमिष्वपरद्रुमेषु' पर्वतीयभूमिगतविवक्षितचन्दनभिन्नापरवृक्षेषु न रतिः--प्रेम तथात्राऽपि विज्ञेयमिति ॥२१॥

—स्वलब्धिरूपगुणनिःस्पृहतारूपं परवैराग्यम्—

'इति शुद्धमतिस्थिरीकृताऽपरवैराग्यरसस्य योगिनः।
स्वगुणेषु वितृष्णताऽऽवहं, परवैराग्यमपि प्रवर्त्तते ॥२२॥

टीकाः—'इति शुद्धमतिस्थिरीकृतापरवैराग्यरसस्य योगिनः'=पूर्वोक्तरीत्याऽत्यन्तनिर्मलमननशील मतिबलेनैकान्तसुदृढीकृतविषयवैराग्यनामकमध्यमकोटीकाऽपरवैराग्यरसिकतासम्पन्नस्य साधोः, 'स्वगुणेषु वितृष्णतावहं'=साधनारूपप्रयत्नजन्या गुणरूपलब्धीः प्रति तृष्णाया अभावरूपं वैराग्यं परमुत्कृष्टवैराग्यं प्रवर्त्तते ॥२२॥

—परवैराग्यवतां विपुलर्द्धिप्रभृतयो लब्धयो न मदाय—

'विपुलर्द्धिपुलाक चारण-प्रबलाऽऽशीविषमुख्यलब्धयः ।
न मदाय विरक्तचेतसा-मनुषङ्गोपनताः पलालवत् ॥२३॥

टीकाः—विपुलर्द्धिविशिष्टपुलाकलब्धिश्च चारणलब्धिश्च प्रबलाशीविपलब्धिश्च ता मुख्याः-आद्या लब्धयः=विपुलर्द्धिपुलाकचारणप्रबलाशीविषमुख्यलब्धयः, अनुषङ्गोपनताः=साधकानामानुषङ्गिक्य इति मन्वानानां विरक्तचेतसां न मदायाऽभिमानाय जायन्ते, यथा धान्यरूपमुख्योद्देश्यमुद्दिश्य कृषिं कुर्वतां कृषिवलानां पलाल-तृणादिप्राप्तिरानुषङ्गिकी न मदाय तथाऽत्रापि ज्ञेयम् ॥२३॥

--आत्मरतिकारिणां वैराग्याऽऽढयानां गुणव्रजो न मदकारी--

'कलिताऽतिशयोऽपि कोऽपि नो, विबुधानां मदकृद् गुणव्रजः ।
अधिकं न विदन्त्यमी यतो, निजभावे समुदञ्चति स्वतः ॥२४॥

टीकाः—विबुधानां=सम्यगात्मज्ञानिनां, 'कलिताऽतिशयोऽपि कोऽपि गुणव्रजः'=अपूर्वोऽतिशय-सम्पन्नोऽपि लब्धिसमूहो 'मदकृन्नो' मदकारी न भवति, 'यतः स्वतो निजभावे समुदञ्चति' स्वतः--आत्मतः, आत्मरमणता--स्वभावे वर्धमाने विकसति वा सति-ऊर्द्ध्वं गते वा सति, अमी-ज्ञानगर्भवैराग्य-

॥१३५॥

वन्तो विबुधा अधिकं न विदन्ति-स्वरूपस्थितिमेव जानन्ति, आत्मरमणताज्ञानभिन्नजगज्ज्ञाननिरपेक्षाः, आत्मरमणतां विहायाऽधिकज्ञानेऽपेक्षाया अभावः ॥२४॥

--असङ्गाऽनुष्ठानगतानां चेतसि शिवेऽपि न कामना--

'हृदये न शिवेऽपि लुब्धता, सदनुष्ठानमसङ्गमङ्गति ।
पुरुषस्य दशेयमिष्यते, सहजाऽऽनन्दतरङ्गसङ्गता ॥२५॥

टीकाः -यदा महात्मनां सदनुष्ठानं, असङ्गानुष्ठाने परिणमतेऽर्थात् सदनुष्ठानमसङ्गमङ्गति तदाऽसङ्गानुष्ठानवतां 'हृदये न शिवेऽपि लुब्धता'=मोक्षेऽपि मोक्षभिन्नविषये तु का कथा ? इत्यपिशब्दार्थः, न कामनाऽर्थादसङ्गाऽनुष्ठानतः पूर्वकाले वचआद्यनुष्ठाने शिवविषयकलुब्धता त्वासीदधुनाऽत्र नेति अत एवाऽसङ्गाऽनुष्ठानस्वामिनः, 'सहजाऽऽनन्दतरङ्ग सङ्ग ता पुरुषस्य दशेयमिष्यते'=स्वभावभूतचिदानन्दस्य तरङ्गैः सहाखण्डसङ्गाऽभिन्नेयं दशा मुमुक्षुविशेषपुरुषस्येष्यते नान्यस्येत्यर्थः ॥२५॥

- वैराग्ये विलसच्चेतसं यशः श्रियो वरीतुमुपयन्ति—

'इति यस्य महामते र्भवेदिह-वैराग्यविलासभृन्मनः ।
उपयन्ति वरीतुमुच्चकै-स्तमुदारप्रकृतिं यशःश्रियः ॥२६॥

॥१३६॥

टीकाः इति-एवमिह-जगति, यस्य महामतेर्मुमुक्षो वैराग्यविलासभृन्मनः' वैराग्ये विलासे रतिं विश्रम्भितं भवेत्तं 'वैराग्यविलासिचेतस्कमुदारप्रकृति-उदात्तस्वभावं यशः श्रिय उच्चकै र्वरीतुमुपयन्ति समीपं यान्ति ॥२६॥

इत्याचार्यश्रीमद्-विजयलब्धिसूरीश्वर-पट्टधराचार्य-श्रीमद् विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां वैराग्यविषयाख्यः सप्तमोऽधिकारः समाप्तः ॥२०८॥

अथ ममत्वत्यागनामकोऽष्टमोऽधिकारः

-ममतारहितस्यैव वैराग्यं स्थिरं भवति-

'निर्ममस्यैव वैराग्यं' स्थिरत्वमवगाहते ।
परित्यजेत्ततः प्राज्ञो ममतामत्यनर्थदाम् ॥१॥

टीकाः-सर्वथा ममतारहितस्यैव, ममतासहितस्य नेत्यर्थः, किं? पूर्वोक्तज्ञानगर्भवैराग्यं, 'स्थिरत्वमवगाहते'=स्थायिभावं प्राप्नोति, ततः-तस्मात्कारणात्, 'प्राज्ञोऽत्यनर्थदां ममतां परित्यजेत्'=सम्यग्ज्ञानसम्पन्नः, बलवदनर्थरूपनरकादिदुर्गतिप्रदानदक्षां, ममतानामकभावरूपां सर्वथा त्यागविषयां ममतां कुर्यादिति ॥१॥

-जाग्रन्ममतावतां किं त्यक्तैर्विषयैः-

विषयैः किं परित्यक्तै र्जागर्ति ममता यदि ।
त्यागात् कञ्चुकमात्रस्य भुजङ्गो नहि निर्विषः ॥२॥

टीकाः--'यदि ममता जागर्ति=यदि ममभावो मुमुक्षोरन्तःकरणे जीवन् विद्यते तदा 'किं विषयैः परित्यक्तैः'=बाह्यविषयाणां त्यागस्य कोऽर्थः? 'भुजङ्गो नहि निर्विषः, कञ्चुकमात्रस्य त्यागात्'=सर्पेऽहित्वग्रूपकञ्चुकमात्रस्य त्यागाद्धि न निर्विषो भवति, तथाऽत्रापि बहिरङ्गीयवस्तुत्यागतो बाह्यवस्तुगत-ममतात्यागरूपोऽन्तरङ्गीयत्यागः श्रेष्ठश्रेयस्करः, ममतात्यागेनैव विषयत्यागस्य मोक्षफलदायित्वेन सफलता नाऽन्यथेति ॥२॥

--ममताराक्षसी गुणग्रामं यौगपद्येन भक्षयति--

'कष्टेन हि गुणग्रामं, प्रगुणीकुरुते मुनिः
ममताराक्षसी सर्वं, भक्षयत्येकहेलया ॥३॥

टीकाः–मुनिसाधकः साधनाकाले भयङ्करदुःखानि सहित्वा स्वात्मनि गुणगणं 'प्रगुणीकुरुते'–एकत्रितं करोति पिण्डितं व्यवस्थितं वा रचयति परन्तु ममतारूपिणी राक्षसी सर्वंगुणग्राममेकहेलया–एकलीलामात्रेण सद्यो भक्षयति-समूलमुन्मूलयत्येवेति ॥३॥

–ममतापत्नी जीवरूपपतिं रमयति–

'जन्तुकान्तं पशूकृत्य, द्रागविद्यौषधीबलात् ।
उपायैर्बहुभिः पत्नी-ममता क्रीडयत्यहो ॥४॥

टीकाः–ममतानामिका पत्नी, झटिति, अविद्या-अतत्त्वबुद्धिरूपौषधीबलेन, 'पशूकृत्य जन्तुकान्तं'= जीवरूपपतिं बलीवर्दादिरूपचतुष्पदादिना पशुं कृत्वाऽज्ञानवन्तं सृष्ट्वा नानाविधैः साधनैः क्रीडयति-रमयति व्यङ्गयतो मारयति वेति ॥४॥

–ममतायाःसम्बन्धेनैव सर्वबाह्यसम्बन्धनिर्माणम्–

'एकः परभवे याति, जायते चैक एव हि ।
ममतोद्रेकतः सर्वं, सम्बन्धं कल्पयत्यथ ॥५॥

टीकाः–जीवस्य कीदृशी रङ्कता पश्य २ एकक एव जीवो याति परभवे–भवान्तरे, चैकक एव हि जायते–उत्पद्यते तथाप्यथ जननमरणमध्यवर्ती जीवः, 'ममतोद्रेकतः'=ममताया आधिक्यतः, सर्वं बाह्यसम्बन्धं कल्पयति-निर्मिमीते निर्मापयति च ॥५॥

--ममतानामकबीजतो भवप्रपञ्चस्य रचनासृष्टिः–

'व्याप्नोति महतीं भूमिं, वटबीजाद्यथा वटः ।
तथैकममताबीजात्प्रपञ्चस्याऽपि कल्पना ॥६॥

टीकाः—यथा वटवृक्षो वटबीजा-न्महतीं-विशालां भूमिं व्याप्नोति तथा, एकस्मान्ममतानामकबीजाज्जीवस्य संसाररूपप्रपञ्चस्य जन्मादिकर्मादिप्रपञ्चस्यापि तन्मध्यस्थस्याऽपि का वार्तेत्यपिशब्दार्थः ॥६॥

॥१३९॥

-स्वजनममत्वत्यागः--

'माता पिता मे भ्राता मे, भगिनी वल्लभा च मे ।
पुत्राः सुता मे मित्राणि, ज्ञातयः संस्तुताश्च मे ॥७॥
इत्येवं ममताव्याधिं वर्द्धमानं प्रतिक्षणम् ।
जनः शक्नोति नोच्छेत्तुं, विना ज्ञानमहौषधम् ॥८॥

टीकाः-मम माता, मे पिता, मे भ्राता, मे भगिनी, मे वल्लभा-प्रिया, मे पुत्राः, मे सुताः-पुत्र्यः, मे मित्राणि, ज्ञातयो- एकज्ञातीयवर्गाः, मे, मे संस्तुताः--परिचिता इत्येवं प्रतिक्षणं वर्द्धमानं ममतानामक-व्याधिं, ज्ञानरूपं महौषधं विना, जन उच्छेत्तुं न शक्नोति--समर्थो न भवतीति ॥७॥८॥

-धनममत्वत्यागः-

'ममत्वेनैव निःशङ्क-मारम्भादौ प्रवर्त्तते ।
कालाऽकालसमुत्थायी, धनलोभेन धावति ॥९॥

टीकाः -स्वजनादिममत्वहेतुना निःशङ्कं -प्रभुपापदुर्गतिप्रभृतिभयं विना, जीव आरम्भादौ--जीव-हिंसादिघोरपापकर्मणि प्रवर्त्तते--प्रवृत्तिं कुरुते, 'कालाऽकालसमुत्थायी' कालेऽकाले च समुत्थानशीलः,

अर्थाद्‌धनस्य कालोऽस्ति वाऽकालोऽस्तीति किमप्यदृष्ट्वैव, धनस्य लोभेन धावति-द्रुतं द्रुतं गच्छतीति ॥९॥

–अशरणं जगत्–

'स्वयं येषां च पोषाय, खिद्यते ममतावशः ।
इहामुत्र च ते न स्युस्त्राणाय शरणाय वा ॥१०॥

टीकाः--च--किञ्च, स्वयं येषां--स्वजनादीनां पोषाय--पोषणाय ममतापरवशो जीवः खिद्यते--दुःसहानि कष्टानि तीव्रान् सतापतापांश्च सहते, ते स्वजनादयः, इह--अस्मिन् वर्त्तमाने भवे 'न त्राणाय शरणाय वा स्युः'=तस्य जीवस्य वृद्धाद्यवस्थातो रोगाद्यापत्तितो रक्षणाय शरणाय-अवलम्बनाय न भवेयुः 'अमुत्र'=परलोके -भवांतरे च न रक्षणायावलम्बनाय-निर्भयं जीवनयापनायाधारभूताय स्युरिति ॥१०॥

–पापेनाऽर्जितैर्धनैरेकोऽन्यान्पुष्णन्नरकदुःखानां सोढा–

'ममत्वेन बहून् लोकान्, पुष्णात्येकोऽर्जितैर्धनैः ।
सोढा नरकदुःखानां, तीव्राणामेक एव तु ॥११॥

टीकाः--ममताहेतुनाऽष्टादशपापस्थानकद्वाराऽर्जितैर्धनैः स्वजनादीन् बहून् लोकानेकः पुष्णाति, स तु पापोपार्जकः पोषक एकक एव तीव्राणामतुलानां नरकसम्बन्धिदशविधवेदनादुःखानां सोढा--सहनकर्त्ता भवत्यवश्यमिति ॥११॥

जात्यन्धममतान्धयो र्महदन्तरम्--

'ममताऽन्धो हि यन्नास्ति, तत्पश्यति, न पश्यति ।
जात्यन्धस्तु यदस्त्येत-द्भेद इत्यनयोर्महान् ॥१२॥

टीका:—जात्यन्धस्तु--जन्मनाऽन्धस्तु, विश्वेऽस्मिन् यदेतद् रूपादिकं रूपादिवद्वस्तु 'यदस्ति'--यद् विद्यते तन्न पश्यति, चर्मचक्षुषोरभावाद्, 'ममतान्धस्तु'=रागान्धस्तु यन्नास्ति (यथा स्वजनादिकं स्वकीय नास्ति तत् (स्वकीयत्वेन) पश्यति भ्रमात्मकदृष्टित्वात्, इति अनयोः'—जात्यन्धममतान्धयो 'र्महान् भेदः'—महदन्तरमिति ॥१२॥

—अहो स्त्रीममत्वं कीदृशम् ? पश्य २

'प्राणानभिन्नताध्यानात्, प्रेमभूम्ना ततोऽधिकाम् ।
प्राणापहां प्रियां मत्वा, मोदते ममतावशः ॥१३॥

टीका:—ममतावशो जीवः शरीरादिप्राणान् स्वात्मना सहाभिन्नताध्यानात्, प्राणैः सहात्मैकतामनुभवति, अथवा स्वीयप्रियां प्राणाभिन्नां कल्पते तत्तु वरं परंतु 'प्रेमभूम्ना ततोऽधिका' प्रेम्णो बाहुल्येनाधिक्येन प्रियां प्राणेभ्योऽप्यधिकां महतीं, वस्तुतः 'प्राणापहां' प्राणहरीमपि (सूर्यकान्तावत्) मत्वा ममतान्धः पति र्मोदते इति ॥१३॥

॥१४२॥

– ममतामूढः स्त्रीणामवयवान् कीदृशान् मनुते ? पश्य २ –

'कुन्दान्यस्थीनि दशनान्, मुखं श्लेष्मगृहं विधुं ।
मांसग्रन्थी कुचौ कुम्भौ, हेम्नो वेत्ति ममत्ववान् ॥१४॥

टीकाः–अहो एतस्या ममतायाः कार्मणं कीदृशं विचित्रम् ? 'कुन्दान्यस्थीनि दशनान्'=अस्थिस्वरूपान् दन्तान् कुन्दनामकपुष्पकलिकात्वेन, 'श्लेष्मगृहं मुखं विधुं'=कफस्य गृहं मुखं विधुत्वेन-चन्द्रत्वेन, 'मांसग्रन्थी कुचौ हेम्नः कुम्भौ'=मांसकोशरूपौ कुचौ-स्तनौ सौवर्णकलशरूपत्वेन ममत्ववान्-ममताशाली जीवः, वास्तविकतां निह्नूय भ्रमदृष्टिकत्वेन परपदार्थेऽपि कल्पनाशीलकविवत्, अतिशयोक्तिं कृत्वा विपरीततत्त्वं वेत्ति-जानातीति ॥१४॥

– ममत्वाक्रान्तो लोलाऽक्षीं सतीत्वेन मन्यते –

'मनस्यन्यद्वचस्यन्यत्, क्रियायामन्यदेव च ।
यस्यास्तामपि लोलाक्षीं, साध्वीं वेत्ति ममत्ववान् ॥१५॥

टीकाः–यस्याः-विलासवत्याः, मनसि–चित्तेऽन्यद्वस्तु चिन्त्यमानमस्ति, वचसि–वचनेऽन्यद्वस्तु कथ्यमानस्ति, क्रियायां–कायस्य प्रवृत्तौ क्रियमाणमन्यद् वस्त्वस्ति, 'तामपि'–भिन्नभिन्नमनोवाक्कायवतीमपि (अभिन्नमनोवाक्कायवत्याः सत्यास्तु का वार्त्तेत्यपि शब्दार्थः) 'लोलाक्षीं' यत्र तत्र सर्वत्र

॥१४३॥

लज्जां विहाय नेत्रगोलकान् भ्रामयन्तीं चपलाक्षीं, 'साध्वीं वेत्ति ममत्ववान्'=सतीत्वेन रूपेण जानाति ममताभूताविष्टः ॥१५।

– ममत्वाऽन्धो दुर्वृत्तामपि स्त्रीं मुग्धामेव मन्यते –

'या रोपयत्यकार्येऽपि रागिणं प्राणसंशये ।
दुर्वृत्तां स्त्रीं ममत्वाऽन्ध-स्तां मुग्धामेव मन्यते ॥१६॥

टीकाः-अरेरे ममत्वान्धस्य महामूर्खतां तु पश्य २, या स्त्री रागिणं पुरुषं प्राणसंशयवत्यकार्येऽपि रे.पयति=अकार्यरूपगर्तायां यथा क्षिपति यत्र प्राणा उड्डयेरन्, तां दुर्वृत्तां-दुराचारिणीं स्त्रीं ममत्वान्धो, मुग्धामेव-सरलां भीरुमेव मन्यते ॥१६॥

– स्त्रीषु प्रियत्वं यत्तन्मोहनटनर्तितम् –

'चर्माच्छादितमांसाऽस्थि-विण्मूत्रपिठरीष्वपि ।
वनितासु प्रियत्वं यत्, तन्ममत्वविजृम्भितम् ॥१७॥

टीकाः—चर्मणाऽऽच्छादितमांसाऽस्थिविष्ठामूत्रस्थालीभूतासु वनितासु यत् प्रियत्वं—प्रेमास्पदत्वं 'तन्ममत्वविजृम्भितं'=तन्मोहराजलीलाविलासरूपमिति ॥१७॥

— अपत्यममतायां विपरीतं कथन विज्ञानं च —

'लालयन् बालकं तातेत्येवं ब्रूते ममत्ववान् ।
वेत्ति च श्लेष्मणा पूर्णा-मङ्गुलीममृताऽञ्चिताम् ॥१८॥

टीकाः—जीव ! पश्य २ कीदृशीयमद्भुतता, यन्ममत्ववान् जीवः, बालकं-स्तनन्धयं' स्नेहेन लालयन्-रमयन् २ बालं प्रति हे तात ! इत्येवं-विपरीतं-पुत्रं पितृत्वेन ब्रूते—कथयति च-किञ्च श्लेष्मणा-कफेन पूर्णां-भरितामङ्गुलीममृताऽञ्चितां-सुधासिक्तां वेत्ति-जानातीति ॥१८॥

— कीदृशी ममताया लीलानृत्यकला —

'पङ्कार्द्रमपि निःशङ्कः, तमङ्कान्न श्वति ।
तदमेध्येऽपि मेध्यत्वं, जानात्यम्बा ममत्वतः ॥१९॥

टीकाः-अम्बा—माता, ममताभावतो निःशङ्कतया 'पङ्कार्द्रमपि'=कर्दमखरण्टितमपि सुतं—पुत्रं, अङ्कादुत्सङ्गान्न मुञ्चति, तत्—तस्मात्कारणात्, 'अमेध्येऽपि'—तस्य पुत्रस्य विष्ठायामपि मेध्यत्वं—पवित्रत्वं जानाति, का ममतालीला ! इति ॥१९॥

—ममत्वतोऽनियतसम्बन्धो नियतत्वेन भासते-

'मातापित्रादिसम्बन्धोऽनियतोऽपि ममत्वतः ।

दृढभूमीभ्रमवतां नैयत्येनावभासते ॥२०॥

टीकाः—ममत्वदोषेण यो मातापित्रादिसम्बन्धः सर्वथाऽनियतोऽस्ति सोऽपि नियतत्वेन—सर्वथा स्थायित्वेनाऽवभासते तत्र कारणं तु 'दृढभूमीभ्रमवतां'=अनियतवस्तुनि नियतताया विपरीतता-रूपो भ्रमो दीर्घकालपर्यन्तं नैरन्तर्येणाऽत्यन्तप्रेम्णा सेवितोऽत एव दृढा भूमिर्यस्य भ्रमस्य स दृढभूमीभ्रमस्तद्वतां दृढभूमीभ्रमवत्त्वेन नैयत्येन—नियतत्वेनाऽवभासते—पश्यति जानाति च ॥२०॥

—सत्यस्य द्रष्टुः स्वरूपम्—

'भिन्नाः प्रत्येकमात्मानो, विभिन्नाः पुद्गला अपि ।
शून्यः संसर्ग इत्येवं, यः पश्यति स पश्यति ॥२१॥

टीकाः—'भिन्नाः प्रत्येकमात्मानो'=सर्वे जीवा व्यक्तिमपेक्ष्य भिन्नाः, 'विभिन्नाः पुद्गला अपि'= परमाणुस्कन्धादिका पुद्गला अपि सर्वे भिन्नभिन्नव्यक्तिकाः, केन जीवादिना सह कस्यचित् पुद्गलादिकस्य कोऽपि तादात्म्यलक्षणः सम्बन्धो नात एव शून्यःसंसर्ग इत्येवं यः पश्यति स पश्यति-सत्यदर्शनवानस्ति नान्य इति ॥२१॥

—स्वपरभेदज्ञानादहंताममतयोः पलायनम्—

'अहन्ताममते स्वत्वस्वीयत्व भ्रमहेतुके ।

भेदज्ञानात् पलायेते, रज्जुज्ञानादिवाऽहिभीः ॥२२॥

टीकाः–स्वत्वाभाववति स्वत्वविषयकभ्रमजन्या, 'अहंता'=अहं शरीरी–मनुष्यो–देवः–श्रीमान्–राजा–देवेन्द्र इत्याकारिका, स्वीयत्वाभाववति स्वीयत्वविषयकभ्रमजन्या–'ममता'=ममेदं शरीरं–धनं च राज्यं समग्रसुखसाधनादिकमित्याकारिका, ते अहंताममते स्वत्वादिभ्रमात्मकबुद्धिजन्ये 'भेदज्ञानात्'=नाहं न ममेति भेदज्ञानात्, पलायेते=प्रणश्यतः यथाऽहिभीः–सर्पभयं रज्जुज्ञानात् पलायते, तथाऽत्रापि 'अहं ममेति मन्त्रोऽयं, मोहस्य जगदान्ध्यकृत्'। अयमेव हि नञ्पूर्वः, प्रतिमन्त्रोऽपि मोहजित् ॥ इत्यपि गेयमत्र ॥२२॥

– अथ तत्त्वजिज्ञासया ममताया अस्थितिः –

'किमेतदिति जिज्ञासा, तत्त्वाऽन्तर्ज्ञानसम्मुखी ।
व्यासङ्गमेव नोत्थातुं, दत्ते क्व ममतास्थितिः ॥२३॥

टीकाः–'किमेतदिति जिज्ञासा'=एतज्जगद्वा वस्तु किं स्वरूपं ? इति तत्त्वविषयकान्तर्ज्ञानसम्मुखकारिणी, अथवा तत्त्वनिर्णयरूपसम्यग्दर्शनज्ञानसम्मुखकारिणी जिज्ञासा, 'व्यासङ्गमेव नोत्थातुं दत्ते' आसक्तिमुत्थितां न कुरुते–अनुत्थानहतदशापन्नरागभावं करोति, ततः 'क्व ममतास्थितिः'=रागभावाभाव कारकजिज्ञासाप्रतिपन्ने पुरुषे कुतः ममतास्थितिरर्थान्न ममता तिष्ठत्येवेति ॥२३॥ ॥१४७॥

--तत्त्वजिज्ञासोस्तत्त्वप्राप्तिं विना न क्वचिद्रतिः--

'प्रियार्थिनः प्रियाप्राप्तिं, विना क्वापि यथा रतिः ।
न तथा तत्त्वजिज्ञासो स्तत्त्वप्राप्तिं विना क्वचित् ॥२४॥

टीका:=प्रियायाः कान्ताया अर्थिनः—स्पृहयालोः प्रियायाः प्राप्तिं विना यथा क्वाऽपि—क्वचिदपि स्थाने वस्तुनि वा न रती रागो भवति, तथा तत्त्वस्य जिज्ञासोः—तत्त्वज्ञानविषयकप्रबलेच्छोः तत्त्वस्य प्राप्तिं विना क्वचिन्न रतिर्भवतीति ॥२४॥

--तत्त्वजिज्ञासाप्रतिबन्धिका ममत्वबुद्धिः--

'अत एव हि जिज्ञासां विष्टम्भति ममत्वधीः ।
विचित्राऽभिनयाऽऽक्रान्तः, सम्भ्रान्त इव लक्ष्यते ॥२५॥

टीका:—'जिज्ञासां हि ममत्वधीर्विष्टम्भति'=तत्त्वजिज्ञासां निश्चयतो ममत्वबुद्धिः प्रतिबध्नाति, अत एव ममत्वान्धो जीवः मातापितृपत्न्यादिसम्बन्धिवर्गं प्रति 'विचित्राऽभिनयाऽऽक्रान्तः=विविधजातीय-विकारैश्चेष्टाभिः सहितः 'सम्भ्रान्त इव लक्ष्यते'=सम्भ्रमवानुन्मत्त इव ज्ञायते इति ॥२५॥

तत्त्वजिज्ञासासमताद्वयरहितस्य ममतासहितस्य जन्म निरर्थकम्--

'धृतो योगो न ममता, हता न समताऽऽहृता ।
न च जिज्ञासितं तत्त्वं गतं जन्म निरर्थकम् ॥२६॥

टीका:-येन बाह्यसंसारत्यागरूपो योगो धृतः, पत्न्यादिसम्बन्धविषयिणी 'ममता न हता'-मनः प्रदेशात् पृथक्कृता न, 'समता च नाहृता'=समतां प्रति न सद्भावः स्वीकृतः, 'तत्त्वं न जिज्ञासितं'= स्वस्वभानो न ज्ञानेच्छाविषयीकृततः 'तस्य जन्म निरर्थकं गतम्' तस्य पुरुषस्य जीवनं निष्फलं गतं, योग धरस्य सर्वथा ममतामारणसमताधारण--तत्त्वजिज्ञासापूर्णस्य पुरुषपुङ्गवस्यैव जन्म सर्वथा सफलमेव नाऽन्यथेति भावः ॥२६॥

—जिज्ञासाविवेकाभ्यां ममतैव विनाश्या—

'जिज्ञासा च विवेकश्च, ममतानाशकावुभौ ।
अतस्ताभ्यां निगृह्णीया-देनामध्यात्मवैरिणीम् ॥२७॥

टीका:--'जिज्ञासा च विवेकश्च'=तत्त्वजिज्ञासा च देहात्मभेदज्ञानरूपविवेकश्च, 'उभौ'=जिज्ञासाविवेकौ द्वौ, 'ममतानाशकौ'=ममताया विनाशकौ कथितौ स्तः, 'अतस्ताभ्यां'=जिज्ञासाविवेकाभ्यां, 'अध्यात्मवैरिणीमेनां=अध्यात्मभावस्य प्रतिपक्षभूतामेनां—ममतां निगृह्णीयात्—निग्रहं नयेत् ॥२७॥ इत्या-

चार्यश्रीमद्-विजयलब्धिसूरीश्वरपट्टधराचार्य-श्रीमद्-विजय-भुवनतिलकसूरीश्वर-पट्टधरभद्रङ्करसूरिणा कृताया-मध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां ममत्वत्यागनामकोऽष्टमोऽधिकारः समाप्तः । २३५॥

## अथ समतानामको नवमोऽधिकारः

**– प्रतिबन्धकाभावे समतायाः स्वतः प्रादुर्भावः –**

'त्यक्तायां ममतायां च, समता प्रथते स्वतः ।
स्फटिके गलितोपाधौ, यथा निर्मलतागुणः ॥१॥

टीकाः–ममतायां च त्यक्तायां=ममतायास्त्यागे सत्येव 'स्वतः समता प्रथते=स्वयमेव समता विलसति वर्धते च, 'गलितोपाधौ स्फटिके=रक्तवर्णकजपानामकपुष्परूपोपाधौ गलिते-विनष्टे यथा स्फटिके निर्मलतागुणः स्वतो विकसति तथाऽत्रापि विज्ञेयम् , समतां प्रति ममतारूप उपाधिः प्रतिबन्धकः, ममताया अभावे समतोदेति नान्यथेति ॥१॥

**— बाह्यपदार्थनिष्ठप्रियाऽप्रियत्वकल्पनानिरासः समता —**

'प्रियाऽप्रियत्वयो र्याऽर्थै-र्व्यवहारस्य कल्पना ।
निश्चयात्तद्व्युदासेन, स्तैमित्यं समतोच्यते ॥२॥

टीकाः—अर्थैः-पदार्थैः सह प्रियाऽप्रियत्वयोः=इष्टानिष्टत्वयोर्व्यवहारस्य या कल्पना=सङ्कल्पअन्यारोपणा, 'निश्चयात्तद्व्युदासेन'=निश्चयनयदृष्टया पूर्वकथितकल्पनाया निरासेन 'स्तैमित्यं समतोच्यते'=चित्तचञ्चलताया अभावरूपं स्थैर्यं समता कथ्यते ॥२॥

**निश्चयत इष्टानिष्टत्वकल्पना, कल्पनामात्रफलैव**

'तेष्वेव द्विषतः पुंसस्तेष्वेवार्थेषु रज्यतः ।
निश्चयात्किञ्चिदिष्टं वाऽनिष्टं वा नैव विद्यते ॥३॥

टीकाः—एकपुरुषापेक्षया 'येष्वेवाऽर्थेषु द्विषतः पुंसस्तेष्वेवार्थेषु रज्यतः'=यत्पदार्थनिष्ठो द्वेषस्तत्पदार्थनिष्ठो रागः, यद्रागद्वेषकल्पना पुरुषस्य भवति, यतो 'निश्चयतः' निश्चयनयतः, वस्तुतः, किञ्चिद्वस्तु, इष्टं वाऽनिष्टंवा नैव विद्यते'=कस्यचित्पुरुषस्य किञ्चिदिष्टं सदाऽथवा किञ्चिदनिष्टं नियतं नास्त्येव कालादिभेदेनेष्टमनिष्टं वाऽनिष्टमिष्टं भवतीति ॥३॥

**एकस्मिन् विषये भवतो रागद्वेषयोः कारणम्**

'एकस्य विषयो यः स्या-त्स्वाभिप्रायेण पुष्टिकृत् ।
अन्यस्य द्वेष्यतामेति स एव मतिभेदतः ॥४॥

विकल्पकल्पितं तस्माद् द्वयमेतन्न तात्त्विकम् ।
विकल्पोपरमे तस्य द्वित्वादिवदुपक्षयः ॥५॥

टीकाः—एकस्य पुरुषस्य यो विषयः 'स्वाऽभिप्रायेण पुष्टिकृत्'=चित्तस्याऽभिप्रायेण रागस्य विषयो भवति, स एव विषयोऽन्यस्य पुरुषस्य मतिभेदतो--मनसो भेदतो 'द्वेष्यतामेति'=द्वेषस्य विषयो भवति इदमत्र हृदयम्=मनोनिष्ठा पदार्थान् प्रति या रागद्वेषविषयिणी प्रक्रिया भवति सा मनसः स्वविकल्पानवलम्ब्यैव, यदा रागादिजनकस्य विकल्पस्य नाशो भवति तदा तस्य रागादेरपि नाशो भवति; उदाहरणमत्र-सम्मुखं पुस्तकद्वयं पतितमस्ति तदा बुद्ध्या (नैयायिकमते पुस्तकद्वये द्वित्वनामको गुण उत्पद्यते यदा तत्र पुस्तकद्वयत्वेन रूपेण दर्शना--पेक्षा नश्यति तदा तत्र पुस्तकद्वये जातं द्वित्वमपि नश्यति, विकल्पसत्तायां रागादेः सत्ता, विकल्पनाशे रागादेर्नाशो भवति, रागद्वेषयोर्मध्यादेकोऽपि न तात्त्विकः—शाश्वतः, रागश्च द्वेषश्च न तात्त्विकावपितु विकल्पजातौ स्त इति ॥४५॥

– सङ्कल्पसमुत्थाननाशस्योपायः –

'स्वप्रयोजनसंसिद्धिः, स्वायत्ता भासते यदा ।
बहिरर्थेषु सङ्कल्प-समुत्थानं तदा हतम् ॥६॥

टीकाः—यावत् 'स्वकार्यसंसिद्धि र्बाह्यपदार्थाऽवलम्बने' ति बुद्धिः प्रवर्त्तते तावदात्मा बाह्यपदार्थेषु धावति, तदा 'स्वप्रयोजनसंसिद्धिः स्वाऽऽयत्तेति भासते तदा 'बहिरर्थेषु सङ्कल्पसमुत्थानं हतम्'=बाह्यपदार्थानवलम्ब्योत्थीयमानसङ्कल्पा हता एव यतः स्वकार्यसिद्धिः स्वाधीनैव न परपदार्थसापेक्षेति ॥६॥

भ्रमस्य भङ्गे रागद्वेषाभावप्रयुक्ता समताऽप्रतिहता भवति—

'लब्धे स्वभावे कण्ठस्थ-स्वर्णन्यायाद्भ्रमक्षये ।
रागद्वेषाऽनुपस्थानात्, समता स्यादनाहता ॥७॥

टीका—'कण्ठस्थस्वर्णन्यायात्'=सौवर्णं भूषणं कण्ठस्थं सदपि यदा यस्यास्तित्वविषये भ्रम उत्पद्यते तदा स जीवोऽरतिमान् भवति यदा 'तद्भूषणं तु कण्ठ एव तिष्ठद्वर्त्तते' तादृशे भावे जायमाने भ्रमे निरस्ते पुनः स्वास्थ्यमायातं भवति, वस्तुतस्तु भूषणं न गतमेव परन्तु नष्टस्य भ्रमक्षये जाताऽरतिर्नश्यति, स्वस्थता स्थिरा भवति, एवं रीत्या बहिरर्थेषु, इष्टानिष्टभ्रान्तिर्यदा क्षीणा भवेत्तदनन्तरं रागद्वेषविकाराः शाम्यन्ति तत्राप्रतिहता समता प्रादुर्भवति ॥७॥

—कर्मनिर्मितद्वैविध्य (वैविध्य) भानाभावे साम्यमनाहतम्

'जगज्जीवेषु नो भाति, द्वैविध्यं कर्मनिर्मितम् ।
यदा शुद्धनयस्थित्या तदा साम्यमनाहतम् ॥८॥

टीकाः--सामान्यतः संसारिजीवेषु, जीवस्य स्वकर्मणा निर्मितमुच्चत्वनीचत्वरूपं शिष्टत्वदुष्टत्वरूपमित्यादिनानारूपं द्वैविध्यं (द्वैतभावो) भासते परन्तु यदा 'शुद्धनयस्थित्या'=निश्चयनयदृष्ट्या सर्वे जीवाः शुद्धात्मस्वरूपमया दृश्यन्ते तदेतद्द्वैविध्यं न भाति तदा च तस्य जीवस्य साम्यमनाहत--मप्रतिहतं भवति ॥८॥

-कूटस्थनित्यात्मद्रव्यगुणादिध्यानतःसाम्यमनुत्तरम्--

'स्वगुणेभ्योऽपि कौटस्थ्यादेकत्वाऽध्यवसायतः ।
आत्मारामं मनो यस्य, तस्य साम्यमनुत्तरम् ॥९॥

टीकाः--एक आत्मा नित्योऽस्ति, अन्यजीवेभ्यश्च सदा भिन्न एव तथाऽपि स्वज्ञानादिगुणेभ्योऽपि कूटस्थनित्यत्वात्, स्वगुणापेक्षयाऽपि कूटस्थनित्यत्वात्, स्वगुणापेक्षयाऽपि सर्वथा शुद्ध आत्माऽस्ति, एकमेवाऽऽत्मद्रव्यं कूटस्थनित्यमस्ति (अप्रच्युताऽनुत्पन्नस्थिरैकस्वभावःकूटस्थः) एकत्वाध्यवसायतः=गुणगुणिनोरभेदनिश्चयतः, 'आत्मारामं मनो यस्य'=यस्य--योगिनः कूटस्थस्वगुणाऽभिन्नाऽऽत्मनि रममाणं मनोऽस्ति तस्य योगिनः साम्यमनुत्तरं -परमोत्तमं भवति ॥९॥

--परिपक्वायां समतायां वासोचन्दनतुल्यता--

'समतापरिपाके स्याद् विषयग्रह-शून्यता ।

यथा विशदयोगानां, वासीचन्दनतुल्यता ॥१०॥

टीकाः--'समतापरिपाके स्याद् विषयग्रहशून्यता'=समत्वनामको भावो यदा परिपाकदशामापन्नः स्यात्तदा विषयनिष्ठेष्टानिष्टताविषयककल्पनाज्ञानस्याऽऽत्यन्तिकाभावःस्यात्, 'यया विशदयोगानां वासी--चन्दन--तुल्यता'=विषयग्रहशून्यताविशिष्टसमतया निर्मलतरयोगगरिष्ठानां महात्मनां वास्या=येन शस्त्रविशेषेण चर्मच्छिद्यते, अथवा चन्दनेन लिप्यते, वास्यां वा चन्दने तुल्यताऽर्थात्, निन्दकस्तावकपुरुषयोस्तुल्यमनोवृत्तिरूपसमतासिद्धिः ॥१०॥

–नित्यवैरिवैरशामक- समतां साधोः स्तुमः–

'किं स्तुमः समतां साधो-र्या स्वार्थ-प्रगुणीकृता ।
वैराणि नित्यवैराणामपि हन्त्युपतस्थुषाम् ॥११॥

टीकाः--'साधोः समतां किं स्तुमः ? कया रीत्या मुनेः समभावं वयं स्तुमः ? 'या स्वार्थप्रगुणीकृता'=स्वात्महितायैवाधिकाधिक्येन पुष्टकरणेन प्रवृद्धा समता, साधोःपार्श्वे उपतस्थुषां--उपस्थितिं कुर्वतां, 'नित्य-वैराणां'=अहिनकुलादि--नित्यवैरवतामपि (नित्यवैररहितानां का कथेत्यपि शब्दार्थः) प्राणिनां वैराणि-पारस्परिक--वैमनस्यानि हन्ति-दूरीकरोति, स्वस्य कृते क्रियमाणा साधना परेषां वैरविनाशाय कल्पते ॥११॥

–एकैव समता सेव्या किमन्यैः–

'किं दानेन तपोभिर्वा, यमैश्च नियमैश्च किम् ।
एकैव समता सेव्या, तरी संसारवारिधौ ॥१२॥

टीकाः–संसाररूपवारिधितरणे तरी-नौकारूपा, एकैव समता सेव्या–सेवनीया, समतारहितेन किं दानेनार्थात् दानफलाभावः, समतारहितैः किं तपोभिरर्थात् तपः फलाभावः, समतारहितै यमैर्नियमैश्च किमर्थाद् यमनियमयोः फलाभावः ॥१२॥

– समतायाः सुखं स्पष्ट दृष्टं –

दूरे स्वर्गसुखं मुक्ति–पदवी सा दवीयसी ।
मनः सन्निहितं दृष्टं, स्पष्टं तु समतासुखम् ॥१३॥

टीकाः–स्वर्गस्य सुखमानन्दो दूरे समस्ति, सा मुक्तिपदवी-मोक्षस्थानं दवीयसी-अत्यन्तदूरे वर्त्तते, परन्तु मनः सन्निहितं -मनसि स्थितं समतासुखं तु स्पष्टं दृष्टं–सर्वथा प्रत्यक्षम् ॥१३॥

समताऽमृतमज्जनेन कामक्रोधमदादिदोषध्वंसः।

दृशोः स्मरविषं शुष्येत्, क्रोधतापः क्षयं व्रजेत् ।

औद्धत्यमलनाशःस्यात्, समताऽमृतमज्जनात् ॥१४॥

टीका:-समतानामकामृतस्नानेन नयनयुगलनिष्ठं कामरूपं विषं शुष्कं वा शुद्धं भवेत्, क्रोध-नामकस्तापः क्षयं व्रजेत्-प्राप्नुयात्, औद्धत्य-उन्मादरूपमलस्य नाशः स्यात् ॥१४॥

**एका समतैव सुखाय जायते**

'जरामरणदावाऽग्नि-ज्वलिते भवकानने ।
सुखाय समतैकैव, पीयूषघनवृष्टिवत् ॥१५॥

टीका:-जरामरणरूपदावानलेन ज्वलिते-दग्धे, भवरूपे कानने-वने 'पीयूषधनवृष्टिवत्'=सुधाया महामेघस्य वेगवद्वृष्टिसमाना, एका समतैव सुखाय भवत्येव ॥१५॥

**—एकसमताऽऽलम्बना मोक्षप्राप्तिः—**

'आश्रित्य समतामेकां निवृता भरतादयः ।
नहि कष्टमनुष्ठान-मभूत्तेषां तु किञ्चन ॥१६॥

टीका:-'आश्रित्य समतामेकां=रागद्वेषपरिणत्यभावरूपामेकां समतामालम्ब्य 'निवृता भरतादयः' भरत आदिर्येषां ते भरतरूपप्रथमचक्रवर्त्यादयः, निर्वृतिं प्राप्ताः 'तेषां तु नहि किञ्चन कष्टमनुष्ठानमभूत्'= तेषां भरतादीनां तु किञ्चिदपि बाह्यतप आदिरूपं कष्टकार्यनुष्ठानं जातं नहि ॥१६॥

—किंफला समता ?—

'अर्गला नरकद्वारे, मोक्षमार्गस्य दीपिका ।
समता गुणरत्नानां, सङ्ग्रहे रोहणावनिः ॥१७॥

टीकाः--समता कीदृशी ? 'नरकद्वारेऽर्गला'=नरक-द्वारप्रतिबन्ध--की-भूतप्रतिघस्वरूपा समता, 'मोक्षमार्गस्य दीपिका'=मोक्षमार्गप्रकाशकदीपिका समता, ज्ञानादिगुणरत्नानां सङ्ग्रहणे रोहणपर्व-तस्यावनिभूता समता, अर्थात् नरकद्वारप्रतिबन्ध-मोक्षमार्ग-प्रकाश गुणरत्नसङ्ग्रहरूपफलानि समतयैव प्राप्यन्ते ॥१७॥

—दोषनाशकरी समता—

'मोहाच्छादितनेत्राणा-मात्मरूपमपश्यताम् ।
दिव्याञ्जनशलाकेव, समता दोषनाशकृत् ॥१८॥

टीका='मोहाच्छादितनेत्राणाम्'=मोहेनाच्छादिते नेत्रे विवेकदृष्टिरूपे भावनेत्रे येषां तेषामत एवात्म-रूपमपश्यतां'=स्वाऽऽत्मस्वरूपसाक्षात्कारमकुर्वतां पुरुषाणां 'दिव्याञ्जनशलाकेव'=लोकोत्तराऽञ्जनशलाका-समाना समता मोहादिरूपदोषनाशकरी भवतीति ॥१८॥

—समतयाऽनिर्वचनीयसुखसम्प्राप्तिः—

'क्षणं चेतः समाकृष्य, समता यदि सेव्यते ।
स्यात्तदा सुखमन्यस्य, यद् वक्तुं नैव पार्यते ॥१९॥

टीकाः-क्षणं-क्षणपर्यन्तं रागद्वेषपरपदार्थादिविषयेभ्यश्चेतो-मनः, समाकृष्य-प्रत्याहृत्य 'यदि समता सेव्यते 'तदा सुखं स्यात्'=अनन्यादृशं चेतश्चमत्कारिमहानन्दोऽनुभूयेत, यत्सुखमन्यस्य जनस्य वक्तुं नैव पार्यते-पारं प्राप्यते ॥१९॥

—भोगिभूतसंसारिलोकः समतासुखं नैव वेत्ति—

'कुमारी न यथा वेत्ति, सुखं दयितभोगजम् ।
न जानाति तथा लोको योगिनां समता-सुखम् ॥२०॥

टीकाः=यथा कुमारिका 'दयितभोगजं सुखं' पतिभोगजन्यं सुखमनुभवाऽपेक्षया न जानाति, तथा तथा लोकः—भोगिसंसारी लोकः, योगिनां--अध्यात्मयोगिनां महायोगरूपं--समताजन्यं सुखमनुभवतो न जानात्येवेति ॥२०॥

--समता, वर्मणा सह तोल्यते-

'नतिस्तुत्यादिकाऽऽशंसा—शरस्तीव्रः स्वमर्मभित् ।

समतावर्मगुप्तानां, नाऽऽर्तिकृत्सोऽपि जायते ॥२१॥

टीकाः—'तीव्रः स्वमर्मभित्, नतिस्तुत्यादिकाऽऽशंसाशरः'=तीक्ष्णः,-स्वात्ममर्मभेदकः, जनगण-विहितनमन स्तवनादिविषयकलालसारूपो बाणः, 'समतावर्मगुप्तानां' समता-नामकवर्मणा रक्षितानां महात्मनां 'सोऽपि नाऽऽर्तिकृज्जायते'=पूर्वकथितबाणोऽपि पीडाकारी न जायते ॥२१॥

समता, जन्मान्तरप्रचितानि कर्माणि क्षिणोति

'प्रचितान्यपि कर्म्माणि, जन्मनां कोटिकोटिभिः ।
तमांसीव प्रभा भानोः, क्षिणोति समता क्षणात् ॥२२॥

टीकाः—'जन्मनां कोटिकोटिभिः'=कोटिभिर्गुणिताः कोटयः कोटिकोटयः, ताभिः, कोटिकोटि-जन्मभिः, 'प्रचितान्यपि कर्माणि'=आत्मसाद् कृतानि—बद्धान्यपि कर्माणि यथा भानोः प्रभा तमांसि क्षणात् क्षिणोति-नाशयति, तथा समता भवभवांतरमध्ये बद्धानि कर्माणि क्षयं प्रापयति क्षणात् ॥२२॥

समतयैव भावजैनता सिध्यति

'अन्यलिङ्गादिसिद्धाना--माधारः समतैव हि ।
रत्नत्रयफलप्राप्तेर्यया स्याद् भावजैनता ॥२३॥

टीकाः--यया समतया दर्शनज्ञान चारित्ररूपरत्नत्रयस्य फलरूप सिद्धावस्थायाः प्राप्तिर्भवति, किञ्च-तत्प्राप्तिर्भाविनि भवनहेतुत्वेन या या, अन्यलिङ्गिषु भावजैनता सा समतैवाऽन्यलिङ्गगृहिलिङ्गादिसिद्धानामाधारो भवतीति ॥२३॥

### ज्ञानस्य फलं समतैव

'ज्ञानस्य फलमेषैव, नयस्थानाऽवतारिणः ।
चन्दनं वह्निनेव स्यात्, कुग्रहेण तु भस्म तत् ॥२४॥

टीकाः--'नयस्थानाऽवतारिणः'=सकलनयाभिप्रेतविषयेषु अवतरणशीलस्य 'ज्ञानस्य फलमेषैव'=विशिष्टज्ञानस्य फलं समतैव, अन्यथा--समताया अभावे सति, एकस्मिन्नपि नयविषये 'कुग्रहेण भस्म तत्' कदाग्रहेण सुन्दरमपि ज्ञानं भस्मसाद् भवति, यथा चन्दनं शैत्यमर्पयति परन्तु वह्निना सह सम्बन्धेन ज्वलितत्वाद् भस्म भवति तथाऽत्राऽपि ज्ञेयम्, अत्र ज्ञानं चन्दनस्थानीयं, कुग्रहश्च वह्निस्थानीयः ॥२४॥

### समतानामानः, चारित्रपुरुषप्राणाः

'चारित्रपुरुषप्राणाः, समताऽऽख्या गता यदि ।
जनाऽनुधावनावेशस्तदा तन्मरणोत्सवः ॥२५॥

॥१६१॥

टीकाः—यदि चारित्रनामकपुरुषस्य प्राणाः समतानामका गताः=अस्तं गता यावन्नष्टा स्तदा 'जनानुधावनावेशः'=जनानामनुधावनस्याडम्बरः, 'तन्मरणोत्सवः'=समताख्यप्राणै र्विहीनस्य तस्य मरणमहोत्सवो ज्ञेयः ॥२५॥

समतां विना कृतमकृतं कष्टरूपं वा भवति—

'सन्तज्य समतामेकां, स्याद्यत्कष्टमनुष्ठितम् ।
तदीप्सितकरं नैव, बीजमुप्तमिवोषरे ॥२६॥

टीकाः—एकां समतां सन्त्यज्य--विहाय यत्कष्टं--यत् कष्टकारिकर्माऽनुष्ठितं--कृतं स्यात् 'तदीप्सितकरं नैव'=तत्कार्यमिष्टसिद्धिकरं नैव, 'बीजमुप्तमिवोषरे'=उपरभूम्यां निक्षिप्तं यथा बीजं कष्टरूपमतएव नेष्टसिद्धिकरं तथाऽत्रापि बोध्यम् ॥२६॥

मुक्तेरुपाय एका समतैव

'उपायः समतैवैका, मुक्तेरन्यः क्रियाभरः ।
तत्तत्पुरुषभेदेन, तस्या एव प्रसिद्धये ॥२७॥

टीकाः—'उपायः समतैवैका, मुक्तेः'=मुक्ते र्मोक्षस्योपाय एका समतैव, मोक्षोपायभूतसमताया

अन्यः क्रियाभरः किमर्थमिति चेदुच्यते 'अन्यः कियाभरः तत्तत्पुरुषभेदेन तस्या एव प्रसिद्धये'=तस्य तस्य पुरुषस्य भेदेन-'भिन्नभिन्नव्यक्तिं प्रगृह्यान्यः कियासमूहः, समताया एव प्रकर्षेण सिद्धये वर्त्तते, समताजनकत्वेन क्रिया सत्क्रियेति सूच्यते ॥२७॥

**समतायाः स्वानुभव एव पारं प्रापयति**

**दिङ्मात्रदर्शने शास्त्रव्यापारः स्यान्न दूरगः ।**
**अस्याः स्वानुभवः पारं, सामर्थ्याख्योऽवगाहते ॥२८॥**

टीका:--'शास्त्रस्य व्यापारः दिङ्मात्रदर्शने स्यान्न दूरगः'=शास्त्रस्य प्रवर्त्तनरूपो व्यापारः, दिशामात्रदर्शने--सूचने स्यात्परन्तु दिङ्मात्रसूचनाद् दूरेऽग्रतो न गच्छति, अत एव 'अस्याः स्वानुभवः'=समतायाः स्वानुभवरूपसामर्थ्यनामकयोगः 'पारमवगाहते'=साध्यशास्त्रार्थपारावगाहको भवति ॥२८॥

**परात्परंनिगूढं तत्त्वमात्मनः समतैव**

**परात्परमेषा यन्निगूढं तत्त्वमात्मनः ।**
**तदध्यात्मप्रसादेन, कार्योऽस्यामेव निर्भरः ॥२९॥**

टीका:-'आत्मनो निगूढं तत्त्वं यत् परात्परमेषा=आत्मसम्बन्धि अत्यन्तं गुप्तं तत्त्वरूपं रहस्यं यत् परात्परमेषा समतैव, तत्समतारूपं तत्त्वं वा ततः 'अध्यात्म'प्रसादेन कार्योऽस्यामेव निर्भरः'=अध्या-

त्मबोधकृपया, ममतासिद्धावेव पूर्णः प्रयत्नः कर्त्तव्य इति ।।२९॥

इत्याचार्यश्रीमद् विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां समतानामको नवमोऽधिकारः समाप्तः ॥२५४॥

## सदनुष्ठाननामको दशमोऽधिकारः

— शुद्धानुष्ठानम् —

'परिशुद्धमनुष्ठानं जायते समताऽन्वयात् ।
कतकक्षोदसङ्क्रान्तेः, कलुषं सलिलं यथा ॥१॥

टीकाः—'अनुष्ठानं'=मलिनमपि धर्माऽनुष्ठानं 'समताऽन्वयात्'=समतानामकपरिणामस्य सततसम्बन्धात् , 'परिशुद्धं जायते' परितो निर्मलं भवति 'यथा कतकक्षोदसङ्क्रान्तेः कलुषं सलिलं परिशुद्धं' यथा मलयुतं जलं कतकीयचूर्णसङ्क्रमणतः परितोऽत्यन्तं वा शुद्धं जायते ।।१॥

— अनुष्ठानस्य भेदा :—

विषं गरोऽननुष्ठानं, तद्धेतुरमृतं परम् ।
गुरुसेवाद्यनुष्ठानमिति पञ्चविधं जगुः ॥२॥

टीकाः—गुरुसेवाऽऽदिस्वरूपमनुष्ठानमैहिकपारलौकिकसुखादिविषयकाशयभेदेन पञ्चविधं भवति तन्नामानीमानि यथा=विषनामकं गराख्यमननुष्ठानाभिधं तद्धेतुगोत्रकममृतसंज्ञकं पञ्चविधमनुष्ठानम् ॥२॥

### — विषनामकाऽनुष्ठानवर्णनम् —

'आहारोपधिपूजर्द्धि-प्रभृत्याशंसया कृतम् ।
शीघ्रं सच्चित्तहन्तृत्वाद्विषानुष्ठानमुच्यते ॥३॥

टीकाः—आहारविषयकाशंसया, उपकरणरूपोपधिविषयकाशंसया, पूजासत्कारविषयककामनया, समृद्धिसंपत्तिसत्तादिकविषयकैहिकफलाशंसया सह क्रियमाणगुरुसेवादिस्वरूपमनुष्ठानं, शीघ्रं-तत्कालं 'सच्चित्तहन्तृत्वात्'=सम्यग्भावरूपचित्तशुद्धिहननकर्तृत्वाद्विषानुष्ठानं कथ्यते ॥३॥

### – तदेव विषानुष्ठानं सदृष्टान्तं विभज्यते –

'स्थावरं जङ्गमं चापि, तत्क्षणं भक्षितं विषम् ।
यथा हन्ति तथेदं स–च्चित्तमैहिकभोगतः ॥४॥

यथा स्थावरं चापि जङ्गममुभयविधं विषं भक्षितं सत् तत्क्षणं द्रव्यप्राणान् हन्ति, तथेदं-विषानुष्ठानं पूर्वोक्तैहिकभोगेच्छया 'सच्चित्तं=भावशुद्धिरूपान् भावप्राणान् हन्ति ॥४॥

गरानुष्ठानस्वरूपवर्णनम्

'दिव्यभोगाऽभिलाषेण, कालान्तरपरिक्षयात् ।
स्वादृष्टफलसम्पूर्तेः, गरानुष्ठानमुच्यते ॥५॥

टीकाः—'दिव्यभोगाऽभिलाषेण'=पारलौकिकदेवसम्बन्धिभोगस्याऽभिलाषेण क्रियमाणं गुरुसेवादि-
 रूपमनुष्ठानं गरानुष्ठानं कथ्यते, 'स्वादृष्टफलसम्पूर्तेः'=पूर्वोक्ताऽनुष्ठानजन्यं स्वकृतादृष्ट-स्वनिर्मितपुण्य-
कर्म, तस्य भोगस्य सम्पूरणतः, 'कालान्तरपरिक्षयात्'=अन्यकाले-देवादिभवकाले चित्तशुद्धिरूपभावप्राण-
परिक्षयतो गरानुष्ठानमुच्यते ॥५॥

—पुनरपि गरानुष्ठानं सदृष्टान्तं दर्श्यते—

'यथा कुद्रव्यसंयोग-जनितं गरसंज्ञितम् ।
विषं कालान्तरे हन्ति, तथेदमपि तत्त्वतः ॥६॥

टीकाः=यथा काचानां शकलादिरूपकुत्सितद्रव्याणां संयोगमिश्रणतो जनितं गरसंज्ञितं विषं कथ्यते,
तादृशभक्षकस्य तादृशं विषं 'कालान्तरे'=द्विचतुर्द्वादशमासान्तरे हन्ति, तथा दिव्यभोगादिप्राप्ते निदान-
पूर्वकं कृतमनुष्ठानं वस्तुतः कालान्तरे चित्तशुद्धिं हन्ति ततस्तदनुष्ठानं गरानुष्ठानं कथ्यते ॥६॥ 

अनिदानत्वं प्रतिपादितमेव

'निषेधायाऽनयोरेव, विचित्राऽनर्थदायिनोः ।
सर्वत्रैवाऽनिदानत्वं, जिनेन्द्रैः प्रतिपादितम् ॥७॥

टीकाः-'विचित्रानर्थदायिनोः'=विविधजातीयानर्थसार्थदायकयोः 'अनयोरेव निषेधाय'=विपानुष्ठान-गरानुष्ठानयोरेव प्रतिषेधाय 'सर्वत्रैव जिनेन्द्रैरनिदानत्वं प्रतिपादितं'=सर्वेष्वनुष्ठानेष्वनिदानत्वम नाशंसत्वमेव जिनानामिन्द्रैः प्रतिपादितमस्ति ॥७॥

– अननुष्ठानस्वरूपम् –

'प्रणिधानाद्यभावेन, कर्माऽनध्यवसायिनः ।
संमूर्च्छिमप्रवृत्त्याभमननुष्ठानमुच्यते ॥८॥

टीकाः–'अनध्यवसायिनः' =अध्यवसायशून्यस्याऽऽत्मनः, 'प्रणिधानाद्यभावेन'=यै चित्तस्काग्रताऽऽदिभावस्याऽभावपूर्वकं 'सम्मूर्च्छिमजीवानां प्रवृत्तिसदृशं यत्कर्म तदननुष्ठानमुच्यते ॥८॥

– अननुष्ठानकर्मणि द्वे संज्ञे उपयुज्येते –

'ओघसंज्ञाऽत्र सामान्य–ज्ञानरूपा निबन्धनम् ।
लोकसंज्ञा च निर्दोष-सूत्रमार्गाऽनपेक्षिणी ॥९॥

॥१६७॥

टीकाः–अत्र=अस्यामननुष्ठानकप्रवृत्तौ संज्ञाद्वयं कारणं भवति, प्रथमौघसंज्ञा=सामान्यज्ञानरूपा, द्वितीया लोकसंज्ञा तु 'निर्दोषसूत्रमार्गानपेक्षिणी'=दोषरहितशास्त्रमार्गस्याऽपेक्षाशून्येत्यर्थः ॥९॥

– ओघसंज्ञायाः स्वरूपनिरूपणम् –

'न लोकं नाऽपि सूत्रं नो गुरुवाचमपेक्षते ।
अनध्यवसितं किञ्चित्, कुरुते चौघसंज्ञया ॥१०॥

टीकाः–'ओघसंज्ञयाऽनध्यवसितं किञ्चित्कुरुते'=चित्तस्य शून्यतया सहौघसंज्ञया जीवो यत्किञ्चित्करोति तत्र लोकं नाऽपेक्षते जीवः, नाऽपि सूत्रं चाऽपेक्षते, गुरोर्वाचमपि नाऽपेक्षतेऽर्थात्, लोकसूत्रगुरुवाक्यनिरपेक्षं सर्वथा चित्तशून्यतापूर्वकं यत् किञ्चिदावश्यकाद्यनुष्ठानमोघसंज्ञायाः प्रभावः ॥१०॥

– लोकसंज्ञास्वरूपवर्णनम् –

'शुद्धस्याऽन्वेषणे तीर्थोच्छेदः स्यादिति वादिनाम् ।
लोकाचारादरश्रद्धा लोकसंज्ञेति गीयते ॥११॥

टीकाः–केचित् कथयन्ति यत् 'शुद्धानुष्ठानमेव यदि दृश्यते तदाग्रहश्चैव रक्षिष्यते' तदा तीर्थोच्छेदः प्रसज्यते, यतः शुद्धानुष्ठानमशक्यप्रायं तस्माल्लोको यथारीत्याऽविधिवदशुद्धमनुष्ठानं कुर्वन्नास्ते तथैव-

रीत्या पुनः पुनः कर्त्तव्यमिति वादिनां लोकस्याविधिवत्स्वाचारेषु बहुमानपूर्विका श्रद्धा 'लोकसंज्ञे' ति गीयते, एतादृश्या लोकसंज्ञया क्रियमाणावश्यकादिकर्मानुष्ठानमननुष्ठानमुच्यते ॥११॥

-- अशुद्धकर्त्तव्यक्रियापक्षखण्डनम् --

'शिक्षितादिपदोपेत-मप्यावश्यकमुच्यते' ।
द्रव्यतो भावनिर्मुक्त-मशुद्धस्य तु का कथा ॥१२॥

टीकाः-'शिक्षितादिपदोपेतं भावनिर्मुक्तं द्रव्यत आवश्यकमुच्यते'=अस्खलितादिगुणसम्पन्नपदैः सहितं शुद्धमपि भावेन रहितं सद् द्रव्यावश्यकमुच्यते, 'अशुद्धस्य तु का कथा'=पाठोच्चारणादावप्यशुद्धस्यावश्यककर्मणस्तु का कथा ? अर्थादेतत्तु द्रव्यावश्यकमपि न कथ्यते ॥१२॥

शुद्धस्यैवाऽऽग्रहे तीर्थोच्छेदप्रसङ्ग इति पक्षखण्डनम्

'तीर्थोच्छेदभिया हन्ता-विशुद्धस्यैव चादरः ।
सूत्रक्रियाविलोपः स्याद् गतानुगतिकत्वतः ॥१३॥

टीकाः--'शुद्धक्रियाया एवाऽऽग्रहे केनाऽपि तादृशक्रियायाः कर्त्तुमशक्यत्वात्तीर्थोच्छेदः प्रसक्तो भविष्यतीत्येवमुक्त्वाऽशुद्धकर्मण्यादरः कार्य इति यत्कथितं' तदत्यन्ताऽसम्बद्धवचनं यतो रीत्याऽनया, अशुद्धौ

सूत्रोदितक्रियापाठो एक आत्मा कुरुते, तन्निरीक्ष्य श्रुत्वा च द्वितीयस्तथैव कुरुते, तथैव तृतीयादिः करोत्येवं गताऽनुगतिकत्वतोऽशुद्धक्रियापाठप्रवचनप्रवर्त्तनप्रसिद्धितः सूत्रकथितशुद्धक्रियापाठविलोपः स्यात्, वस्तुतस्तु अशुद्धादरे सूत्रविहितक्रियाविलोपद्वारा तीर्थोच्छेदसंभवः कथं न ? ॥१३॥

**बहुभिः कृतं यत्तत्कर्त्तव्यमिति मतस्य खण्डनम्**

'धर्मोद्यतेन कर्त्तव्यं कृतं बहुभिरेव चेत् ।
तदा मिथ्यादृशां धर्मो त्याज्यः स्यान्न कदाचन ॥१४॥

टीकाः--बहुभिर्लोकैः यया रीत्या कृतं तया रीत्यैव धर्मोद्यतेनात्मना कर्त्तव्यमिति न समीचीनम्, यत उक्तमतसमर्थने मिथ्यादृशां क्रियाकाण्डरूपो धर्मः सदा सेवनीयः स्यात्, कदाचनाऽपि त्याज्यो न स्याद् यतो बहुभिर्लोकैः सेवितोऽभिमतश्चेति ॥१४॥

**अननुष्ठानकर्मण उपसंहारः**

'तस्माद् गतानुगत्या च, यत् क्रियासूत्रवर्जितम् ।
ओघतो लोकतो वा तदननुष्ठानमेव हि ॥१५॥

टीकाः--'तस्माद्' पूर्वोक्तकथनतः, 'ओघतो लोकतो वा'=ओघसंज्ञया लोकसंज्ञया वा यत्कर्म,

॥१७०॥

'सूत्रवर्जितं'=सूत्रविधाननिरपेक्षं 'गताऽनुगत्या'=गतानुगतिकत्वतः क्रियते, हि–खलु, तदनुष्ठानमननुष्ठानमेव ज्ञेयमिति ॥१५॥

अननुष्ठानकर्मणः फलम्

'अकामनिर्जराऽङ्गत्वं, कायक्लेशादिहोदितम् ।
सकामनिर्जरा तु स्यात्, सोपयोगप्रवृत्तितः ॥१६॥

टीकाः–इह–अस्मिन्ननुष्ठानकर्मणि, 'कायक्लेशात्' कायस्य कष्टरूपत्वात्, सोपयोगप्रवृत्तेरभावात्, 'अकामनिर्जराऽङ्गत्वं'=अकामनिर्जरायाः साधनत्वमुदितं-कथितं अस्याऽननुष्ठानस्य फलम्-कामनिर्जरा कायक्लेशद्वारा भवति, सकामनिर्जरा तु मोक्षाशयपूर्विकाया उपयोगसहितायाः प्रवृत्तितो भवति नाऽन्यथेति ॥१६॥

तद्धेतुनामकसदनुष्ठानस्वरूपम्

'सदनुष्ठानरागेण तद्धेतुर्मार्गगामिनाम् ।
एतच्च चरमाऽऽवर्त्तेऽनाभोगादे र्विना भवेत् ॥१७॥

टीकाः–'मार्गगामिनां'=मार्गाऽनुसारिणां जीवानां 'सदनुष्ठानरागेण'=सदनुष्ठानं प्रति रागहेतुना जायमानं, 'अनाभोगादेर्विना'=अनाभोगसहसाकारितादोषैरहितं तद्धेतुनामकं सम्यगनुष्ठानं 'एतच्च'

इदमनुष्ठानं च 'चरमावर्त्ते भवेत्'=चरमावर्त्तकालप्रविष्टानां जीवानां भवेन्नाऽन्येषामचरमावर्त्तवर्तिनाम् ॥१७॥

**सत्क्रियारागः कदा ? असत् क्रियारागः कदा ?**

'धर्मयौवनकालोऽयं भवबालदशाऽपरा ।
अत्र स्यात् क्रियारागोऽन्यत्र चाऽसत्क्रियाऽऽदरः ॥१८॥

टीकाः—चरमावर्त्तकाले प्रवेशाऽनन्तरं सत्क्रियारागो जीवस्य जायते यतोऽयं=चरमावर्त्तकाल एव धर्मस्य यौवनकालः 'अन्यत्र'=चरमावर्त्तादन्यत्र-अचरमावर्त्तकाले, 'अपरा' द्वितीया भवस्य बालदशा भवति यतस्तत्राऽसत्क्रियां प्रत्येवाऽऽदरो भवतीति ॥१८॥

**धर्मयौवनकालप्रविष्टानां धर्मरागेणाऽसत्क्रिया लज्जायै**

'भोगरागाद् यथा यूनो, बालक्रीडाऽखिला ह्रिये ।
धर्मे यूनस्तथा धर्मरागेणाऽसत्क्रिया ह्रिये ॥१९॥

टीकाः-यथा यूनो भोगरागाद् बालक्रीडा ह्रिये'=युवाऽवस्थामम्पन्नस्य पुरुषस्य भोगरागे जाते सति, समस्ता बाल्यवयः कालीनधूलिक्रीडादिरूपबालक्रीडा लज्जायै भवति, तथा धर्मस्य यौवनकाले प्रविष्टस्यात्मनो धर्मरागे जाते प्राक्तन्योऽसत्क्रियाः सर्वा लज्जाकृतेऽतो हेया एव ॥१९॥

चरमावर्त्त एव तद्धेतुनामकं चतुर्थमनुष्ठानम्

'चतुर्थं चरमावर्त्ते तस्माद् धर्मानुरागतः ।
अनुष्ठानं विनिर्दिष्टं, बीजादिक्रमसङ्गतम् ॥२०॥

टीकाः—इदं हि-निश्चितं यत् सत्क्रियारागश्चरमावर्त्तकाल एव ततश्च सत्क्रियारूपसद्धर्मानुरागतो जायमानं चतुर्थं तद्धेतुनामकमनुष्ठानमपि चरमावर्त्तकालीनमेवेदमनुष्ठानं वक्ष्यमाणबीजादिक्रमसङ्गतं विनिर्दिष्टं वर्त्तते ॥२०॥

बीजरूपतद्धेतुनामकानुष्ठानस्वरूपम्

'बीजं चेह जनान् दृष्ट्वा, शुद्धानुष्ठानकारिणः ।
बहुमानप्रशंसाभ्यां, चिकीर्षा शुद्धगोचरा ॥२१॥

टीकाः—इह—अस्मिंस्तद्धेत्वनुष्ठाने बीजमित्थं वर्ण्यते, शुद्धिविशिष्टानुष्ठानकारकान जनान् दृष्ट्वा हृदयतो बहुमानेन वाचा प्रशंसया सह 'तादृशं शुद्धानुष्ठानं मयाऽपि विधेयम्' एतादृशी शुद्धविषया कर्त्तु-मिच्छारूपा चिकीर्षा बीजरूपं तद्धेत्वनुष्ठानम् ॥२१॥

अङ्कुररूपं स्कन्धरूपं च तद्धेत्वनुष्ठानम्

'तस्या एवानुबन्धश्चा-कलङ्कः कीर्त्यतेऽङ्कुरः ।
तद्धेत्वन्वेषणा चित्रा स्कन्धकल्पा च वर्णिता ॥२२॥

टीकाः-'तस्या एवाऽकलङ्कोऽनुबन्धः'=शुद्धगोचरायाश्चिकीर्षाया एव निर्मलसततपरम्परारूपोऽङ्कुरः तद्धेत्वनुष्ठानं कीर्त्यते-कथ्यते, वैरुपायैः शुद्धा क्रिया संभवेदिति विचार्य तेषां हेतूनां 'चित्राऽन्वेषणा = विविधा निरीक्षणपरीक्षणसमीक्षणरूपाऽन्वेषणा 'स्कन्धकल्पा च वर्णिता' = स्कन्धरूपं तद्धेत्वनुष्ठानमुच्यते ॥२२॥

पत्रादिरूपं पुष्परूपं च तद्धेत्वनुष्ठानम्

'प्रवृत्तिस्तेषु चित्रा च, पत्रादिसदृशी मता ।
पुष्पं च गुरुयोगादि-हेतुसम्पत्तिलक्षणम् ॥२३॥

टीकाः-शुद्धां क्रियां प्राप्तुं ये ये सद्गुरुयोगादय उपायास्तानुपायानुपलब्धुं चित्रा विविधा प्रवृत्तिः सा पत्रस्थानीयं तद्धेत्वनुष्ठानं कथ्यते 'गुरुयोगादिहेतुसम्पत्तिलक्षणं पुष्पं च' = सुगुरुयोगादिरूपसम्पत्तिप्राप्तिरूपं पुष्पस्थानीयं तद्धेत्वनुष्ठानं ज्ञेयम् ॥२३॥

फलरूपं तद्धेत्वनुष्ठानस्वरूपम्

'भावधर्मस्य सम्पत्ति, र्या च सद्देशनादिना ।
फलं तदत्र विज्ञेयं नियमान्मोक्षसाधकम् ॥२४॥

टीकः—सद्गुरुयोगे सति तन्मुखतः सद्धर्मदेशनायाः श्रवणतो मिथ्यात्वमोहनीयकर्मणः क्षयोपशमादिर्भवेत्तस्मात् सम्यक्त्वादिभावधर्मस्य या सम्पत्तिः-सम्प्राप्तिः, सा तद्धेत्वनुष्ठानस्य फलं विज्ञेयं यन्नियमात्-अवश्यमेव मोक्षसाधकम् ॥२४॥

अमृतानुष्ठानस्वरूपम्

'सहजो भावधर्मो हि, शुद्धश्चन्दनगन्धवत् ।
एतद्गर्भमनुष्ठानममृतं सम्प्रचक्षते ॥२५॥

टीका: = यथा चन्दनस्य गन्धः सहजो गुणः तथाऽऽत्मनः सम्यक्त्वादिरूपभावधर्मः-शुद्धः सहजो गुण उच्यते तादृशभावधर्मगर्भितं विशिष्टमनुष्ठानममृतानुष्ठानं कथ्यते, एवं तद्धेत्वनुष्ठानस्य फलममृतानुष्ठाने परिणमते ॥२५॥

अमृताऽनुष्ठानस्य प्रथमं लक्षणम्

'जैनीमाज्ञां पुरस्कृत्य, प्रवृत्तं चित्तशुद्धितः ।

सम्वेगगर्भमत्यन्त-ममृतं तद्विदो विदुः ॥२६॥

टीकाः-अमृतानुष्ठानविषयकज्ञानवन्तः कथयन्ति यज्जिनस्याज्ञां पुरस्कृत्य-अग्रतः कृत्वा, चित्तस्य शुद्धितः प्रवृत्तं प्रवृत्तिविषयीकृतं 'अत्यन्तं सम्वेगगर्भं' = उत्तरोत्तरवर्द्धमानमोक्षाऽभिलापेण विशिष्टं 'अमृतं' = अमृतनामकमनुष्ठानं तज्ज्ञाः कथयन्ति स्म ॥२६॥

अमृताऽनुष्ठानस्य द्वितीयं लक्षणम्

शास्त्रार्थाऽऽलोचनं सम्यक्, प्रणिधानं च कर्म्मणि ।
कालाद्यङ्गाऽविपर्यासोऽमृताऽनुष्ठानलक्षणम् ॥२७॥

टीकाः-शास्त्राऽर्थाऽऽलोचनं सम्यक् प्रणिधानं च कर्मणि' अमृतनामके कर्मणि सूत्रविषयकस्याऽर्थस्याऽनुप्रेक्षणरूपमालोचनम्, चित्तस्यैकाग्रता, अप्रमत्तता वा प्रणिधानं, कालविनयादिरूपाणामङ्गानां साधनानामविपर्यासः = अन्यथाऽऽचरणाऽभावः, अमृताऽनुष्ठानस्य लक्षणम् ॥२७॥

सदनुष्ठानमसदनुष्ठानं च विभजते

'द्वयं हि सदनुष्ठानं त्रयमत्राऽसदेव च ।
तत्राऽपि चरमं श्रेष्ठं, मोहोग्रविषनाशनात् ॥२८॥

टीका:-अत्र-अनुष्ठानपञ्चकमध्ये 'द्वयं हि'-तद्धेतुनामकाऽमृतनामकानुष्ठानद्वयं 'सद्' सत्फलकारकत्वेन सदेव, 'त्रयमसदेव' = विषनामकगरनामकाननुष्ठाननामकाऽनुष्ठानानि त्रीणि, 'असदेव' असत्फलजनकत्वेनाशुभान्येव, 'तत्रापि चरमं श्रेष्ठं' = सदनुष्ठानद्वयमध्येऽपि चरमं-अमृतानुष्ठानं सर्वोत्तममेव यतः 'मोहोग्रविषनाशनात्' = मोहनीयकर्मणो मिथ्यात्वादिरूपमूलसंस्कारविषरूपस्योग्रविषस्य नाशनादमृतं श्रेष्ठं वर्तते, अत्र मिथ्यात्वादिरूपमोहोग्रविषं नाश्यम् , अमृताऽनुष्ठानं नाशकं ज्ञेयमिति ॥२८॥

### सदनुष्ठानस्य लक्षणानि

'आदरः करणे प्रीति-रविघ्नः सम्पदागमः ।
जिज्ञासा तज्ज्ञसेवा च, सदनुष्ठानलक्षणम् ॥२९॥

टीका:-'आदरः' = मुमुक्षोर्मोक्ष एवेष्टं वस्तु, एतदिष्टाप्तये क्रियायां प्रयत्नाऽतिशयरूप आदरः (२) 'करणे प्रीतिः' = सम्यक् क्रियायाः करणे मानसं प्रेम (३) 'अविघ्नः' = पुण्यानुबन्धिपुण्यसामर्थ्यत एतत्क्रियाकरणे न कश्चिद्विघ्नागमः (४) 'सम्पदागमः=शुभभावजन्यपुण्यतोऽलोलताऽनिष्ठुरत्वादिगुणरूपयोगसम्पदामागमः, (५) 'जिज्ञासा' = मोक्षात्मकस्येष्टस्य स्वरूपं ज्ञातुमिच्छा (५) तज्ज्ञसेवा' ॥ मोक्षात्मकस्य परमतत्त्वस्य ज्ञातॄणां भगवतां सेवादिकं कृत्वा कृपा विशिष्टा लभ्या, इत्येवं सदनुष्ठानलक्षणानि बोध्यानि ॥२९॥

'एतत् सदनुष्ठानं योगस्वरूपम्—

'भेदैर्भिन्नं भवेदिच्छा-प्रवृत्तिस्थिरसिद्धिभिः ।
चतुर्विधमिदं मोक्ष-योजनाद्योगसंज्ञितम् ॥३०॥

टीका:—'इद इच्छाप्रवृत्तिस्थिरसिद्धिभिर्भेदैर्भिन्नं चतुर्विध'=इदं सदनुष्ठानं, इच्छाभेदेन, प्रवृत्तिभेदेन, स्थिरभेदेन, सिद्धिभेदेन, चतुर्भिः प्रकारैः युक्तम्, मोक्षेण सह योजनाद् योगसंज्ञायुतं ज्ञेयम्, अर्थादिच्छा योगसदनुष्ठानं, प्रवृत्तियोगसदनुष्ठानं, स्थिरयोगसदनुष्ठानं सिद्धियोगसदनुष्ठानमेवं चतुर्विधमिदं सदनुष्ठानम्, ॥३०॥

—इच्छाप्रवृत्तिरूपयोगद्वयस्य निरूपणम्—

'इच्छा तद्वत्कथाप्रीति-युक्ताऽविपरिणामिनी ।
प्रवृत्तिः पालनं सम्यक् सर्वत्रोपशमाऽन्वितम् ॥३१॥

टीका:—(१) इच्छायोगः=स्थानवर्णार्थाऽऽलम्बनप्रणिधानरूपेच्छा कथ्यते 'तद्वत्कथा, प्रीतियुक्ता-ऽविपरिणामिनी'=पूर्वोक्तसर्वेच्छावतां कथा, प्रीतियुक्ता-हर्षाऽन्विता येच्छा सेच्छायोगः, किञ्चैषेच्छा, सविधिक्रियाकारकाणामुपरि बहुमानभावपूर्वकस्वोल्लासतः, स्वल्पमपि समभ्यासदशासरकं विचित्रशुभपरिणामं दधती, इदमत्रहृदयम्=द्रव्यक्षेत्रादिसामग्रीपूर्णताया अभावेऽपि शास्त्रीयक्रियां दृढतापूर्वकं कर्त्तुमिच्छया

सह यथाशक्ति स्थानादियोगा आचरणीयास्तस्माच्च स्थानादयः पञ्चेच्छायोगा उच्यन्ते, (२) प्रवृत्तियोगः= सर्वास्ववस्थासु प्रशमाऽन्वितं यथाशास्त्रविधिस्थानादियोगानां पालनं 'प्रवृत्तियोगः', उल्लासातिशयमपेक्ष्य, सर्वाण्यङ्गानि प्राप्य क्रियमाणा ये स्थानादयस्ते प्रवृत्तियोगरूपा ज्ञेया इति ॥३१॥

-स्थिरतासिद्धियमद्वयस्य स्वरूपम्-

'सत् क्षयोपशमोत्कर्षा-दतिचारादिचिन्तया ।
रहितं तु स्थिरं सिद्धिः, परेषामर्थसाधकम् ॥३२॥

टीकाः-यदा स्थानादि, प्रवृत्तियमरूपमस्ति, तदतिचारसहितत्वेन बाधकचिन्तया सहितं भवति, परन्तु यदा तत्राऽत्यन्तमभ्यगभ्यासो भवेत्तदाऽतिचारदोषसम्भवस्य चिन्ता न भवत्यर्थात्तादृशबाधकचिन्तामुक्तिसम्भवे, तदेव स्थानादि, स्थैर्ययमरूपं कथ्यते, 'सिद्धियमः'-स्वात्मन्युत्कृष्टक्षयोपशमादिफलोत्पादकं तत् सर्वस्थानादि, स्वसन्निधावागतेषु, योगशुद्धिरहितेष्वात्मस्वपि स्वसिद्धोपशमादिसदृशफलमुत्पादयति तदा तत्स्थानादि, 'सिद्धियमत्वेन कथ्यते, अत एव यथा परममत्यवादिनां पार्श्वेऽसत्यप्रियो जनोऽपि, मिथ्या वक्तुं न शक्नोति, तथा पूर्वोक्तपरमाहिंसादिभावयुतानां योगिनां पार्श्वे हिंसाप्रकृतयो नित्यवैरिणो जीवा अपि तत्राऽहिंसाभाववन्तः सन्त उपविशन्तीति ॥३२॥

-क्षयोपशमभेदत इच्छायोगादीनां विचित्रभेदाः-

'भेदा इमे विचित्राःस्युः, क्षयोपशमभेदतः ।
श्रद्धाप्रीत्यादियोगेन, भव्यानां मार्गगामिनाम् ॥२३॥

टीकाः-इच्छादयश्चत्वारो योगा भिन्ना अपि स्वस्वस्थाने तेष्वेकैकस्याऽसंख्याता भेदा भवन्ति, स्थानादियोगस्योपरि श्रद्धा=इदमेवमेवाऽस्तीति निश्चयरूपा, स्थानादियोगस्य प्रीतिः=तदाचरणकर्त्तुरुपरि हर्षोद्रेकः, तथा धृतिधारणादेर्योगेन तेषां २ जीवानां तादृशस्तादृशः क्षयोपशमः प्राप्तो भवति, तत् क्षयोपशमेन च तादृशः २ इच्छादियोगः प्राप्यते, यदि मन्दश्रद्धादि स्यात्तदा मन्दादिः क्षयोपशमो-लभ्यते, तस्माच्च मन्दकोटिक इच्छादियोग आमाद्यते, मध्यमश्रद्धादिमतां मध्यमकोटिकश्चोत्कृष्टश्रद्धादि-सम्पन्नानां, उत्कृष्टप्रकारक इच्छादियोगः प्राप्यते, एतेषां श्रद्धादीनां मन्दतादयोऽप्यसंख्यभेदभिन्ना भवन्तिः, तद्धेतुना ततो जायमानाः क्षयोपशमा अप्यसंख्यका एव; ततस्ते क्षायोपशमिका इच्छादियोगा अप्यसंख्यप्रकारका एवाऽर्थात् श्रद्धादियोगा असंख्यकास्तद्धेतुनाऽसंख्याताः क्षयोपशमास्तस्मादेवाऽसंख्याता इच्छादियोगाः सन्तिः इत्येवंरीत्या, इच्छादियोगं प्राप्य ये जीवा मार्गे प्रावर्त्तन्त, तेषां सूक्ष्मबोधाऽभावेऽपि तेषां मार्गानुसारिता केनाऽपि न बाध्यते ॥२३॥

— इच्छादीनां चतुर्णां योगानामनुभावाः-कार्याणि-

'अनुकम्पा च निर्वेदः, संवेगः प्रशमस्तथा ।
एतेषामनुभावाः स्यु-रिच्छादीनां यथाक्रमम् ॥३४॥

टीकाः—एतेषामिच्छादीनां यथाक्रमं (१) अनुकम्पा=द्रव्यतो भावतो वा यथाशक्ति दुःखितस्य दुःखप्रहाणेच्छारूपाऽनुकम्पाः (२) निर्वेदः;=संसारस्य नैर्गुण्यज्ञानतो जायमानविरागतारूपो निर्वेदः (३) संवेगः—मोक्षपदविषयको वेगवानभिलाषः; (४) प्रशमः=भौतिकतृष्णोच्छलत्तरङ्गोपशमरूपःप्रशमः; अर्थादिच्छादियोगानामनुकम्पाद्या अनुभावाः कार्याणि स्युः,

इदमत्र हृदयम्=सम्यक्त्वप्राप्तित इच्छादियोगप्रवृत्तितश्च, अनुकम्पादीनि चत्वारि कार्याणि निष्पद्यन्ते, आस्तिक्यशून्यानुकम्पादिकार्याणि प्रति सम्यक्त्वरहितेच्छादियोगः कारणम्, आस्तिक्यसहितानुकम्पादिकार्याणि प्रति सम्यक्त्वसहितेच्छादियोगः कारणम्, केवलेच्छादियोगतो मार्गानुसारिणि जीवेऽनुकम्पादिभावाः प्राप्यन्ते, सम्यक्त्वशालिनि जीवे, आस्तिक्यसहिताऽनुकम्पादिभावाः प्राप्यन्ते, एवमनुकम्पादीनि कार्याणि सम्यक्त्वशालिनां च मार्गानुसारिणां च भिन्नानि भिन्नानि ज्ञेयानीति ॥३४॥

—श्रद्धादिभावत इच्छादियोगे साफल्यम्—

'कायोत्सर्गादिसूत्राणां श्रद्धामेधाऽऽदिभावतः ।
इच्छादियोगे साफल्यं, देशसर्वव्रतस्पृशाम् ॥३५॥

टीकाः—देशविरतानां सर्वविरतानां चेच्छादियोगेषु साफल्यं तदा स्याद् यदा 'अरिहंत चेइयाणं··· श्रद्धाए मेहाए' इत्यादिकायोत्सर्गादिसूत्रेषु श्रावकसाधूनां श्रद्धा-मेधा-धृतिधारणादिभावा भवन्ति, यत्र श्रद्धादिभावाः सन्ति, तत्राऽनुष्ठानेष्विच्छादियोगः सफलो भवतीति ॥३५॥

—पुरुषान्तरे इच्छादिभावानां भेदेऽपि न दोषः—

'गुडखण्डादिमाधुर्यभेदवत्पुरुषान्तरे ।
भेदेऽपीच्छादिभावानां, दोषो नार्थाऽन्वयादिह ॥३६॥

टीकाः-गुडखण्डादिमधुरपदार्थेषु तारतम्येन यथा मधुरताभेदेऽपि माधर्यं वर्त्तते तथा भिन्नभिन्न-पुरुषेषु, इच्छादिभावानां भेदेऽपि सर्वत्र योगरूपोऽर्थाऽन्वयो वर्त्तते एवाऽतो न दोषः, इदमत्रहृदयम्= इच्छादियोगानामल्पत्वे वाऽधिकत्वे भिन्नभिन्नस्थानेषु विद्यमानेऽपीच्छादियोगः, सर्वत्राऽस्ति, यतः सर्वत्र योगरूपाऽर्थस्यान्वयोऽस्त्येवार्थादत्यन्ताऽल्पश्रद्धादिजन्येच्छादियोगो यत्राऽस्ति तत्रेच्छादियोगोऽल्पीयानपि मन्न न कश्चिदपि दोषः ॥३६॥

-इच्छादिलेशरहितानां कायोत्सर्गाद्यनुष्ठानदाने महामृषावादः-

'येषां नेच्छादिलेशोपि, तेषां त्वेतत्समर्पणे ।
स्फुटो महामृषावाद इत्याचार्याः प्रचक्षते ॥३७॥

टीकाः—'येषां नेच्छादिलेशोऽपि'=येषां स्थानादिस्वरूपेच्छादियोगलेशोऽपि न सम्भवति, तेषां सम्मूर्च्छिमजीववत्कायचेष्टाकारकाणां 'त्वेतत्समर्पणे'=एतत्कायोत्सर्गादिसूत्राद्यनुष्ठानदाने 'स्फुटो महामृषा-वादः'='तावकायं ठाणेणं मोणेणं झाणेणं' इत्यादिप्रतिज्ञापाठपूर्वककृतकायोत्सर्गादीनां स्थानादियोगस्य स आत्मा भङ्गं करोति, प्रतिज्ञाया भञ्जनमेतन्महामृषावादरूपमेव, ये स्थानादिकं शुद्धरूपमनुष्ठानं न कुर्वते, परन्त्वैहिकपारलौकिकसुखाशंसासहितमनुष्ठानं विदधतां तेषामपि, मोक्षेच्छापूर्वकक्रियाकरणप्रतिज्ञा-पूर्वकाण्येतान्यनुष्ठानानि विपरीतप्रयोजनानि भूत्वा विषाद्यनुष्ठानानि भवन्ति तस्मान्महामृषावादानुबन्धं कुर्वन्त्यतोऽपि महामृषावादरूपोऽस्ति, एवमाचार्या हरिभद्रादिसूरयः, कथयन्ति ॥३७॥

-इच्छादियोगलेशरहितानां कायोत्सर्गादिकारणे उन्मार्गोत्थापनम्-

'उन्मार्गोत्थापनं बाढ-मसमञ्जसकारणे ।
भावनीयमिदं तत्त्वं जानानैर्योगविंशिकाम् ॥३८॥

टीकाः—इच्छादियोगलेशसत्तारहितानामभव्यादिजीवानामादरादिभावरहितत्वेन कायोत्सर्गादिक्रिया-कारकत्वेन बाढमसमञ्जसकारणे 'उन्मार्गोत्थापनं' अशुद्धक्रियारूपोन्मार्गस्य जाग्रत्कारणं भवति, एवं रीत्या तु सूत्रस्य च क्रियाया नाशो भवति, 'योगविंशिका' हरिभद्रसूरिरचितं योगविंशिकाख्यं ग्रन्थं जानानै र्महात्मभिरिदं तत्त्वं भावनीयमेवेति ॥३८॥

—पवित्रमानसेन त्रिधा सदनुष्ठानमुपादेयम्—

'त्रिधा तत्सदनुष्ठान-मादेयं शुद्धचेतसा ।
ज्ञात्वा समयसद्भावं, लोकसंज्ञां विहाय च ॥३९॥

टीकाः—'समयसद्भावं ज्ञात्वा'=सिद्धान्तरहस्यभूतमर्थं ज्ञात्वा, 'लोकसंज्ञां विहाय च'=लोकसंज्ञां च त्यक्त्वा, 'शुद्धचेतसा' पवित्रभावभावितेन, महात्मना 'त्रिधा' मनसा, वचसा, वपुषा 'तत्सदनुष्ठान-मादेयं'=पूर्वोक्तं सम्यगनुष्ठानं सादरमादेयम् ॥३९॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रंकर-सूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां सदनुष्ठाननामको दशमोऽधिकारः समाप्तः ॥३०३॥

॥१८४॥

## —अथ मनःशुद्धिनामक एकादशोऽधिकारः—

### —मनसो निर्मलीकरणम्—

उचितमाचरणं शुभमिच्छताम् , प्रथमतो मनसः खलु शोधनम् ।
गदवतां ह्यकृते मलशोधने, कमुपयोगमुपैतु रसायनम् ॥१॥

टीकाः—'उचितमाचरणं शुभमिच्छतां'=उचितमत एव सदनुष्ठानं कर्त्तुमिच्छावतां जनानां 'प्रथमतो-मनसः खलु शोधनम् '=पूर्वं मनः शुद्धं कर्त्तव्यं यतः 'मनःपूतं समाचरेदिति सूक्तिश्चरितार्था भवेत् , 'गदवतां ह्यकृते मलशोधने' निश्चयतः 'गदवतां'—रोगवतां मलस्य शोधनेऽकृते सति, 'कमुपयोगमुपैतु रसायनम्' रसायनं निरुपयोगं—निष्फलं भवतीति ॥१ ।

### —निर्विकारं मनो निर्मलं कथ्यते—

'परजने प्रसभं किमु रज्यति, द्विषति वा स्वमनो यदि निर्मलम् ।
विरहिणामरते जगतो रतेरपि च का विकृति विमले विधौ ॥२॥

टीकाः—यदि स्वमनो निर्मलं—निर्विकारं तदा प्रसभं परजने रज्यति-रागवति सति वा—अथवा द्विषति-द्वेषवति सति किमु-किमिति, अर्थान्मनो हर्षशोकविकाराभ्यां न लिप्यते, यथा विमले विधौ-चन्द्रे विरहवतां

जनानामस्तेरपि च जगतः प्रीतितः का विकृतिः, अर्थाद् गगनस्थे निर्मले चन्द्रमसि, पृथ्वीस्थानां स्त्रीणां पुंसां वा विरहजन्यारतिकारणतः, अविरहवतो जगतो रतिरूपहेतुतो न काऽपि विकृति वैपरीत्यमपितु प्रकृतिस्थितिः 'प्रकृतिविकृतिर्जायते नोत्तमानामित्युक्तेः ॥२॥

—मनः कृते शोकहास्ये एव—

'रुचितमाकलयन्ननुपस्थितं स्वमनसैव हि शोचति मानवः ।
उपनते स्मयमानमुखः पुन-र्भवति तत्र परस्य किमुच्यताम् ॥३॥

टीकाः—रुचिविषयमिष्टमप्राप्तं वस्तु मन्यमानो मानवो हि स्वमनसैव शोकं करोति, पुनरुपनते प्राप्ते वस्तुनि 'स्मयमानमुखः' भृशं हसितमुखो भवति तत्र—एतादृशवस्तुस्थितेः सर्जने मन एव कारणम् , तत्र परस्य किमुच्यतां ? अर्थान्मनोभिन्नपरस्य निमित्तं नोच्यत एव ॥३॥

—चारित्रशमरसादिविषये मनःकपेर्विचित्रं चापल्यम्—

'चरणयोगघटान् प्रविलोठयन् , शमरसं सकलं विकिरत्यधः ।
चपल एष मनःकपिरुच्चकैः, रसवणिग् विदधातु मुनिस्तु किम् ॥४॥

टीकाः—'चरणयोगघटान् प्रविलोठयन्'=सप्ततिविध—चारित्रव्यापाररूपघटान् प्रस्फोटयन् , 'सकलं शमरसं चारित्रयोगघटस्थं समग्रं शान्तरसं 'चपल एष मनःकपिरुच्चकैरधो विकिरति' एष चापल्यसम्पन्न

॥१८६॥

मनोनामककपिः, अधो-भूमेरुपरि वाऽत्मभूमेरधस्तात् प्रक्षिपति तत्र रसवणिग्रूपो मुनिस्तु किं करोतुः अर्थात् किमपि कर्त्तुं नाऽलं भवेत् ॥४॥

— मनस्तुरङ्गो नियन्त्रित एष न तिष्ठति —

'सततकुट्टितसंयमभूतलो-—त्थितरजोनिकरैः प्रथयंस्तमः ।
अतिदृढैश्च मनस्तुरगो गुणै-रपि नियन्त्रित एष न तिष्ठति ॥५॥

टीकाः—'सततकुट्टितसंयमभूतलोत्थितरजोनिकरैः'=निरन्तरं कुट्टितं संयमनामकं भूतलं तेनोत्थिता रजसां निकरैः, 'तमः प्रथयन्'=अन्धकारं विस्तारयन्, मनोनामकस्तुरगः 'गुणैरतिदृढैरपि नियन्त्रित एप न तिष्ठति'=अत्यन्तदृढैः गुणैः—रज्जुभि,ः-गुणरज्जुभिः; नियन्त्रित एष-मनस्तुरगो न तिष्ठति परन्तु द्रुतं धावत्येवेति ॥५॥

— अहह कोऽपि मनःपवनो बली —

जिनवचोधनसारमलिम्लुचः, कुसुमसायकपावकदीपकः ।
अहह कोऽपि मनः पवनो बली, शुभमतिद्रुमसन्ततिभङ्गकृत् ॥६॥

टीकाः—जिनवचनरूपकर्पूरस्यात्युत्क्षेपकः, कामनामकपावक (वह्नि) दीपकः, शुभमतिरूपवृक्षपरम्पराभञ्जनजनकः अहह कोऽपि मनोरूपपवनो बली वर्त्तते ॥६॥

— यदि भ्रमत्यतिमत्तमनोगजस्तदा क्व कुशलम् —

'चरणगोपुरभङ्गपरः स्फुरत्,-समयबोधतरूनपि पातयन् ।
भ्रमति यद्यतिमत्तमनोगजः, क्व कुशलं शिवराजपथे तदा ॥७॥

टीकाः— 'चरणगोपुरभङ्गपरः'=चारित्ररूपपूर्द्वारभञ्जनपरायणः, 'स्फुरत्समयबोधतरूनपि पातयन्'=स्फूर्तिमदागम-बोधरूप-वृक्षानपि भूमिसात् कुर्वन्, 'शिवराजपथे यद्यतिमत्तमनोगजो भ्रमति तदा क्व कुशलं'=शिवस्य-मोक्षस्य सम्यग्दर्शनज्ञानचारित्ररूपराजमार्गे यदि, अत्यन्तमदयुतमनोनामकगजो भ्रमति-भ्रमणं कुरुते तदा क्व कुशलं ? कुतः क्षेमं स्यादिति ॥७॥

– दुष्टमनोरूपदहनो व्रततरून् दहति –

व्रततरून् प्रगुणीकुरुते जनो, दहति दुष्टमनोदहनः पुनः ।
ननु परिश्रम एष विशेषवान्, क्व भविता सुगुणोपवनोदयः ॥८॥

टीकाः—एकतो मुनिजनः 'व्रततरून् प्रगुणीकुरुते' =व्रतनामकवृक्षान् सेचंसेचं ज्ञानक्रियारूपजलादिभिः मज्जीकरोति--रचित्वा युवकान् करोति, अन्यतस्तदा पुनर्दुष्टमनोनामकदहनो दहति-भस्मसात् करोति, निश्चितं यदेष परिश्रमोऽधिक एवास्ति, अर्थाद् व्रतवृक्षादिदहनानन्तरं कुतः सुगुणरूपारामस्योदयो भविष्यतीति, न कुतो भविष्यत्येवेति ॥८॥

– मनोनिग्रहस्याऽभावेन दुरन्तभवभ्रमणमेव –

'अनिगृहीतमना विदधत्पराम्, न वपुषा वचसा च शुभक्रियाम् ।
गुणमुपैति विराधनयाऽनया, बत दुरन्तभवभ्रममञ्चति ॥९॥

टीकाः–न निगृहीतं मनो यस्य सोऽनिगृहीतमनाः सन्, वपुषा–शरीरेण च वचसा-वचनेन, परामुत्कृष्टां शुभक्रियां विदधत् कुर्व्वन् मुमुक्षुः, अनया–मनसोऽनिग्रहीकरणरूपया विराधनया-आराधनाविरुद्धक्रियया, 'न गुणमुपैति' न लाभं प्राप्नोति 'बत' खेदे प्रत्युत 'दुरन्तभवभ्रममञ्चति' दुखतो नाश्यभवस्य भ्रमणं गच्छतीति ॥९॥

— मनोऽनिगृह्णन् कुविकल्पमात्रतो नरकगामी —

'अनिगृहीतमनाः कुविकल्पतो, नरकमृच्छति तन्दुलमत्स्यवत् ।
इयमभक्षणजा तदजीर्णताऽ-नुपनतार्थविकल्पकदर्थना ॥१०॥

टीकाः–अनिगृहीतमना मुमुक्षुस्तन्दुलमत्स्यवत्कुविकल्पजन्यपापतो नरकगते घोरदुःखानि प्राप्नोति, तस्मादियं, विना भक्षणं जाताऽजीर्णता, अप्राप्याऽप्युपभोगयोग्यपदार्थान् 'विकल्पस्य कदर्थना'=मनोमात्र जन्या, विचित्रविडम्बना कीयती च कीदृशी ? मा विचारणीयेत्र ॥१०॥

— मनश्चञ्चलतरं स्वं वा जगद्वञ्चयते

'मनसि लोलतरे विपरीतताम्, वचननेत्रकरेङ्गितगोपना ।
व्रजति धूर्त्ततया ह्यनयाऽखिलं, निबिडदम्भपरैर्मुषितं जगत् ॥११॥

टीका:—मनसि लोलतरेऽत्यन्तचञ्चले सति, 'वचननेत्रकरेङ्गितगोपना'=वचोगुप्तिरूपगोपना, नेत्रविनिर्विकारतारूपगोपना, करस्य चेष्टायां यतनारूपगोपना, 'विपरीततां व्रजति'=सद्गतिरूपफलदानस्य-स्थाने दुर्गतिफलास्वादनद्वारा सर्वं यत् सत्तच्चञ्चलं मनो विपरीतं करोति, हि-निश्चयेऽनया धूर्त्ततया 'निबिडदम्भपरैः' = भयङ्करदाम्भिकैरखिलं जगन्मुषितं-चोरितमिति ॥११॥

— मनःशुद्धिरेव शिवसुन्दर्या अनौषधा वशक्रिया —

मनस एव ततः परिशोधनम्, नियमतो विदधीत महामतिः ।
इदमभेषजसंवननं मुनेः, परपुमर्थरतस्य शिवश्रियः ॥१२॥

टीका:—'ततो महामतिर्नियमतो मनस एव परिशोधनं विदधीत' = पूर्वकथितवचनतो महाधीमान्, एकान्ततो मानसस्यैव परिशुद्धिः कार्या, 'परपुमर्थरतस्य मुनेः' मोक्षनामकपरमपुरुषार्थे परायणस्य मुनेः इदं शिवश्रियोऽभेषजसंवननं'=मोक्षलक्ष्म्या मनसः परिशोधनमिदं, अनौषधं वशीकरणमिति ॥१२॥

– अतिभयङ्करमदमहाज्वरविनाशने महौषधीभूता हृदयशुद्धिः –

प्रवचनाऽब्जविलासरविप्रभा, प्रशमनीरतरङ्गतरङ्गिणी ।
हृदयशुद्धिरुदीर्णमज्वर—प्रसरनाशविधौ परमौषधम् ॥१३॥

टीकाः—जैनशासनरूपकमलविकासे सूर्यप्रभासमाना, प्रशान्तिरूपनीरतरङ्गानां नदीरूपा, 'उदीर्णमदज्वर-प्रसरनाशविधौ' परमौषधम्'=प्रकटितमदनामकज्वरवेगस्य नाशक्रियायां परमौषधीभूता हृदयशुद्धिः ॥१३॥

– सकलकर्मकलंकविनाशिनी मनः शुद्धिः –

अनुभवाऽमृतकुण्डमनुत्तर—व्रतमरालविलासपयोजिनी ।
सकलकर्मकलङ्क–विनाशिनी मनस एव हि शुद्धिरुदाहृता ॥१४॥

टीकाः—अनुभवरूपामृतस्य कुण्डतुल्या, 'अनुत्तरव्रतमरालविलासपयोजिनी'=महाव्रतरूपहंसराजस्य विलासाय कमलिनीसमाना, सर्वकर्मरूपकलङ्क–विनाशिनी, हि-निश्चये मनसः शुद्धिरत्रोदाहृता प्ररूपितेति ॥१४॥

– मनशुद्धेरुपायः –

'प्रथमतो व्यवहारनयस्थितोऽशुभविकल्पनिवृत्तिपरो भवेत् ।
शुभविकल्पमयव्रतसेवया, हरति कण्टक एव हि कण्टकम् ॥१५॥

टीकाः—यश्चित्तशुद्धिं कर्त्तुमिच्छति स प्रथमतो व्यवहारनयमार्गे स्थितः सन्, शुभविकल्पानां प्राचुर्यवर्य-महाव्रतोपासनया, अशुभानां विकल्पानां निवृत्तौ परायणो भवेत्, हि-यतो हरत्येव कण्टकं कण्टक इति ॥१५॥

— प्रथमतो मनसो देशनिवृत्तिरपि स्फुटा गुणकरी —

'विषमधीत्य पदानि शनैः शनैः, हरति मन्त्रपदावधि मान्त्रिकः ।
भवति देशनिवृत्तिरपि स्फुटा, गुणकरी प्रथमं मनसस्तथा ॥१६॥

टीकाः—मन्त्रपदान्यधीत्य यथा मान्त्रिकः मन्त्रवेत्ता, शनैः शनैः 'मन्त्रपदावधि'=शरीरस्य दष्टावयवस्थाने यावद् विषं हरति = अन्यतो विषं हृत्वा मुञ्चति, तस्मिन्समये दष्टावयवस्थानेऽद्यापि विषं तु विद्यत एव, तथाऽपि दष्टावयवस्थानवर्जं समस्तशरीरतो विषं निवृत्तमेव, एतावती विषनिवृत्तिरपि यथा गुणकरी भवति तथा शुभविकल्पानां सेवनद्वारा मानसिकाऽशुभविकल्पनिवारणरूपदेशनिवृत्तिरपि मनसः प्रथमं स्फुटा गुणकरी भवतीति ॥१६॥

— मनो यत्र प्रतिमादौ लगति तदाऽऽलम्बनं शुभं मतम् —

'च्युतमसद्विषयव्यवसायतो, लगति यत्र मनोऽधिसौष्ठवात् ।
प्रतिकृतिः पदमात्मवदेव वा तदवलम्बनमत्र शुभं मतम् ॥१७॥

टीकाः—'असद्विषयव्यवसायतश्च्युतम्'=अशुभविषयविषयकव्यापारतश्चलितम्; 'अधिसौष्ठवाद्धयत्र लगति'=अत्यन्तसुष्ठुत्वेन यत्र विषये मनो लगति, 'प्रतिकृतिः पदमात्मवदेव वा' स विषयः परमात्मनः प्रतिमारूपोऽथवा आत्मसम्बद्धं पदमाध्यात्मिकपदमथवाऽऽत्मपदस्यैव शुद्धमसमस्तपदं, यथाऽऽत्मपद-मिति वा तद्विषयरूपमवलम्बनमत्र शुभं मतम्, अत्रोपलक्षणतः पिण्डस्थपदस्थादिध्यानस्यालम्बनान्यपि ज्ञेयानि ॥१७॥

– काचन निश्चयकल्पना भवति सर्वनिवृत्तिसमाधये –

तदनु काचन निश्चयकल्पना, विगलितव्यवहारपदावधिः ।
न किमपीति विवेचनसम्मुखी भवति सर्वनिवृत्तिसमाधये ? ॥१८॥

टीकाः--एवं रीत्याऽशुभविकल्पाः शुभैर्विकल्पैर्विजिता अपीदानी-मवशिष्टशुभविकल्प-विशिष्टो व्यवहारस्तु संयमादिजीवने स्थितोऽस्ति ततस्तदनु 'विगलितव्यवहारपदाऽवधिः काचन 'निश्चयकल्पना'= व्यवहारमार्गस्य स्थानमर्यादामुल्लंघमानाऽपूर्वकोटीका निश्चयकल्पना सम्पद्यते, अत्राधुना शुभसङ्कल्पा अपि न तिष्ठन्ति, एषा निश्चयकल्पनाऽऽत्मतत्त्वविवेचनसम्मुखी भवति, अर्थात् सर्व-विकल्पमात्र-निवृत्ति-जन्यसमाधिं प्रापयत्येवेति ॥१८॥

– निर्विकल्पं हृदयं प्रसरति –

'इह हि सर्वबहिर्विषयच्युतम्, हृदयमात्मनि केवलमागतम् ।
चरणदर्शनबोधपरम्परा–परिचितं प्रसरत्यविकल्पकम् ॥१९॥

टीकाः–हि–एकान्तेनाऽत्र 'सर्वबहिर्विषयच्युतम्=सकलबाह्यविषयमात्रतो विरहितं, 'आगतं केवलमात्मनि' चिदानन्दरूपे चेतने केवलं स्थिरीभूतम्, 'चरणदर्शनबोधपरम्परापरिचितम्' सम्यग्दर्शनज्ञानचारित्रपर्याय–परम्परया भावितम्, 'अविकल्पकम्'=शुभाशुभोभयविकल्पशून्यं, 'हृदयं प्रसरति' अन्तः करणं विशुद्धं विकमतितरामेवेति ॥१९॥

– असङ्गाऽन्तः करणस्वरूपम् –

'तदिदमन्यदुपैत्यधुनाऽपि नो, नियतवस्तुविलास्यपि निश्चयात् ।
क्षणमसङ्गमुदीत—निसर्गधीहृतबहिर्ग्रहमन्तरुदाहृतम् ॥२०॥

टीकाः-'नियतवस्तुविलास्यपि' नित्यवस्तुरूपात्मनि विलासशीलमपि 'निश्चयात् तदिदमन्यदुपैत्यधुनाऽपि तनो' निश्चय स्तदिदं मनोऽधुनाऽपि, अन्यद्-बाह्यवस्तुजातमुपैति नो'=नो समीपं गच्छति, एतादृशं मनः क्षणं=अन्तर्मुहूर्त्तं यावत् 'असङ्गं' निःसङ्गतां प्राप्तं, 'उदीतनिसर्गधीहृतबहिर्ग्रहं'=स्वभावरमणताविषयकबुद्धेरुदयतो बाह्यपदार्थविषयकज्ञानशून्यमन्तः करणं कथितं भवति महर्षिभिरिति ॥२०॥

— मनोनिग्रही गलितमोहतमः परमं महोऽनुभवत्यहो —

'कृतकषायजयः सगभीरिम, प्रकृतिशान्तमुदात्तमुदारधीः ।
समनुगृह्य मनोऽनुभवत्यहो, गलितमोहतमः परमं महः ॥२१॥

टीकाः—'कृतकषायजयः—क्रोधादिकषायजयकारी, 'उदारधीः' उदारबुद्धिस्वामी महामना महात्मा, मनो निगृह्याथवा 'सगभीरिम'=गम्भीरतायुतं, 'प्रकृतिशान्तं'=स्वभावतः शान्तियुतम्, औदार्ययुतमुदात्तमेतादृशं मनः समनुगृह्य-सम्पाद्य, अहो! 'गलितमोहतमः 'परमं महोऽनुभवति'=मोहनामकमहाऽन्धकारं विनाश्य परमं ज्योतिरनुभवति मन इति ॥२१॥

— निर्विकल्पं शुद्धमनो भवेत्तदा यशः श्रीः —

'गलितदुष्टविकल्पपरम्परम्, धृतविशुद्धि मनो भवतीदृशम् ।
धृतिमुपेत्य ततश्च महामतिः, समधिगच्छति शुभ्रयशःश्रियम् ॥२२॥

टीकाः—'गलितदुष्टविकल्पपरम्परं'=गलिता—नष्टा दुष्टानां विकल्पानां परम्परा येन तत्, 'धृतविशुद्धि' धृता विशुद्धि र्येन तत्, अर्थाद् शुभविकल्पधाराविनाशविशुद्धधारणानन्तरं निर्विकल्पकं विशुद्धमीदृशं मनो यदा भवति, तदा महामतिर्महात्मा, धृतिं-सस्थैर्यधैर्यमुपेत्य शुभ्रयशःश्रियं समधिगच्छति—प्राप्नोतीति ॥२२॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां मनःशुद्धिनामक एकादशोऽधिकारः समाप्तः ॥३२५॥

## अथ सम्यक्त्वनामको द्वादशोऽधिकारः

**—सति सम्यक्त्वे मनःशुद्धिः समीचीना—**

'मनःशुद्धिश्च सम्यक्त्वे, सत्येव परमार्थतः ।
तद्विना मोहगर्भा सा, प्रत्यपायाऽनुबन्धिनी ॥१॥

टीकाः—निश्चयनयदृष्ट्या पूर्वकथिता मनः शुद्धिः, सम्यग्दर्शनसत्तायामेव, सम्यग्दर्शनाऽभावे तु दृश्यमाना मनः शुद्धिस्तु मोहनामकाऽज्ञानगर्भिताऽस्ति, यतः सा 'प्रत्यपायाऽनुबन्धिनी'=अनेकानर्थपरम्परासर्जिका भवति ॥१॥

**—सम्यक्त्वसहिता एव दानादिक्रियाः शुद्धा—**

'सम्यक्त्वसहिता एव, शुद्धा दानादिकाः क्रियाः ।
तासां मोक्षफले प्रोक्ता, यदस्य सहकारिता ॥२॥

टीकाः-दानादिकाः क्रियाः सम्यक्त्वसहिता एव शुद्धा भवन्ति, यद्-'यतस्तासां मोक्षफले'= दानादिक्रियाणां मोक्षनामकफले जननीये, अस्य-सम्यक्त्वस्य सहकारिताऽपेक्षा कथिता, तस्मात् सम्यक्त्वं विहाय दानादिकाः क्रिया मोक्षफलदाने न प्रत्यला इति ॥२॥

-नाऽन्धो जयति वैरिणम्-

'कुर्वाणोऽपि क्रियां ज्ञाति-धनभोगांस्त्यजन्नपि ।
दुःखस्योरो ददानोऽपि नाऽन्धो जयति वैरिणम् ॥३॥
कुर्वन्निवृत्तिमप्येवं कामभोगांस्त्यजन्नपि ।
दुःखस्योरो ददानोऽपि, मिथ्यादृष्टिर्न सिद्धयति ॥४॥ (युग्मम्)

टीकाः='ज्ञातिधनभोगान्'=ज्ञातिश्च धनं च भोगश्च ज्ञातिधनभोगास्तान्, त्यजन्नपि=त्यागविषयान् कुर्वन्नपि, अर्थात् स्वजनसम्पत्तिभोगत्याग्यपि, क्रियां कुर्वाणोऽपि-क्रियाकार्यपि, 'दुःखस्योरो ददानोऽपि' दृढेनोरसा दुःखानि प्रति योद्धुं सज्जः सन् प्रतिकरोति तथाप्यन्धो वैरिणं न जयतीति ॥३॥

– एवं मिथ्यादृष्टि र्न सिद्धयति –

एवंरीत्या 'कामभोगांस्त्यजन्नपि=शब्दादिककामभोगत्याग्यपि, निवृत्तिमार्गे गन्तुं सज्जोऽपि स्यात्, आगन्तुकदुःखानि प्रतिकुर्वन्नपि मिथ्यादृष्टिर्न सिद्धयति ॥४॥

— सर्वेषां धर्मकर्मणां सारः सम्यक्त्वमुच्यते —

'कनीनिकेव नेत्रस्य, कुसुमस्य सौरभम् ।
सम्यक्त्वमुच्यते सारः, सर्वेषां धर्मकर्मणाम् ॥५॥

टीका:—'नेत्रस्य कनीनिका'=चक्षुषस्तारातुल्यम्, कुसुमस्येव सौरभम्'=पुष्पस्य सुरभिसमानं, सर्वेषां धर्मकर्मणां सारभूतं-प्राणभूतं सम्यक्त्वमुच्यते ॥५॥

— सम्यक्त्वस्य प्रथमं लक्षणम् —

तत्त्वश्रद्धानमेतच्च, गदितं जिनशासने ।
सर्वे जीवा न हन्तव्याः, सूत्रे तत्त्वमितीष्यते ॥६॥

टीका:—तत्त्वश्रद्धानरूपमेतत् सम्यक्त्वं जिनशासने तत्त्वश्रद्धान सम्यक्त्वस्य प्रथमं लक्षणं कथितं वर्त्तते, सूत्रे=आचाराङ्गादिसूत्रे 'सर्वे जीवा न हन्तव्याः' इति तत्त्वमिष्यते—मन्यते 'तत्त्वश्रद्धानं सम्यक्त्वमुच्यते इति ॥६॥

— धर्मरुच्यात्मकमपि सम्यक्त्वमुच्यते —

'शुद्धो धर्मोऽयमित्येतद्धर्मरुच्यात्मकं स्थितम् ।

शुद्धानामिदमन्यासां, रुचीनामुपलक्षणम् ॥७॥

टीकाः–'अयं शुद्धो धर्मः'पूर्वोक्त एषोऽहिंसाधर्मः, शुद्धोऽस्ति, इत्येतद्धर्मरुच्यात्मकं स्थितम्'= एतादृशी या धर्मरुचिः सा धर्मरुच्याऽऽत्मकं सम्यक्त्वमुच्यते, 'इदमन्यासां शुद्धानां रुचीनामुपलक्षणम्'=इदं धर्मरुच्यात्मकं सम्यक्त्वमिति पदमन्यासां शुद्धानां रुचीनामुपलक्षणंबोधकं (स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणस्य लक्षणम्) ॥७॥

– सम्यक्त्वस्य द्वितीयं लक्षणम् –

'अथवेदं यथा तत्त्व-माज्ञयैव तथाऽखिलम् ।
नवानामपि तत्त्वाना—मिति श्रद्धोदिताऽर्थतः ॥८॥

टीकाः–अथवेति पक्षान्तरे, यथेदं 'सर्वे जीवा न हन्तव्याः' अर्थात् 'अहिंसाऽऽत्मकः शुद्धो धर्मः' इतीदं तत्त्वं जिनानामाज्ञयैव, तथाऽखिलं तत्त्वमर्थाज्जिनामेतादृश्याज्ञा यद् 'सर्वे जीवा न हन्तव्या' अत इदं तत्त्वं, तद् विधेयभूतो जीव इति तत्त्वम् , तथाऽर्थतो–नव जीवादीनि तत्त्वानि जिनाज्ञयैव तत्त्वानि भवन्ति, तेषु नवतत्त्वेषु श्रद्धा सम्यक्त्वमुच्यते ॥८॥

– सम्यक्त्वस्य तृतीयं लक्षणम् –

'इहैव प्रोच्यते शुद्धाऽ-हिंसा वा तत्त्वमित्यतः ।

सम्यक्त्वं दर्शितं सूत्र-प्रामाण्योपगमात्मकम् ॥९॥

टीकाः—'इहैव=अस्मिन्नेव जैनशासने शुद्धाऽहिंसा प्रोच्यतेऽथवा तत्त्वं प्रोच्यतेऽत ईदृशं जैनशास्त्रमेव प्रमाणमर्थाच्छास्त्रेऽस्मिन् यदुक्तं तदेव प्रमाणं, एवंविधसूत्रप्रामाण्यस्य यः स्वीकारस्तदात्मकं सम्यक्त्वं, यत्र शुद्धाया अहिंसायाः प्रतिपादनं तद्विषयकसूत्रस्य प्रामाण्यमेवेति ॥९॥

– अत्राप्यन्योऽन्याश्रयदोषं दर्शयति –

'शुद्धाऽहिंसोक्तितः सूत्र-प्रामाण्यं, तत एव च ।
अहिंसा शुद्धधीरेवमन्योऽन्याश्रयभीर्ननु ॥१०॥

टीकाः—'ननु शुद्धाऽहिंसोक्तितः प्रामाण्यं'=यदि सूत्रे शुद्धाऽहिंसा कथिता भवेत्तदा तत्सूत्रप्रामाण्यप्रतिपत्तिः स्यात्, परन्तु यदि सूत्रे प्रामाण्यस्य (इदं सूत्रं प्रमाणमिति) प्रतिपत्तिः स्यात्तदा तस्मिन् कथिताऽहिंसा शुद्धाऽस्त्येवं कथनीयं स्यादथ सूत्रं प्रमाणमस्तीति विपयस्तदैव सिद्ध्येद् यदा तस्मिन् सूत्रे कथिताऽस्तीति सिद्धिस्तदा भवेद् यदा तत्सूत्रं प्रमाणभूतमस्तीति निश्चितं भवेदर्थात् सूत्रप्रामाण्यप्रतिपत्तिं विना सूत्रोक्ताऽहिंसा शुद्धाऽस्तीति प्रतीति र्न भवेत्, शुद्धाऽहिंसायाश्च प्रतीतिं विना सूत्रप्रामाण्यविषयकज्ञानं न भवेत्, अतोऽन्योऽन्याश्रयदोषभयमुपस्थितं किं न ? अर्थादुपस्थितमेवेति ॥१०॥

॥२००॥

– पूर्वकथितदोषस्य निरसनम् –

'नैवं, यस्मादहिंसायां, सर्वेषामेकवाक्यता ।
तच्छुद्धताऽवबोधश्च, सम्भवादिविचारणात् ॥११॥

टीका:––'नैवं'=पूर्वोक्तान्योऽन्याश्रयदोषपोषकं कथनं न सम्यग्, 'यस्मादहिंसायां सर्वेषामेक वाक्यता'='अहिंसा परमो धर्मः इत्येतत्तत्त्वे तु सर्वदर्शनानामैकमत्यमस्ति, 'तच्छुद्धताऽवबोधश्च सम्भवादि-विचारणात्'=परन्तु तैस्तैर्दर्शनैरहिंसाधर्मस्य स्वरूपं यत् प्रतिपादितं, तत् प्रतिपादनं, तत्र कथिताऽहिंसायां शुद्धतामाधकं भवति वानवेति निर्णयोऽवशिष्टः यत्र धर्मसूत्रे शुद्धाहिंसायाः प्रतिपादनं कृतं तत्सूत्रं प्रमाणनीयं, अथाऽस्मिन् विधाने नाऽन्योऽन्याश्रयदोषः सम्भवति, यतोऽहिंसायां शुद्धतायाः प्रतीतिः, अहिंसाप्रति-पादकसूत्रस्य प्रामाण्यं न स्वीकरोति किन्तु, अग्रतो वक्ष्यमाण–'सम्भवादि-विचारणात् ,=या शास्त्रे कथिताऽहिमा, सम्भवादिविचारणान्तः शुद्धा सिद्धयेत्तदा सूत्रं प्रमाणं भवेत् , एवं स्थिते नान्योऽन्या-श्रयदोषभयं तिष्ठति ॥११॥

– अहिंसायां सर्वधर्माणामैकमत्यं नवभिः श्लोकैः समर्थयते –

'यथाऽहिंसादयः पञ्च, व्रतधर्मयसादिभिः ।
पदैः कुशलधर्माद्यैः कथ्यन्ते स्वस्वदर्शने ॥१२॥

टीका:—'यथाऽहिंसादयः पञ्च, व्रतधर्मयमादिभिः'=अहिंसादयः पञ्च, तत्तद्दर्शनग्रन्थेषु, भिन्नभिन्न नामभिः सम्बोधिताः सन्त्येव; भागवते व्रतपदेन, सांख्ये यमादिपदेन, बौद्धधर्मे कुशलधर्मपदेन, अत्र यमादिस्थितादिपदेन ब्रह्मपदं ग्राह्यम्, अहिंसादयो वैदिकैर्ब्रह्मपदेन सूच्यन्ते, अर्थात्स्वस्वदर्शने भिन्नभिन्न-संज्ञाभिरहिंसादय उच्यन्ते इति ॥१२॥

**– भागवतपाशुपताभ्यामहिंसादयो व्रतयमाऽऽदिभिः सूच्यन्ते –**

'प्राहुर्भागवतास्तत्र, व्रतोपव्रतपञ्चकम् ।
यमांश्च नियमान् पाशु-पता धर्मान् दशाऽभ्यधुः ॥१३॥

टीका:—भागवताः-पौराणिका अहिंसाऽऽदिपञ्चकं, 'व्रतोपव्रतपञ्चकं'='अहिंसासूनृताऽस्तेयब्रह्माऽकिञ्चनता यमाः' 'नियमाः शौचसन्तोषौ स्वाध्यायतपसी अपि देवताप्रणिधानं' यमपञ्चकं व्रतपञ्चकं, नियमपञ्चकमुपव्रतपञ्चकं भागवता भाषन्ते, पाशुपता नैयायिका यमनियमरूपान् दश धर्मान् कथयन्ति स्म ॥१३॥

**– अहिंसादिपञ्चकमक्रोधादिपञ्चकं नामग्राहं कथ्यन्ते –**

'अहिंसा सत्यवचन-मस्तैन्यं चाप्यकल्पना ।
ब्रह्मचर्यं तथाऽक्रोधो ह्यार्जवं शौचमेव च ॥१४॥

सन्तोषो गुरुशुश्रूषा, इत्येते दश कीर्तिताः ।
निगद्यन्ते यमाः साङ्ख्यैरपि व्यासानुसारिभिः ॥१५॥

टीकाः—अहिंसा, सत्यवचनं, अस्तैन्यं, अकल्पना-निष्परिग्रहता, ब्रह्मचर्यं तथाऽक्रोधः, आर्जवं, शौचं, सन्तोषः, गुरुशुश्रूषेति दशविधा धर्माः पाशुपतैरुच्यन्तेऽथ व्यासानुसारिभिः साङ्ख्यैरपि यमा निगद्यन्ते ॥१४, १५॥

– विशेषतो यमनियमवर्णनम् –

'अहिंसा सत्यमस्तैन्यं, ब्रह्मचर्यं तुरीयकम् ।
पञ्चमोऽव्यवहारश्चे-त्येते पञ्च यमाः स्मृताः ॥१६॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
अप्रमादश्च पञ्चैते, नियमाः परिकीर्तिताः ॥१७॥

टीकाः—अथ व्यासानुसारिभिः साङ्ख्यैरपि यमा निगद्यन्ते तथाहि-अहिंसा, सत्यमस्तैन्यं, ब्रह्मचर्यं, अव्यवहारश्च पञ्च यमाः स्मृता । अक्रोधः, गुरुशुश्रूषा, शौचं, आहारलाघवं, अप्रमादश्च पञ्च नियमाः स्मृताः ॥१६॥१७॥

— बौद्धैः कुशलधर्माश्च दशेष्यन्ते, तेऽत्रोच्यन्ते —

'बौद्धैः कुशलधर्माश्च दशेष्यन्ते यदुच्यते, ।
हिंसाऽस्तेयाऽन्यथाकामं, पैशुन्यं परुषाऽनृतम् ॥१८॥
सम्भिन्नाऽऽलापव्यापाद--मभिध्यादृगविपर्ययम् ।
पापकर्मेति दशधा, कायवाङ्मानसैस्त्यजेत् ॥१९॥

टीकाः—बौद्धैः कुशल-धर्माश्च दशेष्यन्ते, तथाहि (१) हिंसात्यागः (२) स्तेय—चौर्यत्यागः, (३) (४) पैशुन्य-दौर्जन्यत्यागः (५) परुषानृत-कठोरासत्यवचनत्यागः (६) सम्भिन्नालाप-असम्बद्ध-भाषण-त्यागः (७) व्यापाद-द्रोहचिन्तनत्यागः (८) अभिध्या-परधनेच्छात्यागः (९) दृग् विपर्यय-विपरीतदृष्टि-मिथ्याऽभिनिवेशत्यागः (१०) पापकर्मत्यागः, मनसा, वचसा, वपुषा कार्य इत्येवं दशविधाः कुशलधर्मा कुशलधर्मा ज्ञेया इति ॥१८॥१९॥

— वैदिकैरहिंसादीनि ब्रह्मादिपदवाच्यानीति कथ्यन्ते निगमनवाक्यम —

'ब्रह्मादिपदवाच्यानि तान्याहु वैदिकादयः ।
अतः सर्वैक वाक्यत्वाद्, धर्मशास्त्रमदोऽर्थकम् ॥२०॥

टीका:—'तानि वैदिकादयो ब्रह्मादिपदवाच्यान्याहुः' तानि-अहिंसादीनि वैदिकादयो ब्रह्मादिपदै-र्वाच्यानीति कथयन्ति, 'अतः' सर्वैकवाक्यत्वात्'=अस्मात् कारणादहिंसाविषये सर्वेषां शास्त्राणामेक वाक्यत्वाद् 'धर्मशास्त्रमदोऽर्थकम्'=अहिंसादिपदार्थनिरूपकत्वेन धर्मशास्त्रं निश्चीयत एवेति ॥२०॥

– शास्त्रपरीक्षाऽर्थे सर्वधर्मग्रंथेषु कुत्र शुद्धाहिंसासम्भव इत्यन्वेषणीयम् –

'क्व चैतत् सम्भवो युक्त इति चिन्त्यं महात्मना ।
शास्त्रं परीक्षमाणेना-व्याकुलेनाऽन्तरात्मना ॥२१॥

टीका:—'शास्त्रं परीक्षमाणेन'—सर्वात्मना शास्त्रस्य परीक्षां 'कुर्वता 'अव्याकुलेनाऽन्तरात्मना महात्मना'=स्वस्थचित्तेन सम्यग्दृष्टिप्रभृतिगुणवदन्तरात्मना महापुरुषेण 'क्व चैतत्सम्भवो युक्त इति चिन्त्यं'=कस्मिन् धर्मग्रन्थे शुद्धत्वविशिष्टाया अहिंसायाः सम्भवो युक्तः ? इति चिन्तनीयमेवेति ॥२१॥

— नात्र प्रमाणलक्षणादेरुपयोगः —

'प्रमाणलक्षणादेस्तु नोपयोगोऽत्र कश्चन ।
तन्निश्चयेऽनवस्थानादन्यार्थस्थितेर्यतः ॥२२॥

टीका:--'अत्र'=कुत्र धर्मशास्त्रे शुद्धाहिंसासम्भव इति निर्णये, 'प्रमाणलक्षणादेस्तु'=प्रत्यक्षाऽनुमाना-

दीनि प्रमाणान्युच्यन्ते तेषां लक्षणानि भिन्नानि कथ्यन्ते तथाप्यत्र प्रमाणलक्षणानि नोपयुज्यन्ते किञ्चित् 'तन्निश्चयेऽनवस्थानात्' यदि प्रमाणनिश्चायकप्रमाणनिश्चयः केनचिदपरेण प्रमाणेन निश्चीयते, तन्निश्चयोऽपरेण केनचित् प्रमाणेन निश्चीयते, तन्निश्चयस्तृतीयेन प्रमाणेन करिष्यते इत्येवं प्रमाणलक्षण-निश्चयेऽनवस्थादोषः, 'अन्यथाऽर्थस्थितेर्यतः'=यद्यनिश्चितप्रमाणलक्षणेन निश्चिन्वत्प्रमाणमर्थग्रहणे उपयुज्येत तदा प्रमाणलक्षणेन किं ? विना प्रमाणलक्षणमर्थसिद्धि र्भवेद् यतः-इदं श्री सिद्धसेनदिवाकरेणोक्तं च तथाहि ॥२२॥

**– प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः –**

**प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः ।**
**प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयोजनम् ॥२३॥**

टीकाः–श्री सिद्धसेनदिवाकरेणोक्तं (पूर्वश्लोकस्य 'यतः' शब्दस्यानुसन्धाने' च यत् प्रमाणानि तु लोकेषु स्वत एव रूढानि-प्रसिद्धानि, अर्थात् प्रमाणलक्षणप्रणेतॄणां वचनसाध्यानि न, किञ्च प्रमाणेन-कृतस्नानपानादिव्यवहारस्तु प्रमाणलक्षणान्यजानत्सु गोपालेषु प्रसिद्धः, प्रमाणलक्षणस्योक्तौ न प्रयोजनं ज्ञायते, शास्त्राणि तु कषादिभिः परीक्ष्यन्ते ॥२३॥

॥२०६॥

— एकान्तनित्यत्ववादिसाङ्ख्यदर्शने कथं हिंसादयो घटन्ताम् —

'तत्राऽऽत्मा नित्य एवेति, येषामेकान्तदर्शनम् ।
हिंसादयः कथं तेषां, कथमप्यात्मनोऽव्ययात् ॥२४॥

टीका:–'साङ्ख्यादिरूपप्रत्येकैकान्तवादिदर्शनेषु तत्तद् दर्शनाभिप्रेताऽहिंसायां शुद्धेरसम्भव इति परीक्ष्यमाणविषयं साधयति ग्रन्थकारो महर्षिरिति भूमिकारूपकथनम्, 'आत्मा नित्य एव' इति येषामेकान्तप्रतिपादकं दर्शनमस्ति तेषां साङ्ख्यानां मते न हिंसादयो घटन्ते, यत एकान्तनित्यस्याऽऽत्मनः कदाचिन्नाशस्य न सम्भवः सर्वदाऽव्ययो–अविनाशी विद्यते, यदि हिंसाया असम्भवश्चेदहिंसादिधर्मस्य तु का वार्त्ता ? ॥२४॥

-साङ्ख्यमताऽभिमतविशिष्टमनोयोगध्वंसरूपमरणस्य खण्डनम्-

मनोयोगविशेषस्य, ध्वंसो मरणमात्मनः ।
हिंसा, तच्चेन्न तत्त्वस्य, सिद्धेरर्थसमाजतः ॥ २५ ॥

टीका:–पूर्वपक्षः=लोके व्यक्ते यन्मरणमुच्यते तद्व्यक्तेश्चरमात्ममनःसंयोगोऽथवेन्द्रियमनःसंयोगोऽस्ति तस्य यो ध्वंसो–हिंसा, सा लोकैरात्मनो हिंसा कथ्यते, हिंसाकारको हिंसक उच्यते, एवमस्यां ॥२०७॥

कल्पनायां वस्तुत आत्मनो हिंसा नास्ति तथापि हिंसापदार्थ उपपद्यते, ततस्तादृशहिंसाऽकरणरूपाऽहिंसाधर्मोऽप्यस्मन्मते उपपन्नो भवति ।

उत्तरपक्षः=नेदं सम्यग् , युष्माभिश्चरममनःसंयोगध्वंसरूपा या हिंसा कथिता, साऽर्थसमाजतः=द्वितीयसामग्रीजः सिद्धयति, अर्थादेतच्चरममनःसंयोगतो ज्ञानमुत्पद्यते, तथापि तज्जन्यसंस्कारतो भाविनि न स्मरणं न जायते, तत्कारणं तद्बोधकाऽभावोऽस्ति, किञ्चैष मनःसंयोगध्वंसो जातः, सोऽपि भिन्नभिन्नसंयोगानामिव, द्वितीयक्षणे स्वत एव नश्यति एवं च तादृशध्वंसरूपा हिंसा यदि हिंसात्वेन गण्यते तदा तादृशहिंसानिरुक्तार्थसमाजतः सिद्धा भवत्यतः, कश्चिदन्यस्तु जीवो हिंसको न भवत्येवाऽर्थात् कश्चिद् हिंसको न कथ्यते; एव च यदि हिंसैव न तिष्ठेत्तदाऽहिंसाधर्मकथनेन किं प्रयोजनम् ? इदमत्र हृदयं, कञ्चिदन्यजीवं विना स्वत एवार्थसमाजतश्चरममनःसंयोगध्वंसरूपा हिंसा सिद्धयति, ततस्तादृशध्वंसकर्त्ता कश्चिद् व्यक्तिरूपो जीवो न सिद्धयत्येवेति ॥२५॥

### साङ्ख्यमताऽभिमतबुद्धिगतदुःखोत्पादहिंसापदार्थस्य खण्डनम्

**नेति बुद्धिगता दुखोत्पादरूपेयमौचितीम् ।**
**पुंसि भेदाऽग्रहात्तस्याः, परमार्थाऽव्यवस्थितेः ॥२६॥**

टीकाः-पूर्वपक्षः-पञ्चविंशतितत्त्वमध्ये बुद्धिनामकं यज्जडतत्त्वमस्ति तद्बुद्धौ दुखोत्पादरूपो हिंसा-पदार्थ उत्पद्यते उत्तरपक्षः=नेदमुचितं तथाहि-युष्मन्मते पुरुषे बुद्धेः प्रतिबिम्बं पतति, ततश्च पुरुष एवं जानाति 'अहं बुद्धिश्चैकरूपौ स्तः' एवं स्थिते बुद्धौ यो दुःखोत्पादो जातः, स पुरुषस्य स्वस्मिन्नैव-भासते, एवं रीत्या पुरुषे दुःखोत्पादरूपा हिंसा साक्षात्तु न घटते परन्तु बुद्धेः प्रतिबिम्बोदयकारणेन जाय-मानभेदाऽग्रहणरूपभ्रमहेतुना दुःखोत्पादरूपहिंसापर्यायो बुद्धेः पुरुषेज्ञायते, अर्थात् वस्तुतस्तु हिंसा पुरुषस्ये-ति न सिद्धं, अन्यच्च पुरुषे बुद्धिगतदुःखोत्पादात्मकहिंमाया आरोपः कृतो यःस उपचारः, हिंसारूपवस्तुस्व-रूपनिर्णये नोपयुज्यते ॥२६॥

हिंसापदं नाशपर्यायवाचकं जीवस्यैकान्तनित्यत्वे जीवे न घटते, अनुभवबाधक-त्वात्—

न च हिंसापदं नाश-पर्यायं कथमप्यहो ।
जीवस्यैकान्तनित्यत्वेऽनुभवाबाधकं भवेत् ॥२७॥

टीकाः-किञ्च हिंसापदं तु नाशपर्यायवाचकं पदं, यद्यात्मैकान्तनित्य एव स्यात्तदा तत्र केनचित्कार-णेन तस्य नाशपर्याय उत्पत्तुम शक्यस्तत आत्मनि हिंसा न घटते सर्वथा तथापि युष्माभिरेकान्तनित्य आत्मनि हिंमापदं प्रयुज्यते, तदनुभवबाधकत्वेनैकान्तनित्यस्यात्मनो नाशोऽसंभवीति ॥२७॥

एकान्तनित्यत्वे शरीरेणाऽपि सम्बन्धोऽसम्भवी, आत्मनो विभुत्वे संसाराभावः–

**शरीरेणाऽपि सम्बन्धो, नित्यत्वेऽस्य न सम्भवी ।**
**विभुत्वे न च संसारः, कल्पितः स्यादसंशयम् ॥ २८ ॥**

टीकाः–आस्तां दूरे धनादिना सह सम्बन्धः, परन्तु 'अस्य'=आत्मन एकान्तनित्यत्वे शरीरेण सह सम्बन्धोऽसम्भवी, त्यागाऽत्यागरूपविकल्पद्वयेन शरीरसम्बन्धोऽसम्भवी, प्रथमविकल्पे पूर्वरूपत्यागक्रियां कर्तुं शक्तश्चेदेकान्तनित्यता कथं ? यत एकान्तनित्ये तु क्रियामात्रस्याऽसम्भवः, द्वितीयविकल्पे पूर्वरूपत्यागं विना शरीरेण सह सम्बन्धश्चेत् पूर्वस्वभावेन सह विरोधस्योपस्थिते शरीरेण सह सम्बन्धोऽसम्भवी, एवमात्मन एकान्तनित्यत्वे शरीरेण सम्बन्धोऽसम्भवी, पूर्वपक्षः=यथाऽऽत्मैकान्तनित्यस्तथा विभुरप्येव, यः सर्वगो भवति तस्यामुकस्थानात् स्थानान्तरेण सह सम्बन्धस्य प्रश्नोऽपि कथं ? एवं क्रियां विनैवात्मन शरीरेण सह सम्बन्धः सम्भवी.

उत्तरपक्ष=यद्येवमेकान्तनित्यात्मनो विभुत्वे संसाराभावाऽऽपत्तिः, यद्यात्मनः सर्वगतत्वे तु तस्य परलोकगमनं कुतः, परलोकगमनमेन तु संसारः, तदभावे तदभावः, चातुर्गतिकसंसारस्वीकारहेतुः कल्पित एव संसारो मन्तव्यः स्यात्, निरुपचरितसंसारस्य सिद्ध्यभावः स्यात्, एवमनेकापत्तिपातत आत्मन एकान्तनित्यत्वं विभुत्वं च सर्वथा युक्तिविरहितं विज्ञेयमिति ॥२८॥

॥२१०॥

एकान्तनिष्क्रयत्वेनाऽऽत्मनो हननाद्यभावेन हिंसादेरनुपपत्ति.—

अदृष्टाद्देहसंयोगः, स्यादन्यतरकर्मजः ।
इत्थं जन्मोपपत्तिश्चे-न्न तद्योगाऽविवेचनात् ॥ २१ ॥

टीकाःएकान्तेनात्मा, निष्क्रियः स्यात्तदा तस्य शरीरेण सम्बन्धोऽनुपपन्नो भवेत् (१) यदि विभुश्चेत्तदा देवादिगतौ जन्मादिप्रपञ्चस्याऽनुपपत्तिः, इत्यापत्तिद्वयं निवारणायैवंब्रूमः, (२) आत्मनः कूटस्थनित्यत्वेन तत्र क्रियाया अभावः स्यात्तथापि आत्मनि, अदृष्टविशेषो विद्यते एव, अनेनाऽदृष्टविशेषे या तत्तत्परमाणुषु क्रिया भवत्येव यत्परमाणूनां शरीरं तत्तदात्मना सुखादिभोगाय गृह्यते, तत्परमाणुषु क्रियोत्पद्यते, ततस्ते परमाणवस्तदात्मना सह सम्बध्य तस्य शरीरं भवति एवमात्मनि क्रियाया असम्भवतोऽप्यन्यतरपरमाणोः क्रियासम्भवतःशरीरेण सहात्मनः सम्बन्ध उत्पद्यते (३) एवं भवनेन चातुर्गतिकसंसारे तज्जन्मोपपत्तिर्भविष्यति आत्मनो विभुत्वेनोर्ध्वलोकादौ सर्वत्र व्याप्तिरस्ति, तत्राप्यदृष्टविशेषे या देवादिशरीरयोग्यपरमाणुभिः संयोगो भविष्यति, अत एवं कथ्यते, यदाऽऽत्मा देवत्वेनोत्पन्न एवं रीत्या मानवीयशरीरारम्भकपरमाणवो विभोरात्मतो विभक्तास्तदैवं कथ्यते, एष आत्मा मानवत्वेन मृतः, एवमात्मनो विभुत्वेऽबाधिते जन्माद्युपपत्तिरपि जायते ।

(उत्तरपक्षः) एवं रीत्याऽऽत्मना सह देहस्य यः संयोगः कथितः, तत्संयोगस्य विवेचनमशक्यमेव,

अत्र भवन्तं पृच्छामो वयं=किं देहात्मसंयोगो देहात्मना सह भिन्नो वाऽभिन्नः ? यदि भिन्नः स्यात्तदा भिन्नः संयोगः केन सम्बन्धेन शरीरात्मनि स्थितोऽस्ति ? येन सम्बन्धेन स्थितोऽस्ति स सम्बन्धः किं भिन्नोऽस्ति वाऽभिन्नः ? यदि भिन्नः स्यात्तदा तस्य सम्बन्धस्य वसने कोऽपि सम्बन्धो वाच्यः स्यादेवमनवस्थादोषाऽऽपत्तिः, अथ यद्येवं कथ्यते स संयोगो देहात्मना सहाभिन्नोऽस्ति तदा स संयोगो देहरूपो वाऽऽत्मरूपो वा स्थितः, तदनन्तरं संयोगसदृशं किमपि वस्तु पृथक्त्वेन न लभ्यते, एवं देहात्मसंयोगस्य विवेचनमेव न शक्यते, ततः कल्पनैषा सर्वाऽसंगतेति ॥२९॥

आत्मनि क्रियां विना मिताणुग्रहणाद्यनुपपत्तिः—

आत्मनि क्रियां विना स्या, न्मिताणुग्रहणं कथं ? ।
कथं संयोगभेदादि-कल्पना चाऽपि युज्यते ? ॥३०॥

टीकाः—अथ यद्येवं रीत्या, आत्मनि क्रियां विना; अमुकशरीरोत्पादकपरिमितपरमाणुग्रहणं कथं स्यात् ! किञ्चात्मनो विभुत्वपक्षे सर्वैरणुभिः सह सम्बन्धोऽस्ति, ततः किमर्थः, अमुकसम्बद्धानामेवाऽणूनां ग्रहणं कुर्यात् ! शेषसम्बद्धाऽणूनां ग्रहणं न कुर्यादिति, वस्तुतः सर्वसम्बद्धाऽणूनां ग्रहणं कर्त्तव्यमथवा कस्यचिदपि ग्रहणं न कर्तव्यमथ स सर्वसम्बद्धाऽणुग्रहणं कुर्यात्तदा तज्जन्यसर्वशरीरैः सहोपभोगः सर्वसंसारिजीवैः कर्तव्यः स्यादेष महत्यापत्तिः, (पूर्वपक्षः,स स आत्माऽदृष्टविशेषेणामुकैरेवाऽणुभिः सह सम्बध्नाति,

तत्तदणुजन्यत्वेन चैकेन शरीरेण सहोपभोगं करोति एवमेक एवाऽऽत्मा, अमुकैरणुभिः सह सम्बध्नाति अथवाऽमुकाऽणूनामेव भेदं करोति, अतः शरीरभोगाऽऽपत्तिर्नास्त्येव (उत्तरपक्षः) एवं मताऽपेक्षणेत्व-नन्ताऽणुभिः सहानन्तसंयोगस्य चानन्तभेदस्य कल्पने गौरवं महद् यदुचितं नास्ति, एतत्सर्वाऽऽपत्ति-निवारणाय, आत्मनः क्रियावत्त्वं मन्तव्यम् ॥ ३० ॥

कथंश्चिन्मूर्त्ततास्वीकारे वपुःसंक्रमव्यापारयोगौ–

कथंचिन्मूर्त्तताऽऽपत्तिं विना वपुरसङ्क्रमात् ।
व्यापाराऽयोगतश्चैव, यत्किञ्चित्तदिदं जगुः ॥ ३१ ॥

टीकाः--आत्मनि क्रियावत्त्व एव प्रतिनियतशरीराऽऽरम्भकपरमाणुग्रहणं घटते, किश्चात्मनोऽविभुत्व-भावोऽत एव मूर्तत्वं मन्तव्यम् , यतो मूर्त्तत्वस्य द्वे लक्षणे स्तः, क्रियावद् द्रव्यं मूर्त्त इत्येकं लक्षणं, परि-च्छिन्नपरिमाणवद् द्रव्यं मूर्त्त इति द्वितीयं लक्षणं, संयोगभेदादिसंग्रहायाऽऽत्मनि मूर्तता कल्पनीया, अतो यद्येवं रीत्याऽऽत्मनि कथश्चिन्मूर्त्ततायाः अस्वीकारे कूटस्थनित्यतास्वीकारे च शरीरे आत्मनोऽसङ्क्रमा-पत्तिरागच्छेच्च विभुत्वपक्षे पूर्वोक्तसंयोगभेदादिरूपव्यापारस्याऽभावाऽऽपत्तिरागच्छेत्तस्मादेवाऽऽत्मा कूटस्थनित्यस्तथा विभुर्न स्वीकरणीयः ॥ ३१ ॥

॥२१३॥

आत्मनो निष्क्रियत्वेन हननाद्यभावेन हिंसाद्यनुपपत्तिः—

निष्क्रियोऽसौ ततो हन्ति, हन्यते वा न जातुचित् ।
कश्चित्केनचिदित्येवं न हिंसाऽस्योपपद्यते ॥३२ ॥

टीकाः—आत्मनो निष्क्रियत्वेन कश्चिन्न हन्ति, स जातुचित्केनचिन्न हन्यते, इत्यात्मनि हिंसाया अनुपपत्तिः, युष्मन्मते हिंसाऽनुपपत्तावहिंसाऽनुपपत्तिः, साङ्ख्यशास्त्रोक्ताऽहिंसा नास्ति शुद्धाऽहिंसा, इत्येकान्तनित्यात्मवादे शुद्धाया अहिंसाया असम्भवो दृश्यते ॥ ३२ ॥

एकान्ताऽनित्यात्मवादिबौद्धमतेऽपि शुद्धाहिंसाया असम्भवः—

अनित्यैकान्तपक्षेऽपि, हिंसादीनामसम्भवः ।
नाशहेतोरयोगेन, क्षणिकत्वस्य साधनात् ॥ ३३ ॥

टीकाः—शून्यवादी स्वमतं पुष्णन् वदति केनचिदपरेण वस्तु नैकं वस्तु न स्यादीत्येतन्मतं न वास्तविकं यथा दण्डेन घटध्वंसो जायत इत्येवं वदतः प्रति बौद्धाः पृच्छन्ति, किं घटध्वंसो घटाद्भिन्नो वाऽभिन्नः ! यदि भिन्नस्तदा घटस्तदवस्थ एव भवेत् यतो घटो भिन्नो, घटनाशश्च भिन्नः, यद्यभिन्नस्तदा घटध्वंसो घटस्वरूप एव जात एवमुभयथा दण्डेन घटध्वंसोऽसम्भवी अर्थाद् घटादिभावाः स्वभावत उत्पद्यन्ते, उत्पादाऽनन्तरं च विनश्यन्ति, एवं प्रतिक्षणमुत्पादविनाशधारा प्रचलति, अर्थादनित्यवादपक्षस्यैवं मन्तव्यमस्ति

॥२१४॥

चेत्तदा तन्मते हिंसानामकः पदार्थः कुत्र स्थितः ? यतो न कश्चित्कञ्चिन्नाशयितुं शक्तः, कथमिति चेद्, वस्तु स्वयं विनाशप्रकृतिकमिति ॥ ३३ ॥

सन्तानविचित्रताया जनको हिंसको न भवत्येव–

'न च सन्तानभेदस्य, जनको हिंसको भवेत् ।
सांवृतत्वादजन्यत्वाद्, भावत्वनियतं हि तत् ॥ ३४ ॥

टीकाः-(पूर्वपक्षः बौद्धः) पदार्थमात्रं हि स्वतः सततमुत्पादविनाशशालि, एवं रीत्या घटादिद्रव्यस्य सजातीयवस्तुनि 'घटः, घटः, घटः, इत्यादिरूपज्ञानधारा प्रचलति, यदा दण्डादिना स हन्यते, तदा विजातीयठिक्करिका, इत्यादिरूपा ज्ञानधारा प्रचलति, घटादिविषयकसजातीयज्ञानधारा त्रुटयति, तादृशविजातीयसन्तानविशेषं य उत्पादयति स हिंसक इत्युच्यतेऽर्थात् सदृशधाराभेदको विसदृशधाराजनक एव हिंसक उच्यते, तादृशविजातीयधारोत्पाद एव हिंसेत्यर्थः ।

(उत्तरपक्षः) नेद कथनं सम्यक् तथाहि=सन्तानभेदस्तु सांवृतो (काल्पनिकः) भवति किञ्चैको लुब्धकः सूकरं हिनस्ति, स सूकरो मृत्वा मनुष्यो भवति, युष्मन्मत एवं ज्ञाप्यते च लुब्धकः सूकरस्य सजातीयधारया भेदं कृत्वा, मनुष्यविजातीयधारामुत्पादयत्यतो लुब्धको हिंसको जातः, परन्तु लुब्धकादिः सूकरस्य धारां त्रोटयित्वा, मनुष्यस्य विजातीयधारामुत्पादयितुं न शक्नोति, यतो भावात्मकं

वस्त्वेवोत्पद्यते. मन्तानस्तु काल्पनिकः, अतः शशशृङ्गवदसन्नस्ति, स कथमुत्पद्यते ? अर्थाद् यःसांवृतः सन् जायते यतो भावात्मकमेव वस्तु जायते ॥ ३४ ॥

एतदेव समर्थयन्नाह—

'नरादिक्षणहेतुश्च, सूकरादेर्न हिंसकः ।
सूकराऽन्त्यक्षणेनैव, व्यभिचारप्रसङ्गतः ॥ ३५ ॥

टीकाः—किञ्च सूकरो मृत्वा मनुष्यादिरूपेणोत्पद्यते तदा सूकरः ३, इतिरूपमजातीयधारां त्रोटयित्वा नरः ३, इति विजातीयधारा लुब्धकेनोत्पादिताऽतो लुब्धको हिंसकःकथ्यते. एवं कथिते सति तस्यार्थ एवागतो यतः सूकरादेर्हिंसकःस कथ्यते, नरादिक्षण (पदार्थ) स्य हेतु र्भवेत् , अथैवं रीत्या सूकरस्याऽन्त्यक्षणोऽस्ति सोऽपि नरादेर्भाविप्रथमक्षणस्य हेतुरस्ति; तदा तस्याऽपि हिंसकत्वापत्तिरर्थाद् , हिंसकत्वं सूकराऽन्त्यक्षणे व्यभिचरितं, एवंभूते नरादिरूपस्वस्य सूकरादिरूपः स्व एव हिंसकःस्यात्ततो नरादिक्षणस्य हेतुभूतो लुब्धको हिंसको न कथ्यते ॥ ३५ ॥

तदेव विशेषेण निरूप्यते—

'अनन्तरक्षणोत्पादे, बुद्धलुब्धकयोस्तुला ।
नैवं तद्विरतिः क्वाऽपि, ततः शास्त्राद्यसङ्गतिः ॥ ३६ ॥

टीका:—यदि पूर्वोक्ताऽऽपत्तय इष्टापत्तयः स्युस्तदा युष्माकं भगवान् बुद्धोऽपि सूकरहिंसक आपद्यते, यतः सूकरस्य निजातीयधारारूपनरादिक्षणोत्पादे यथा तत्क्षणपूर्ववर्त्ती लुब्धकोऽस्ति अतः स हेतुर्जातः, तथा तत्क्षणपूर्ववर्ती भगवान् बुद्धोऽप्यस्ति, बुद्धलुब्धकयोर्द्वयोः कोऽपि विशेषो नास्ति, एवं बुद्धोऽपि सूकरस्य हिंसको भविष्यति एतदेव युष्माकमिष्टं नास्त्येव, अर्थाद् युष्माभिः केनाऽपि हेतुना हिंसात्मकः पदार्थः कथमपि न निश्चीयते, यदा हिंसा न सिद्धा, तदा हिंसाविरतिरूपाऽऽहिंसा कथं निरूप्यते ? तथा युष्मदीयशास्त्रोक्तं 'सव्वेऽस्य संति दण्डानां सव्वेसि जीवियं प्रियं, अत्तानं उपमं कत्तानेव हन्ने न घातये इति शास्त्राद्यसंगतिरेव स्यात् , अर्थादेकान्तानित्यवादेऽपि हिंसा न सम्भवति तदाऽहिंसायाः कुतः सम्भवः ? ॥ ३६ ॥

अहिंसाया अभावेऽवशिष्टसत्यादीनि कुतः ?

'घटन्ते न विनाऽहिंसां, सत्यादीन्यपि तत्त्वतः ।
एतस्या वृतिभूतानि, तानि यद् भगवान् जगौ ॥ ३७ ॥

टीका:—एवं यदाऽहिंसा न घटते, तदा शेषसत्यादिव्रतानि न घटन्ते, यत एतानि सत्यादिव्रतान्येतस्या अहिंसाया वृतिभूतानि रक्षणकारकाणि सन्तीत्येवं भगवान् जगौ—कथयामास, अर्थादहिंसाया अनुपपत्तौ सत्यां शेषसत्यादिव्रतानामनुपपत्तिः ॥ ३७ ॥

—जैनेन्द्रशासनेऽहिंसादि सर्वं तत्त्वतो घटते—

'मौनीन्द्रे च प्रवचने, युज्यते सर्वमेव हि ।
नित्यानित्ये स्फुटं देहाद् भिन्नाऽभिन्ने तथाऽऽत्मनि ॥३८॥

टीकाः—एवमेकान्तनित्यवादे वैकान्ताऽनित्यवादेऽहिंसादि न घटते, परन्तु अहिंसादि सर्वमेव मौनीन्द्रप्रवचने—जिनेन्द्रचन्द्रशासन एव युज्यते यतो नित्यानित्य आत्मनि तथा देहाद् भिन्नाऽभिन्ने आत्मनि स्फुटमहिमादि सर्वं जिनेन्द्रशासने घटत एव ॥३८॥

—आत्मा कथं नित्यो वाऽनित्यो वा कथमुभयरूपः ?—

'आत्मा द्रव्यार्थतो नित्यः, पर्यायार्थाद् विनश्वरः ।
हिनस्ति हन्यते तत्तत्–फलान्यप्यधिगच्छति ॥३९॥

टीकाः—पूर्वपक्षः=एक एवाऽऽत्मा नित्योऽपि स्यादनित्यश्चापि स्यात् कथं ? एकस्मिन् वस्तुनि विरोधिधर्मद्वयं कथं घटेत ? उत्तरपक्ष =एकस्मिन् वस्तुनि विरोधिधर्मद्वयं, एकयाऽपेक्षया न घटतेऽपि तु भिन्नभिन्नाऽपेक्षातोऽवश्यं विरोधिधर्मद्वयं घटते एव तथाहि=आत्मा, द्रव्यार्थिकनयाऽपेक्षया नित्योऽस्ति, पर्यायार्थिकनयाऽपेक्षया चाऽनित्योऽस्ति, आत्मनि तत्तन्मनुष्यत्वादिपर्याया उत्पद्यन्ते, अतस्तत्तन्मनुष्यत्वादिपर्यायस्वरूपेणाऽऽत्मा विनश्यति, तस्मादात्माऽनित्योऽस्ति परन्तु तस्मिन् समयेऽपि शुद्धात्मद्रव्यम ॥२१८॥

विनश्यदेव तिष्ठति, तस्मादात्मा नित्योऽप्यस्ति, अर्थादात्मनि कस्यचिद् हिंसाक्रियापर्याय उत्पद्यते (आत्मा हिनस्ति कश्चित्) 'आत्मा हन्यते केनचित्'—आत्मनि केनचित् घातनद्वारा नाशपर्यायोऽप्युत्पद्यते, किञ्चैषोऽनित्याऽऽत्मा, हिंसाऽऽदिजन्यानि तत्तन्नरकादिदुर्गत्यादिफलान्यधिगच्छति—प्राप्नोति ॥३९॥

—नित्याऽनित्यवादे विशिष्टानुभव एव साक्षी—

'इह चानुभवः साक्षी, व्यावृत्त्यन्वयगोचरः ।
एकान्तपक्षपातिन्यो, युक्तयस्तु मिथो हताः ॥४०॥

टीकाः—अस्मिन पूर्वकथितविषये विशिष्ट—व्यावृत्त्यन्वयविषयकोऽनुभवः साक्षी—साक्षाद्द्रष्टा, अर्थात् प्रत्यक्षेणैवैवं दृश्यते हि भूतकालाऽवच्छेदेनैक आत्मा, बालपर्यायवानासीत , सोऽद्य बालपर्याया-न्मुक्तो भूत्वा (व्यावृत्त्या) युवपर्यायवान वर्त्तते, एवमत्र बालपर्यायवत्त्वविशिष्टस्यात्मनो नाशो दृश्यते, तथाप्युभयावस्थायां, आत्मद्रव्यन्त्वस्त्येव, (अन्वयः) तस्मादात्मनस्तु नाशो न दृश्यते, एकान्तपक्षपाति-न्यो युक्तयस्तु मिथः—परस्परं हताः—असङ्गता भूत्वा हता इव हताः ॥४०॥

—जैनदर्शने हिंसा कालपनिको न परन्तु सहेतुकाऽस्ति—

'पीडाकर्तृत्वतो देह—व्यापत्त्या दुष्टभावतः ।
त्रिधा हिंसाऽऽगमे प्रोक्ता, न हीत्थमपहेतुका ॥४१॥

टीकाः-शङ्का=जैनदर्शनेऽप्याऽऽत्मनः सर्वथा नाशस्तु नास्त्येव, ततो वास्तवी हिंसा कथं सम्भवेत् ? समाधानं=जिनागमे त्रिधा हिंसा कथिता वर्तते तथाहि= (१) पीडाकर्तृत्वतः=अन्येषां पीडाकरणतो हिंसा भवति (२) देहव्यापत्त्या=देहस्य विनाशेन हिंसा भवति (३) दुष्टभावतः=अहमन्यान् हन्यामिति हिंसात्मकदुष्टभावतो हिंसा भवति—

एषा दर्शिता त्रिविधा 'नहीत्थमपहेतुका' एवंप्रकारा हिंसा न काल्पनिकी परन्तु सहेतुका-हेतुजन्याऽस्ति ।४१॥

-हन्तु हिंसनीयहिंसायाः पापं कथं लगेत् ?-

'हन्तु जाग्रति को दोषो, हिंसनीयस्य कर्म्मणि ।
प्रसक्तिस्तदभावे चाऽन्यत्राऽपीति मुधा वचः ॥४२॥

टीकाः-हिंसनीयस्य-मर्तुः कर्मणि जाग्रति-उदयमागते सति स म्रियते, तदा हिंसकस्य हिंसायाः पापं कथं लगेत् यतः स तु तस्य कर्मणा प्रेरितत्वात्परतन्त्रः, यदि विना कर्मोदयमेको जनो म्रियेत, तस्य च हिंसाऽन्येषां सर्वेषामहिंसनीयजीवानां हिंसायाः पापं तस्य कथं न लगेत् ? यद्येवं स्यात्तदा हिंसाया असंभावना कुत्रचिदपि न तिष्ठेत् , ततो हिंसाया असम्भावनाप्रतिपादकं वचो निष्फलं भवेदिति ॥४२॥

-हिंसकहिंसापदार्थस्य सिद्धिः-

'हिंस्यकर्मविपाके यद्,-दुष्टाशयनिमित्तता ।
हिंसकत्वं न तेनेदं, वैद्यस्य स्याद्रिपोरिव ॥४३॥

टीकाः-यदा मर्त्तुः (हिंस्यस्य) आयुष्कर्मणोऽन्तिमदलिकानामुदयःस्यात्तदा हिंसकस्य मनसि 'अहमेतं हन्या'मिति दुष्टाशय उत्पद्यते. ततश्च तं हिनस्ति, अस्यां हिंसायां मुख्यं कारणं मरणोन्मुखव्यक्तेः कर्मोदयोऽस्तु परन्तु तस्यां हिंसायां हिंसकव्यक्ति दुष्टाशयद्वारा निमित्तकारणमवश्यं भवति, एतां हिंसां प्रति यो निमित्तभावः स एव हिंसकतेति कथ्यते, हिंसायां निमित्तभूतो जीवो हिंसकः कथ्यते, यदैवं दुष्टाशयद्वारा जायमानहिंसायां निमित्तभूतो हिंसक उच्यतेऽत एव रिपुः-शत्रु हिंसकः कथ्यते परन्तु तद्वद् वैद्यो हिंसको न कथ्यते, तद् वैद्यद्वारा कस्यचिदेकस्य जनस्य हिंसाऽपि भवेत्तथापि वैद्यराजस्य मनसि तद् व्यक्ते हिंसां कर्तुं दुष्टाभिप्रायो नास्ति, अर्थाद् दुष्टाशयप्रयुक्तहिंसायां स निमित्तकारणं न भवति ॥४३॥

-श्री जैनशासन एव हिंसानिवृत्तिरूपाऽहिंसा कथं घटते ?-

'इत्थं सदुपदेशादेस्तन्निवृत्तिरपि स्फुटा ।
सोपक्रमस्य पापस्य, नाशात् स्वाशयवृद्धितः ॥४४॥

टीकाः=अथाऽत्राऽहिंसां साधयति, तथाहि=आत्मा हि परिणामी-पर्यायवानस्ति, अतस्तस्य 'हिंसा'

सञ्जाता, तथा (१) हिंसायाः, तत्स्वरूपस्य तत्फलस्य च सदुपदेशादितः, आदिना (२) 'सोपक्रमस्य पापस्य नाशात्'=अपवर्त्तनीयानां चारित्रमोहनीयपापकर्मणां नाशात् (३) अहं कश्चिन्न हन्या' मिति स्वीयशुभाशयवृद्धितः, हिंसाया निवृत्तिरपि भवति, एषा हिंसानिवृत्तिरूपाऽहिंसाऽस्ति ॥४४॥

–मोक्षरूपवृक्षस्य बीजमहिंसा–

'अपवर्गतरोर्बीजं, मुख्याऽहिंसेयमुच्यते ।
सत्यादीनि व्रतान्यत्र, जायन्ते पल्लवा नवाः ॥४५॥

टीकाः–'अपवर्गतरो बीजं'=मोक्षरूपवृक्षस्य बीजभूता, 'मुख्या'=निरुपचरितधर्मविशेषरूपेयमहिंसोच्यते, अहिंसारूपबीजतो जातानि शेषाणि सत्यादीनि व्रतानि, अत्राऽहिंसारूपवृक्षे नवाः पल्लवा इव जायन्ते-उत्पद्यन्ते यावत् स्फुटन्ति ॥४५॥

–श्री जैनशासन एव शुद्धाऽहिंसासम्भवस्तथाऽहिंसाया अनुबन्धादि-शुद्धिरप्यत्रैव वास्तवी–

'अहिंसासम्भवश्चेत्थं, दृश्यतेऽत्रैव शासने ।
अनुबन्धादिसंशुद्धि-रप्यत्रैवाऽस्ति वास्तवी ॥४६॥

टीकाः–'अत्रैव शासने चेत्थमहिंसासम्भवः'=जैनेतरमते शुद्धाहिसाया असम्भवं दर्शयित्वा, जैन-

शासन एव शुद्धाहिंसासम्भवः साधितः, अहिंसाया अनुबन्धादिसंशुद्धिरत्रैव-श्रीजैनशासन एव वास्तवी-सत्या, नाऽन्यत्र ॥४६॥

—सम्यग्दृष्टे र्महात्मनो ज्ञानयोगेन हिंसा न हिंसाऽनुबन्धिनी—

'हिंसाया ज्ञानयोगेन, सम्यग्दृष्टे र्महात्मनः ।
तप्तलोहपदन्यास–तुल्याया नाऽनुबन्धनम् ॥४७॥

टीकाः—ये सम्यग्दृष्टयो ज्ञानयोगेन महात्मानः श्रावकाद्याः सन्ति ते संसारसत्कं यत् किञ्चिद्गृहनिर्माणादि कार्यं कुर्व्वन्ति, तद् भृशं दुःखितहृदयेन, यद्यत्यन्तमावश्यकं तदा तप्तलोहे पादस्थापनवत्, अन्तरेच्छां विना कृताया हिंसाया अनुबन्धो (अशुभकर्मपरम्परा) न भवति, दुष्टाशयरूपहिंसाऽत्र नास्ति, परपीडाकरणपरदेहविनाशरूपहिंसाद्वयमस्ति ॥४७॥

—यतनाभक्तिशालिनां जिनपूजाऽऽदिकर्मणि अहिंसाया अनुबन्धः—

'सतामस्याश्च कस्याश्चिद्, यतनाभक्तिशालिनाम् ।
अनुबन्धो ह्यहिंसाया, जिनपूजादिकर्मणि ॥४८॥

टीकाः—जीवान् प्रति यतनावतां जिनेश्वरान्प्रति भक्तिभावशालिनां 'मतां' सम्यग्दृशामन्तरात्मनां

जिनपूजादिकर्मणि 'अस्याश्च कस्याश्चित्'=कस्याश्चिद्, हिंसायाः सद्भावेऽपि तेषां गृहाऽऽरम्भादे हिंसावन्न निरनुबन्धमात्रा, अपितु सा हिंसा, अहिंसाया अनुबन्धं–स्वरूपशुभकर्मपरम्परां जनयत्यर्थादेषां हिंसाऽप्यहिंसाफलानुसन्धानवत्येवेति ॥४८॥

– मिथ्यादृष्टेरज्ञानशक्तियोगेन, हिंसाऽहिंसे हिंसाऽनुबन्धिन्यौ स्तः—

'हिंसाऽनुबन्धिनी हिंसा, मिथ्यादृष्टेस्तु दुर्मतेः ।
अज्ञानशक्तियोगेन, तस्याऽहिंसाऽपि तादृशी ॥४९॥

टीकाः–मिथ्यादृष्टेस्तु दुर्मते हिंसा, हिंसाऽनुबन्धिनी'=एकान्तवादाभिनिविष्टबुद्धेर्मिथ्यादृष्टेर्हिंसा, हिंसाऽनुबन्धविशिष्टा भवति, 'अज्ञानशक्तियोगेन'=मिथ्याज्ञानमहितशक्तियोगेन 'तस्य'=मिथ्यादृष्टेः 'अहिंसाऽपि तादृशी' दृश्यमानाहिंसाऽपि हिंसानुबन्धविशिष्टा भवतीति ॥ ४९ ॥

निह्नवादीनामहिंसाऽपि हिंसानुबन्धिनी–

येन स्यान्निह्नवादीनां दिविषद्दुर्गतिः क्रमात् ।
हिंसैव महती तिर्यङ्-नरकादि-भवान्तरे ॥ ५० ॥

टीकाः–येन निह्नवादीनां दिविषद्दुर्गतिः क्रमात्'=यस्मात् कारणात, निह्नवानामभव्यादीनां साधुजीवनस्य याऽहिंसाऽस्ति, साऽपि देवलोके किल्बिषिकादिजीवनस्य दुःखदां गतिं प्रापयति ततःक्रमात्, 

अग्रेतनभवेषु तिर्यक्त्वनरकत्वादिदुर्गतिमर्पयति, एष सर्वोऽशुभगतेरनुबन्धस्तेषामहिंसातः प्राप्तः, अशुभाऽनुबन्धपातिनी साऽहिंसा, अहिंसैव नास्ति परन्तु महती हिंसैवाऽस्ति ॥ ५० ॥

**—अप्रमत्तसाधूनां हिंसाऽप्यहिंसाऽनुबन्धिनी—**

'साधूनामप्रमत्तानां सा चाऽहिंसाऽनुबन्धिनी ।
हिंसाऽनुबन्धविच्छेदाद् गुणोत्कर्षो यतस्ततः ॥ ५१ ॥

टीकाः–'साधूनामप्रमत्तानां सा चाऽहिंसाऽनुबन्धिनी'=प्रमादरहितानां सोपयोगयतनावतां नद्युत्तारादिक्रियायां या हिंसाऽस्ति साऽहिंसाया अनुबन्धं कारयति, हिंसाऽनुबन्धविच्छेदाद् गुणोत्कर्षो यतस्ततः तेषां तयाऽहिंसया हिंसाऽनुबन्धस्य विच्छेदो भवति यतस्तयाऽहिंसया गुणस्योत्कर्षो भवतीति ॥ ५१ ॥

**–मुग्धानां सा हिंसा कदाचिदपि, अहिंसाऽनुबन्धिनी न भवति–**

मुग्धानामियमज्ञत्वात् , साऽनुबन्धा न कर्हिचित् ।
ज्ञानोद्रेकाप्रमादाभ्या-मस्या यदनुबन्धनम् ॥ ५२ ॥

टीकाः–ज्ञानोद्रेकाप्रमादाभ्यामस्या यदनुबन्धनम्=हिंसाऽप्यहिंसाऽनुबन्धिनी तदैव भवेद् यदा तया हिंसया सह विशिष्टकोटिकं ज्ञानं प्रमादाभावश्च युज्येयातां; मुग्धानामियमज्ञत्वात् साऽनुबन्धा न कर्हिं-

॥२२५॥

चित=ये मुग्धाः सन्ति तेऽज्ञानवन्तः, अतस्तेषां हिंसा कदाचिदपि अहिंसाऽनुबन्धविशिष्टा न भवतीति ॥५२॥

**—एकस्यामपि हिंसायामहिंसायामुक्तं सुमहदन्तरम्—**

एकस्यामपि हिंसाया-मुक्तं सुमहदन्तरम् ।
भाववीर्यादिवैचित्र्या-दहिंसायां च तत्तथा ॥ ५३ ॥

टीका.—एकस्यामपि हिंसायामुक्तं सुमहदन्तरम्'=पूर्वोक्तवर्णनत इदं फलितं भवति यदेकविधां जीव हिंसामनेके जीवाः कुर्वन्ति, तथाऽपि तया सर्वया हिंसया जायमाने कर्मबन्धे च तज्जन्यफलविशेषेऽत्यन्तं महदन्तरमापतति यतस्तत्र चित्तस्य दुष्टक्लेशस्याऽसंख्येयभेदास्तथा वीर्यादेरल्पाऽधिकबलतीव्रतामन्दताऽऽदिज्ञाताऽज्ञातादयोऽनेके हेतवः सम्भवन्ति, अहिंसायामपि समीचीना एते एवाऽनेके भेदा आपतन्ति ॥५३॥

**—हिंसाऽहिंसयोर्विविधबन्धमपेक्ष्य भेदास्तथा विपाकमपेक्ष्य भेदाः पतन्ति—**

सद्यः कालान्तरे चैतद्-विपाकेनाऽपि भिन्नता ।
प्रतिपक्षाऽन्तरालेन, तथाशक्तिनियोगतः ॥ ५४ ॥

टीकाः—यथैकविधाया अहिंसाया बन्धे भाववीर्यादिवैचित्र्याद् भेदाः पतन्ति, कस्यचित्सद्यः-तत्कालं फलं भवति, कस्यचिच्च कालान्तरे भवति, एवं भवने, एकं कारणमेतदस्ति, यत्, हिंसाजनितकर्मबन्धाऽ-

॥२२६॥

नन्तरमहिंसापालनतः, तस्याः फलमपि विपाकमानयेदनन्तरं पूर्वकृतहिंसायाः फलोदयः स्याच्चदा हिंसायाः फलं कालान्तरे आगतं, प्रतिपक्षस्यान्तराले व्यवधानं न स्याच्चदा तस्या हिंसायाः फलं प्रागागच्छेत् इदं वस्त्वहिंसायामपि ज्ञेयम्, अन्यत्कारणमप्यस्ति यद्, हिंसाऽऽदेः कर्मबन्धाऽवसरे बध्यमानरसोऽत्यन्तोग्रतावान्न भवेच्चदा कालान्तरे फलं दद्यात् ॥ ५४ ॥

–जिनपूजाऽऽदिक्रियाहेतुतो जायमाना हिंसाऽप्यहिंसा–

'हिंसाऽप्युत्तरकालीन-विशिष्टगुणसङ्क्रमात् ।
त्यक्ताऽविध्यनुबन्धत्वा-दहिंसैवाऽतिभक्तितः ॥ ५५ ॥

टीकाः–जिनपूजादिक्रियायाः कारणेन जायमाना या पुष्पादिजीवहिंसाऽस्ति, तस्यां स्वरूपतो जीवहिंसायां सत्यामपि वस्तुतस्तु साऽहिंसैवाऽस्ति, यत एतस्या हिंसाया अनन्तरं जिनेश्वरदेवानामात्यन्तिकमहाभक्त्या याऽपूर्वा पूजा भवति, तेन कारणेन, भक्तेरुच्छलत्तरङ्गे जायमानोऽविधिरपि निरनुबन्धोऽशुभकर्मानुत्पादको भवति, अतोऽहिंसा कथ्यते, अतिभक्तितो 'हिंसाऽप्युत्तरकालीनविशिष्टगुणसङ्क्रमादहिंसैव'=तस्मादतिभक्त आत्मनि शुद्धसम्यक्त्वादिविशिष्टगुणसङ्क्रमणतो हिंसाऽप्यहिंसाफलं ददात्येवेति ॥५५॥

–एवंरीत्या भङ्गशतभेदोपेताऽहिंसावर्णनं यत्र तज्जिनशासनं प्रमाणम्—

'इद्दगभङ्गशतोपेताऽ-हिंसा यत्रोपवर्ण्यते ।
सर्वांशपरिशुद्धं तत्, प्रमाणं जिनशासनम् ॥ ५६ ॥

टीकाः—एवं रीत्याऽहिंसाया भङ्गाः-भेदाः शतशः पतन्ति, एतद्भङ्गशतपूर्विकाऽहिंसायाः, तदनुबन्धादेर्यज्जिनशासने सुचारुरूपेण वर्णनं कृतं, तत्सर्वथा परिशुद्धं जिनशासनं प्रमाणमेव, इदमत्र हृदयम, सम्भवानुबन्धादिविचारणया, शुद्धाऽहिंसा, दर्शितपूर्वा, सा शुद्धाऽहिसा जिनागम एवाऽस्ति, तस्माज्जिनशासनमेव प्रमाणभूतं, अत्राऽधिकारे दशमे श्लोके योऽन्योऽन्याश्रयदोष उद्भावितः स दूरीकृतः, श्रीमज्जिनशासने प्रामाण्यस्वीकार इति विषयःस्थिरीकृतः ॥ ५६ ॥

सम्यक्त्वस्याऽऽस्तिक्यं परमं चिह्न–

'अर्थोऽयमपरोऽनर्थ-इति निर्द्धारणं हृदि ।
आस्तिक्यं परमं चिह्नं सम्यक्त्वस्य जगुर्जिनाः ॥ ५७ ॥

टीकाः—एषा शुद्धाऽहिंसैव तत्त्वमस्ति, एतस्य श्रद्धानमेव सम्यक्त्वमस्ति, सम्यक्त्वस्य मुख्यं लक्षणमास्तिक्यमेव, 'आस्तिक्यं=जिनोक्तवचनमेवाऽर्थरूपं, तदेव परमार्थरूपमस्ति, शेषं सर्वं निरर्थकमिति हृदये सर्वथा निर्धारणं-निश्चलनिश्चयः ॥ ५७ ॥

॥२२८॥

**सम्यक्त्वस्थिरताप्राप्तिवर्णनम्—**

शमसम्वेगनिर्वेदा-नुकम्पाभिः परिष्कृतम् ।
दधतामेतदच्छिन्नं, सम्यक्त्वं स्थिरतां व्रजेत् ॥ ५८ ॥

टीकाः-शमसम्वेगनिर्वेदानुकम्पारूपैः कार्यैः समलङ्कृतं, 'एतदास्तिक्यमच्छिन्नं'=अविच्छेदेन-सातत्येनाऽऽस्तिक्यं दधतां जनानां सम्यक्त्वं स्थिरतां व्रजेत्-स्थिरं भवेदर्थात्, शमसम्वेग--निर्वेदानुकम्पाभिः सहितमास्तिक्यं यदि सततं वर्त्तमानं तदा सम्यक्त्वं निश्चलं भवति नाऽन्यथेति भावः ॥ ५८ ॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां सम्यक्त्वनामको द्वादशोऽधिकारः समाप्तः ॥२८३॥

**—अथ मिथ्यात्वत्यागनामकस्त्रयोदशोऽधिकारः—**

**—मिथ्यात्वत्यागः—**

मिथ्यात्वत्यागतः शुद्धं, सम्यक्त्वं जायतेऽङ्गिनाम् ।
अतस्तत्परिहाराय, यतितव्यं महात्मना ॥ १ ॥

टीकाः-जीवानां मिथ्यात्वस्य त्यागतः शुद्धं सम्यक्त्वं जायते-भवति, अतस्तत्परिहाराय'=अस्मात्-

कारणात् तन्मिथ्यात्वस्य परिहारार्थं महात्मना यतितव्यम्'=उत्तमाऽऽत्मना, सर्वथा प्रयत्नः कर्त्तव्यः ॥१॥

मिथ्यात्वस्य षट्स्थानानि दर्श्यन्ते—

'नास्ति नित्यो न कर्त्ता च, न भोक्ताऽऽत्मा न निर्वृतः ।
तदुपायश्च नेत्याहु-मिथ्यात्वस्य पदानि षट् ॥ २ ॥

टीका:—(१) नास्ति जीव इति प्रथमं पदम्=पञ्चभिर्भूतैर्व्यतिरिक्तः, भवान्तरगामी, कोऽपि स्वतन्त्र आत्मा नास्तीति चार्वाकमतम् ।

(२) आत्मा नित्यो नेति द्वितीयपदम्=आत्मा त्वस्ति किन्तु नित्यो नास्ति क्षणिकोऽस्ति, इति बौद्धमतम्.

(३) आत्मा कर्त्ता नेति तृतीयं पदम्=आत्माऽस्ति, नित्योऽस्ति, परन्तु कर्मकर्ता नास्तीति, सांख्यमतम्.

(४) आत्मा भोक्ता नेति चतुर्थं पदम्=नित्याऽऽत्मा नास्ति, कर्त्ताप्यस्ति, भोक्ता नास्ति यतः कार्यं कृत्वा क्षणान्तरे विनश्यतीति बौद्धमतम् , अथवा नित्याऽऽत्मा, कर्त्ता नास्ति, परन्तु भोक्ताऽपि नास्ति, प्रकृतिवदात्मा कर्त्ता, भोक्ता तु भवितु नार्हतीति साङ्ख्यमतम् .

(५) 'आत्मा न निर्वृतः' इति पञ्चमं पदम्=आत्मा, कर्मणा न बध्यते, ततः का वार्ता मोक्षस्य ? अथवा रागादिस्वरूपोऽयमात्माऽस्ति, आत्मा, नित्योऽस्ति, ततो रागादयोऽपि नित्याः, अतो रागादित आत्मनो मोक्षो नास्तीति याज्ञिकमतम् ।

(६) तदुपायश्च नेति षष्ठम्=मोक्षस्तु विद्यते, परन्तु तदुपायः-मोक्षस्योपायो नास्ति, कञ्चिदपि हेतुं विना-निर्हेतुकोऽकस्मादेव मोक्षो भवतीति माण्डलिकमतम् ॥ २ ॥ इति मिथ्यात्वस्य षट् पदानीति.

—आत्मा नास्तीत्यादिषट्पदैः शुद्धव्यवहारविलङ्घनम्—

'एतैर्यस्माद् भवेच्छुद्ध-व्यवहारविलङ्घनम् ।
अयमेव च मिथ्यात्व-ध्वंसी सदुपदेशतः ॥ ३ ॥

टीकाः—आत्मा नास्तीत्यादिभिः पूर्वोक्तैः षट्पदैर्दानादिविषयकोपदेश-विषयकशुद्ध व्यवहारोल्लङ्घनमापद्येत, यतो यद्यात्मादिर्नास्ति तदा दानादिका धर्माः किमर्थं ? तदुपदेशोऽपि किमर्थकः ? 'अयमेव च मिथ्यात्वध्वंसी सदुपदेशतः'=अयमात्मैव सन्-अस्ति स नित्योऽस्ति, कर्मणःकर्त्ता, कर्मफलभोक्ता स निर्वृतः; निर्वृतेरुपायोऽस्तीति सद्रूपपदानां योजना स्यात्तदा दानाद्याद्युपदेशादिशुद्धव्यवहारा युक्तियुक्ताः स्युः, ततो जीवाः शुद्धव्यवहारं पालयेयुः, ततस्ते मिथ्यात्वध्वंसिनो भवेयुः, इदमत्र हृदयम्=आत्मा नास्तीत्यादिषट्पदानि, दानादिकशुद्धव्यवहारविध्वंसद्वारा मिथ्यात्वजनकानि, आत्माऽस्तीत्यादिसद्रूपषट्पदानि दानादिशुद्धव्यवहारोपपादनद्वारा मिथ्यात्वप्रध्वंसकानीति ॥ ३ ॥

— पूर्वोक्तशुद्धव्यवहारविलोपविषय स्पष्टयति —

'नास्तित्वादिग्रहे नवो-पदेशो नोपदेशकः ।
ततः कस्योपकारः स्यात् सन्देहादिव्युदासतः ॥ ४ ॥

टीकाः—सर्वथाऽऽत्मा, नास्तीत्यादिविषयककदाग्रहे सति, 'नवोपदेशो नोपदेशकस्ततः'=उपदेशकोपदेशौ विना, भवभ्रमणं कुर्वत्सु जीवेषु क उपकारः सम्भवेत्, यत उपकारस्तु तत्तज्जीवविषयकान्, आत्मादिसम्बन्धितान् संशयान् निराकर्तुमुपदेश एव साधीयानस्ति ॥ ४ ॥

– निश्चयनयाऽभिप्रायदर्शनपूर्वकं व्यवहारनयाऽभिप्रायदर्शनम् –

'येषां निश्चय एवेष्टो, व्यवहारस्तु सङ्गतः ।
विप्राणां म्लेच्छभाषेव, स्वार्थमात्रोपदेशनात् ॥ ५ ॥
यथा केवलमात्मानं, जानानः श्रुतकेवली ।
श्रुतेन, निश्चयात्सर्वं, श्रुतं च व्यवहारतः ॥ ६ ॥
निश्चयाऽर्थोऽत्र नो साक्षाद्वक्तुं केनाऽपि पार्यते ।
व्यवहारो गुणद्वारा, तदर्थाऽवगमक्षमः ॥ ७ ॥

प्राधान्यं व्यवहारे चेत् , तत्तेषां निश्चये कथम् ।
परार्थस्वार्थते तुल्ये, शब्दज्ञानात्मनोर्द्वयोः ॥ ८ ॥

टीका:-'येषां निश्चय एवेष्टः'=निश्चयनयवादिनां निश्चयनय एवेष्टो-अभिमतः, व्यवहारो नाभिमतः, व्यवहारस्तु विप्राणां म्लेच्छभाषेव स्वार्थमात्रोपदेशनात् सङ्गतः'=व्यवहारनयस्तु निश्चयार्थमात्रस्योपदेशन-द्वारा सङ्गतः-उपयोगी स्यात् , यथा ब्राह्मणो म्लेच्छभाषां न भाषेते' ति वचनाद् , विप्रा म्लेच्छभाषां न भाषन्ते, तथाऽपि स्वभाषया=संस्कृतभाषया सम्मुखस्थम्लेच्छव्यक्ति स्वाऽभिप्रायं विज्ञापयितुं न शक्नुवन्ति तदा स्वाभिप्राय व्यञ्जयितुं म्लेच्छभाषोपयोगं कुर्युः, एवं व्यवहारनयो, निश्चयार्थविज्ञापनपरत्वेनोपयोगी भवेदिति स्वपक्षसमर्थनार्थनिश्चयवादी सोदाहरणं वदति यद् , श्रुतकेवलीत्युक्ते कोऽर्थः ? निश्चयो वक्तीदं 'यथा केवलमात्मानं जानानः श्रुतकेवली श्रुतेन''=श्रुतज्ञानबलेन यथा केवलं-सम्पूर्णं, आत्मानं यो जानाति स श्रुतकेवलीत्युच्यते अथ श्रुतकेवलिपदार्थस्य यदिदं शुद्धस्वरूपमस्ति तत्प्रतिपादयितुमशक्यम् यतः सम्पूर्ण एक आत्माऽनेन ज्ञात इति कया रीत्या कथयितुं शक्यते अत आत्मनस्तद्गुणस्वरूपश्रुतज्ञानस्य भेदं कृत्वा, व्यवहारनय एवं वदति य आत्मा सर्वश्रुतं जानाति, स श्रुतकेवलीति कथ्यते, अथैतद्भेदपरं प्रतिपादनं तु शक्यम् , अर्थादनया रीत्या निश्चयार्थरूपश्रुतकेवलित्वप्रतिपादको व्यवहारो भवति, तस्मादेतावदपेक्षया व्यवहारनस्य प्राधान्यं मन्तव्यम् , निश्चयनयो वदति=वस्तुतस्तु श्रुतज्ञानस्य भेदं कृत्वा तच्छ्रुतज्ञानगुणद्वारा

स व्यवहारनयोः निश्चयार्थप्रतिपादनपरोऽस्तु तावत् , तथाऽपि श्रुतज्ञानमपि विचार्यमाणं सद् वस्तुत आत्मैव यतो गुणस्तु गुणिनः स्वरूपमेव, किञ्च तत्प्रतिपादनं निश्चये पर्यवस्यति, अन्ततो गत्वा व्यवहारो निश्चयपर्यवसायीत्यतो निश्चयो हि मुख्यो न व्यवहारः, व्यवहारनयवादी=यद्येवं व्यवहारनयं सर्वथा गौणरूपेणाऽपि न स्वीकुर्यात्तदा युष्मन्मते निश्चयनये प्राधान्यं कथमागच्छेत् ? यतः प्राधान्यं गौणसापेक्षं, गौणश्चेत्तदा तदपेक्षयेदं प्रधानं वाच्यम् , यदि व्यवहारो गौणोऽपि न भवेत्तदा निश्चयः कस्याऽपेक्षया प्रधानो वाच्यः स्यात् ? किञ्च ज्ञानाऽऽत्मकनिश्चयनयस्य यावन्तः स्वार्थाः सन्ति ते सर्वे, शब्दात्मकव्यवहार नयस्य पदार्थाः, अनयैव रीत्या व्यवहारनयस्य यावन्तः स्वार्थाः सन्ति ते सर्वे निश्चयनयस्य परार्थाः एवमेकैकस्य स्वार्थाश्च परार्थास्तुल्या भवन्ति, अथ यो निश्चयनयः स्वस्थाने प्रधानो भवति, तत्र तदा व्यवहारनयः गौणो भवति, तथा व्यवहारनयोऽपि स्वस्थाने (निश्चयस्य स्वार्थः स्वार्थवत्त्वात्) प्रधानो भवति तत्र निश्चयश्च गौणो भवति, एवं द्वौ नयौ स्वस्वस्थानेऽतुलबलवन्तौ भवतः, परस्थाने सर्वथा निर्बलौ भवतोऽतो निश्चय एवाऽस्ति, व्यवहारस्तु नास्त्येव, निश्चयः सर्वथा प्रधानोऽस्ति, व्यवहारः सर्वथा हेयः'एवं विधानि विधानानि सत्यरहितान्येवेति वक्तव्यम् ।.५॥६॥७॥८॥

– दानादिशुद्धव्यवहारलोपे पूर्वोक्तनास्तित्वविशिष्टानां षण्णां पदाना मिथ्यात्वरूपता—

'प्राधान्याद् व्यवहारस्य, ततस्तच्छेदकारिणाम् ।
मिथ्यात्वरूपतैतेषां, पदानां परिकीर्तिा ॥ ९ ॥

टीकाः—एवं यदा दानादिशुद्धव्यवहाराणामपि स्वस्थाने प्राधान्यमस्तीति विषयः स्थिरीकृतः, तदा तद्दानादिव्यवहारच्छेदकारिणां पूर्वोक्तानामेकान्तेनाऽऽत्मा नास्तीत्यादीनां षण्णां पदानां मिथ्यास्वरूपता परिकीर्तिता—कथितेति ॥ ९ ॥

**– चार्वाकमतप्रतिपादनम् –**

'नास्त्येवाऽऽत्मेति चार्वाकः, प्रत्यक्षाऽनुपलम्भतः ।
अहंताव्यपदेशस्य, शरीरेणोपपत्तितः ॥ १० ॥

टीकाः—आत्मा नास्त्येव, कथमिति चेत् , प्रत्यक्षप्रमाणेनानुपलभ्यमानत्वात् , यद्यस्ति चेत् प्रत्यक्षेणोपलभ्येत, चाक्षुषप्रत्यक्षेणाऽऽत्मा न दृश्यते, अहं सुख्यहं दुःखीत्यादिर्योऽनुभवो भवति, तत्राऽहम्पदवाच्यः कः पदार्थ इति चेदुच्यते अहंताव्यपदेशस्य शरीरेणोपपत्तितः'=अहन्तारूपव्यवहारः, शरीरार्थेनोपपद्यते, अहमित्युक्ते शरीरमेव ज्ञेयमिति ॥ १० ॥

**– मिलितेभ्यो भूतेभ्यो ज्ञानाऽभिव्यक्तिः –**

'मद्याऽङ्गेभ्यो मद व्यक्तिः, प्रत्येकमसती यथा ।
मिलितेभ्यो हि भूतेभ्यो, ज्ञानव्यक्तिस्तथा मता ॥ ११ ॥

टीका:-यथा प्रत्येकममती मद्याऽङ्गेभ्यो मदव्यक्तिर्भवति, तथा पृथिव्यादिभूतपञ्चके प्रत्येकमसती ज्ञानव्यक्ति मिलितेभ्यो भूतेभ्यो भवतीति ॥ ११ ॥

**–राजरङ्काऽऽदिवैचित्र्यं स्वभावजम् –**

'राजरङ्काऽऽदिवैचित्र्यमपि नात्मबलाहितम् ।
स्वाभाविकस्य भेदस्य, ग्रावाऽऽदिष्वपि दर्शनात् ॥ १२ ॥

टीका:-अयं राजा, रङ्कोऽयमित्यादिवैचित्र्यं यद् दृश्यते तन्न कर्मवदात्मबलेन कृतं परन्तु यथा ग्रावाऽऽदिषु–कश्चित् प्रस्तरः कोमलस्पर्शः कश्चित् कर्कशस्पर्शी दृश्यते, तत्र स्वभावकृतो भेद एव परिज्ञेयः, तथाऽत्रापि ज्ञेयः, कर्मणा नात्माऽनुमीयते अनुमानप्रमाणेन नात्मा सिद्ध्यति ॥ १२ ॥

**– नागमप्रमाणेनाऽत्मसिद्धिः–**

'वाक्यैर्न गम्यते चात्मा, परस्परविरोधिभीः ।
दृष्टवान्न चकोऽप्येनं प्रमाणं यद्वचो भवेत् ॥ १३ ॥

टीकाः 'परस्पर विरोधिभिर्वाक्यैर्नाऽऽत्मा गम्यते'=भट्टो वदति यथा जले बुद्बुदो जलाज्जायते, जले च विलीयते, तथाऽऽत्मा भूतेभ्य उत्पद्य भूतेषु च विलीयते परलोकादि न किञ्चिदस्ति वेदेऽप्युक्तं 'आत्मा नित्योऽस्ति स स्वर्गादिपरलोके याति तस्मात्स्वर्गकामोऽग्निहोत्रं कुर्यादित्यादिभिः परस्परविरोधिभिर्वाक्यैर्नात्मा गम्यतेऽतः परस्परविरुद्धार्थप्रतिपादका आगमा न प्रमाणभूताः, किञ्च 'दृष्टवान्नच कोऽप्येनं प्रमाणं यद्वचो भवेत्'=आगमस्य प्रणेता कोऽप्येनं आत्मानं न दृष्टवान् अतः आत्मानमदृष्टवतो वचः प्रमाणं न भवेत्, आत्मानं दृष्टवतो वचः प्रमाणं भवेदन्यथा नेति ॥ १३ ॥

— भूतभिन्नस्वतन्त्रात्मपक्षकाराः कथं न वञ्चकाः —

'आत्मानं परलोकं च, क्रियां च विविधां वदन् ।
भोगेभ्यो भ्रंशयत्युच्चै, र्लोकचित्तं प्रतारकः ॥ १४ ॥

टीकाः—भूतेभ्यो भिन्नं स्वतन्त्रमात्मानं वदन्, स्वर्गनरकादिकं परलोकं वदन, परलोके सुखीभवितुं त्यागतपआदिरूपां विविधां क्रियां वदन्, प्रतारको-वञ्चको, लोकस्य चित्तं भोगेभ्य उच्चैभ्रंशयति वियोजयतीति ॥ १४ ॥

– भस्मीभूतेषु भूतेषु प्रत्यागमनस्पृहा न कार्या –

त्याज्यास्तन्नैहिकाः कामाः कार्या नानागतस्पृहाः ।

भस्मीभूतेषु भूतेषु, वृथा प्रत्यागतिस्पृहा ॥१५॥

टीकाः-तत्-तस्मात्कारणात्, ऐहिकाः कामाः=इहलोकसम्बन्धिनः कामभोगा न त्याज्याः, 'कार्या नानागतस्पृहा'=अनागतानां = परलोकभाविकामभोगानां स्पृहा न कार्या, भस्मीभूतेषु भूतेषु वृथाप्रत्यागतिस्पृहा' भूतेषु पञ्चसु भस्मासाद् भूतेषु सत्सु, भूताऽव्यतिरिक्त आत्माऽपि भस्मीभूतः, पश्चान्मनुष्यादिसद्गतिप्राप्तिरूपप्रत्यागतिस्पृहा वृथा'मुधैव-निरर्थिकेति ॥ १५ ॥

-चार्वाकमतखण्डनम्-

तदेतद्दर्शनं मिथ्या, जीवः पत्यक्ष एव यत् ।
गुणानां संशयादीनां, प्रत्यक्षाणामभेदतः ॥ १६ ॥

टीकाः-तदेतद्दर्शनं मिथ्या=तस्मादेतच्चार्वाकदर्शनं सर्वथा मिथ्या 'जीवः प्रत्यक्ष एव' जीव आत्मनि प्रत्यक्ष एवाऽस्ति; यद्गुणानां संशयादीनां प्रत्यक्षाणामभेदतः' = यतो ये संशयादिज्ञानस्वरूपा गुणाः सन्ति, ते प्रत्यक्षाः-स्वसंवेदनप्रत्यक्षा(मानसप्रत्यक्षा) एव, गुणानान्तु गुणिनः कथंचिदभेदादात्मनो ज्ञानगुणप्रत्यक्षे तु गुणिरूप आत्माऽपि प्रत्यक्ष एवेति ॥ १६ ॥

-अहन्ता न शरीरस्य धर्मः-

न चाऽहम्प्रत्ययादीनां शरीरस्यैव धर्म्मता ।
नेत्रादिग्राह्यताऽऽपत्ते-र्नियतं गौरवादिवत् ॥ १७ ॥

टीकाः—यद्यहमित्युक्ते शरीरस्य ग्रहणं स्यात्तदाऽहन्ता शरीरस्यैव धर्मः स्यात् , परन्तु अहम्प्रत्ययादौ शरीरस्यैव धर्मता न, कथमिति चेदुच्यते यथा गुरुतालघुतादयः शरीरस्यैव धर्म्माः सन्ति, ये शरीरस्यैव धर्म्माः सन्ति, ये शरीरधर्म्मास्ते सर्वे नेत्रादीन्द्रियग्राह्याः प्रत्यक्षविषया भवन्ति, यद्यहन्ताऽपि शरीरस्य धर्म्मः स्यात्तदा सोऽपि नेत्रादीन्द्रियग्राह्यो भाव्यः, परन्त्वेवं न भवत्येव ततोऽहन्ता, शरीरधर्म्मत्वेन न प्रतिपत्तव्या, 'अहं सुखी' त्यत्र स्थले यदहम्पदमस्ति, तन्न शरीरवाचकमपि तु शरीराऽतिरिक्तं किमपि द्रव्यमेवाऽहम्पदवाच्यं मान्यं तद्द्रव्यमात्मैवाऽस्तीति ॥ १७ ॥

—शरीरं नात्मद्रव्यम्—

'शरीरस्यैव चाऽऽत्मत्वे, नाऽनुभूतस्मृतिर्भवेत् ।
बालत्वादिदशाभेदा-त्तस्यैकस्याऽनवस्थितेः ॥ १८ ॥

टीकाःशरीरस्यात्मत्वे बाल्यकाले बालेन यदनुभूतं, तदनुभूतस्य स्मरणं युवाऽवस्थायां न भवेदित्यापत्तिरागमिष्यति यत एतादृशो नियमोऽस्ति, यद्योऽनुभवति स एव स्मरति, यद्येष नियमो न स्वी-

क्रियेन तदा यज्ञदत्तेनाऽऽम्ररसाऽऽस्वादोऽनुभूतः, मित्रदत्ते तद्रसाऽनुभूतिस्मृतेरापत्तिरागच्छेत् , तत एष नियमः प्रतिपत्तव्यः, अथ बाल्ये यच्छरीरमस्ति, तत्तु युवाऽवस्थायां नास्त्येव; यतः शरीरे तु प्रतिक्षणं केचित् पुद्गला गलन्ति, केचित्तु नवाः पुद्गला मिलन्ति, अर्थाद् बाल्याऽवस्थायाः शरीररूप आत्मा युष्माभिरभिमतो भिन्नः, युवाऽवस्थायाः शरीररूप आत्मा भिनश्च, अथ बाल्याऽवस्थावच्छरीराऽऽत्मना योऽनुभवः कृतः, तं युवाऽवस्थास्थशरीराऽऽत्मा, कथं स्मर्त्तुं शक्नुयाद् ? एनामापत्तिं दूरीकर्त्तुं, बालशरीरयुवशरीराभ्यां भिन्नः, शरीरयोर्द्वयोर्निवसन् , एक एव स्वतन्त्र आत्मा, युष्माभिर्मन्तव्यः, अनेनात्मनैव बाल्यशरीरे स्थित्वैकस्य वस्तुनः, अनुभवः कृत आसीत् , स एवाऽऽत्मा युवशरीरे स्थित्वा वस्त्वेतत् स्मरतीति ॥ १८ ॥

— चक्षुरादीनीन्द्रियाणि नात्मा—

नाऽऽत्माऽङ्गं, विगमेऽप्यस्य तल्लब्धाऽनुस्मृतिर्यतः ।
व्यये गृहगवाक्षस्य तल्लब्धार्थाऽधिगन्तृवत् ॥१९॥

टीकाः–शरीरस्य च चक्षुराद्यङ्गमप्यात्मपदार्थत्वेन नोच्यते, विगमेऽप्यस्य तल्लब्धाऽनुस्मृतिर्यतः'= यतः शरीरस्यांऽगभूतस्य चक्षुरादेर्विगमेऽपि–विनाशानन्तरमपि तस्याऽऽत्मनस्तेनाङ्गेनाऽनुभूतस्य प्रत्यक्षदृष्टस्य वस्तुनः स्मरणं भवति, यथा कश्चिद् गृही स्वगृहगवाक्षे स्थित्वाऽमुकं वस्तु पश्यति, ततोऽक-

स्माद्गृहगवाक्षे त्रुटिते सति, तेन गृहगवाक्षेण यद्दृश्य चक्षुषा दृष्टं तस्य गृहिणस्तस्य स्मरणमवश्यं भवति, प्रकृतेऽप्येवं ज्ञेयम् , अथ चक्षुरिन्द्रियाद्यात्मकमङ्गमेवाऽऽत्मा चेद् भवेत्तदा तस्याङ्गस्य नाशेऽपि तेनेन्द्रियेणाऽनुभूतस्य स्मरणं भवितुं न शक्यते परन्तु स्मरणं तु भवत्येव तस्मात् तच्चक्षुराद्यङ्गमपि नात्मा, आत्मा तु तदिन्द्रियव्यतिरिक्तः स्वतन्त्र आत्मपदार्थोऽस्तीति मन्तव्यमेव ॥ १९ ॥

— दोषस्य परिहारो दुर्निवारः—

न दोषः कारणात्कार्ये, वासनासंक्रमाच्च न ।
भ्रूणस्य स्मरणापत्ते-रम्बानुभवसङ्क्रमात् ॥ २० ॥

टीकाः—नन्वस्तु तावच्चक्षुर्हस्ताद्यङ्गभूताऽवयवानां विनाशः, परन्तु तेन यदनुभूतं तस्य या वासना, तस्मिन् पतिताऽऽसीत् तस्या वासनायाः सङ्क्रमो देहे भवति, ततश्च देहस्वरूपस्यात्मन इन्द्रिया-दिनाऽनुभूतस्य पदार्थस्य स्मरणं भवति कारणभूताया वासनायाः कार्ये सङ्क्रमोऽवश्यं भवति कारणमत्र चक्षुर्हस्ताद्यङ्गं कार्यभूतं शरीरमिति चेन्न, एवं कथने तु कारणमस्ति माता, कार्यमस्ति गर्भस्थो बालः, अथ मात्रा चक्षुरादिना यदनुभूतं तस्य वासना तन्मातुः शरीरे पतिता; तद्वासनायाः कार्यस्वरूपे बाले सङ्क्रमो भविष्यति, यद्येवं भवेत्तदा मात्राऽनुभूतस्य वस्तुनः, स्मरणं गर्भस्थबालस्य भविष्यतीत्यापत्तिरागमिष्यति ततो वासनासङ्क्रमकथनेन पूर्वोक्तदोषो दुर्निवारः ॥ २० ॥

॥२४१॥

नोपादानोपादेयभावो यत्र तत्र वासनासङ्क्रमः—

नोपादानादुपादेय-वासनास्थैर्यदर्शने ।
करादेस्तु तथात्वेना-योग्यत्वाप्तेरणुस्थितौ ॥ २१ ॥

टीकाः ननु यत्र कार्यकारणभावस्तत्र वासनासङ्क्रम इति न ब्रूमः परन्तु यत्र कारणमुपादानं कार्यं चोपादेय तत्र वासनासङ्क्रम इति ब्रूमः, मातृबालकमध्ये कार्यकारणभावे सत्यपि नोपादानोपादेयभावोऽतो न पूर्वोक्तापत्तिरिति चेन्न क्षणिकदर्शने तु पूर्वस्मात्परमाणुपुञ्जादुत्तरपरमाणुपुञ्ज उत्पद्यते, तत्र तु तस्योपादानस्य वासनायास्तस्योपादेये संक्रमो भवेत् , परन्तु स्थिरपरमाणुवादपक्ष इदं न घटते, इदमत्र हृदयम्=परमाणव एव तत्त्वमिति मान्यतायां, 'अवयवीति न वस्तु, इति वादे, उपादानस्वरूपपूर्वपरमाणुपुञ्जस्य चोपादेय उत्तरपरमाणुपुञ्जोऽस्तीति पक्षे तदनन्तरमेवमुच्यते, यत्पूर्वोत्तरपरमाणुभावो मातरि बाले च नास्ति, तस्मात्तत्र वासनासक्रमाऽऽपत्तिर्नास्ति, तन्न समञ्जसम् , यतः स्थिरपक्षे परमाणुस्तु नित्य एव, तत्र च परमाणौ उपादेयत्वं कथं घटेत ? यन्नित्य तदुपादेयं जन्यं कथं भवेत् ? (शङ्का)= यत्रावयवावयविभावस्तत्रोपादानोपादेयभावो ग्राह्यस्तत्रैव वासनासक्रमो वाच्यः, मातृबालमध्येऽवयवाऽवयविभावो नास्ति, ततो वासनासंक्रमाऽऽपत्तिर्नागमिष्यतीति चेत (समाधानं) यच्छिन्नहस्ताद्यस्ति, तत्र तदूधस्तादि, एतच्छरीरस्योपादानं नास्ति, एवं तत्रोपादानोपादेयभावो नास्ति, तथापि विच्छिन्नकरादिना-

ऽनुभूतस्य खण्डावयविशरीरे स्मरणं भवत्येव, यत्राऽवयत्राऽवयविभावस्तत्रत्य एवोपादानोपादेयभावे यदि वासनासंक्रमस्य नियमः स्यात्तदाऽत्र शरीरस्य विच्छिन्नकरानुभूतस्य स्मरणाभावाऽऽपत्तिरागमिष्यति, इदमत्र सारम्=नित्यपरमाणुत्वेन येषां स्थितिस्तत्रोपादानोपादेयभावस्यैवाऽयोग्यताऽस्ति, विच्छिन्नकरादौ च खण्डशरीरस्योपादानत्वाभावेनोपादानोपादेयभाव एव नास्ति, ततस्तत्राऽस्मरणापत्तिरागच्छेत् , ततः स्थैर्यदर्शने, उपादानोपादेयभावो वासनासंक्रमस्य नियामको न वक्तुं शक्यते, एवं स्थिते पुनर्मातुरनुभवस्य, वासनाया बाले सङ्क्रान्तौ तस्य स्मरणापत्तिः स्थितैवेति ॥२१॥

–मद्याऽङ्गेभ्यो मदव्यक्तिरपि नो मेलकं विना–

'मद्याऽङ्गेभ्यो मदव्यक्ति-रपि नो मेलकं विना ।
ज्ञानव्यक्तिस्तथा भाव्याऽन्यथा सा सर्वदा भवेत् ॥२२॥

टीकाः–किञ्च 'मद्याऽङ्गसमुदाये सति मदशक्तिवत्पञ्चभूतसमुदाये चैतन्यस्य यो विषयः पूर्वोक्तः स तु न सत्यः यतो मदिरगया उपादानभूताऽङ्गानां सत्त्वमात्रेण तत्र मदो नोत्पद्यतेऽन्यथा सर्वदा मदः किं नोत्पद्येत ? ततस्तत्राऽपि, एतेषामङ्गानां मेलकः कश्चित्पुरुषोऽवश्यं तिष्ठत्येव, एवंरीत्या पञ्चभूतानां मेलकारिका काचिज्ज्ञान (चेतन) व्यक्तिरवश्यं तिष्ठत्येव, स व्यक्तिरूप आत्मैव, एवं युष्मदुदत्तदृष्टान्तेन प्रत्युत स्वतन्त्रस्याऽऽत्मनः सिद्धि र्भवतीति ॥२२॥

-राजरङ्कादिवैचित्र्यं न स्वाभाविकमप्यात्मकृतकर्मजन्यं-

'राजरङ्कादिवैचित्र्यं-मप्यात्मकृतकर्मजम् ।
सुखदुःखादिसंवित्ति-विशेषो नाऽन्यथा भवेत् ॥२३॥

टीका:-तथा च युष्माभी राजरङ्कादिवैचित्र्यं स्वाभाविकं कथितं तन्न समचतुरस्रम्, यतो यद्यस्य वैचित्र्यस्य पृष्ठे न कोऽपि हेतुर्भवेत्तदा जगतः सर्वे जना राजानः किं न भवेयुः ? अथवा सर्वे रङ्काः किं न स्युः ? ईदृशं तु नास्त्येव, ततो विचित्रकार्यं प्रति विचित्र कारणमिति मन्तव्यमेव, यत्कारणं तदेव कर्म, यादृशं यस्य कर्म, तादृशं तस्य फलम्, शरीरेऽसम्भवत्कर्म, तदधिकरणं शरीराद् भिन्न आत्मैव स्यान्नाऽन्यः, यद्येव न मन्येत तदा भिन्नभिन्नजीवानां सुखदुःखादिविषयिण्यश्चित्रा अनुभूतयो या भवन्ति ताः सर्वथा न घटन्ते, सुखदुःखादिसंवित्तिविशेषैः कर्माऽनुमीयते, तत्कर्माधिकरणमात्मा सिद्धः ॥२३॥

-आगमादात्मा गम्यते

'आगमाद् गम्यते चात्मा, दृष्टेष्टार्थाऽविरोधिनः ।
तद्वक्ता सर्वविच्चैनं, दृष्टवान्वीतकश्मलः ॥२४॥

टीका:=किञ्च 'आगमेषु परस्परं विरोधं दर्शयित्वाऽऽगमप्रमाणत आत्मा न सिद्ध्यतीति यत्कथितं तन्न युक्तम्, यतो जिनोक्तमागमवचनं दृष्टेष्टार्थाऽविरोधि वर्त्तते, सर्वे दृष्टार्थाः=प्रत्यक्षादिसर्वप्रमाणैः प्राप्यार्थाः, इष्टार्थाः=आगमवचनतः एतेऽर्थाः कथितास्त इष्टार्थाः, यद्वस्तु यादृशं दृश्यते, तद्वस्तु तादृशमेव शास्त्रोक्तं भवेत्तदा तु वस्तु दृष्टं चेष्टं कथ्यते, दृष्टेष्टार्थाऽविरोधिन आगमस्य वक्ता सर्वज्ञोऽस्ति, एतेन वीतरागसर्वज्ञेनाऽऽत्मा प्रत्यक्षेण दृष्टोऽप्यस्ति, एवमविरुद्धजिनागमप्रमाणतोऽप्यात्मा सिद्ध्यति ॥२४॥

—अभ्रान्तानां प्रवृत्तयो न विफला:—

'अभ्रान्तानां च विफला नाऽऽमुष्मिक्यः प्रवृत्तयः ।
परवञ्चनहेतोः कः, स्वाऽऽत्मानमवसादयेत् ॥२५॥

टीका:—यद् युष्माभिरुक्तं च 'आत्मादिसत्कवार्ताकारका धूर्त्ताः सन्तीति तत् सर्वथा मूलरहितं यत आत्मादितत्त्वप्रणेतारः सर्वज्ञा वीतरागा आसन, सर्वज्ञगतं ज्ञानमभ्रान्तं, अभ्रान्तज्ञानिनः सर्वज्ञाः स्वर्गापवर्गसाधिकाः परलोकहितसम्बद्धप्रवृत्तीरुपादिशन्ति, ताः प्रवृत्तयो विफला न भवन्ति, किञ्च ये वीतरागास्ते परान् वञ्चयितुं कदाचिदपि न प्रवर्त्तन्ते, वीतरागता चेत्कथं माया, माया चेत्कथं वीतरागतां द्वयोर्मिथो महान् विरोधः ॥२५॥

-संशयादेवाऽऽत्मनः सिद्धिः-

'सिद्धिः स्थाणवादिवद्व्यक्ता, संशयादेव चाऽऽत्मनः ।
असौ खरविषाणादौ, व्यस्तार्थविषयः पुनः ॥२६॥

टीका –नियमः=यस्य संशयस्तद्वस्तु क्वचिदपि विद्यत एव, दूरस्थे वृक्षे स्थाणुर्वा पुरुषो वेति सन्देह एव विषयं साधयति यत् पुरुषात्मकं वस्तु जगत्यवश्यं विद्यत एव, यदि पुरुषात्मकं वस्तु कुत्रचिन्न स्यात्तदा वृक्षे पुरुषविषयकः सन्देहो न स्यात, एवंरीत्या 'आत्माऽस्ति किं नवा ? इति संदेहावस्थैवं कथयति आत्माऽऽत्मकं वस्तु स्वतन्त्रतया कुत्राऽप्यवश्यमस्त्येव ननु जगति 'खरविषाणमस्ति नवा ? इति संशयस्य विषयः खरविषाणं=खरस्य विषाण जगति न विद्यते, संशयस्य विषयस्यास्तित्वं कथं नेति चेदस्य संशयस्य विषयः खरस्य विषाणं नास्ति, परन्तु खरस्य मस्तके विषाणस्य समवायोऽस्ति यतः खरविषाणमस्ति नवा ? इत्येतस्य प्रश्नस्याकार एव भवति यत् 'खरस्य मस्तके विषाणस्य समवायोऽस्ति-नवा'? एवमत्र विषाणस्य समवायविषयकः संदेहोऽस्ति, एतस्य सन्देहस्य विषयो विषाणस्य समवायो जगति गवादिमस्तके प्रसिद्धोऽस्त्येव 'खरविषाणमस्ति नवा ? एतादृशसंशयविषये खरविषाणरूपपदद्वयं समस्तमस्ति, एतत्पदद्वयस्य योजकः समवाय इति व्यस्तं पदं, यतः समवायपदं पूर्वोक्तसमासस्य पदत्वेन

॥२४६॥

न ज्ञायते, एतद्व्यस्तसमवायपदस्याऽर्थः समवायसम्बन्धोऽस्ति, अत्र व्यस्तार्थरूपविषाणसमवायसम्बन्धविषयकसंशयोऽस्ति, तस्मादेव संशयो व्यस्तार्थविषयकः कथ्यते इति ॥२६॥

-जीवनिषेधकाऽजीवशब्दत आत्मत्वसिद्धिः-

'अजीव इति शब्दश्च, जीवसत्तानियन्त्रितः ।
असतो न निषेधो यत्, संयोगाऽऽदिनिषेधनात् ॥२७॥

टीकाः-अजीवशब्दोऽपि प्रतिषेधमुद्रया जीवस्याऽस्तित्वं साधयत्येव, यदि जीवो नास्तित्वाच्छिन्नो भवेत्तदा तस्य प्रतिषेधोऽजीवपदेन न सूच्येत, मतो निषेध इति न्यायः, केनचिदेवं न कदाचित्कथ्यते यत् 'खरविषाणं न दृश्यते' यतः खरस्य विषाणमेवाऽसदस्ति, असतो न निषेधो भवति-अविद्यमान वस्तुनो निषेधो भवितुं नार्हति, यतस्तत्र तु संयोगादिसम्बन्धस्यैव निषेधो भवति, यथा 'खरविषाणं नास्त्यत्र खरस्य मस्तके विषाणस्य समवायसम्बन्धो नास्तीत्यर्थः ॥२७॥

-वस्तुतः पदार्थः सर्वथा न निषिध्यते किन्तु तत्तत्संयोगादिर्निषिध्यते-

संयोगः समवायश्च, सामान्यं च विशिष्टता ।
निषिद्ध्यते पदार्थानां, त एव न तु सर्वथा ॥ २८ ॥

टीकाः—वस्तुतः सत्पदार्थस्य निषेधः सर्वथा न भवति परन्तु वस्तुनिष्ठसंयोगसमवायसामान्यविशेषाऽन्यतमो निषेधः, तथाहि=संयोगनिषेधः=शरीरे जीवो नास्तीति वाक्यं, सर्वथा जीवं न निषेधति अर्थाज्जगति कुत्रापि जीवो नाऽस्तीति न प्रतिषेधति, परन्तु शरीरे जीवसंयोगसम्बन्धो नाऽस्तीति निषेधं करोति तत एवं सिद्ध्यति शरीरादन्यत्र जीवोऽवश्यं विद्यते, समवायनिषेध'=एवमेव रीत्या कपाले घटो नास्तीत्यत्रापि कपाले घटस्य समवायसम्बन्धो नास्ति, एष एवार्थो भवति एवमत्रापि घटस्य सर्वथा निषेधो नास्ति परन्तु घटसमवायस्यैव कपाले निषेधो जातोऽस्ति 'सामान्यनिषेधः'=द्वितीयश्चन्द्र आकाशे नास्तीत्यत्र विद्यमानचन्द्राऽन्यत्र चन्द्रसामान्यनिषेधः क्रियते, न तु सर्वेषां चन्द्राणां सर्वथा निषेधो जातोऽस्ति, विशेषनिषेधः=घटप्रमाणानि मौक्तिकानि न सन्ति अत्र घटाना वा मौक्तिकानां न निषेधः क्रियते परन्तु मौक्तिके घटेयत्तारूपप्रमाणताविशेषस्यैव निषेधः कृतः, इदमत्र सारं=पदार्थस्य निषेधो वस्तुतः पदार्थस्य सर्वथा निषेधरूपो नास्ति परन्तु पदार्थस्य तत्तत्संयोगादिसम्बन्धनिषेधपर्यवसायी भवतीति ॥२८॥

जीवपदेन जीवसिद्धिः—

'शुद्धं व्युत्पत्तिमज्जीवपदं सार्थं घटादिवत् ।
तदर्थश्च शरीरं नो पर्यायपदभेदतः ॥ २९ ॥

टीका:-यत्पदं व्युत्पत्तिमच्च शुद्धं भवति, तत्पदं सार्थं यथा घटादिकं, घटपदं शुद्धं=समासरहितं व्युत्पत्तिमत्=व्युत्पत्तिविशिष्टं, यथा घटते-चेष्टते जलाहरणादिकार्येषु इति घटः, एतादृशी व्युत्पत्ति र्घटस्य प्रसिद्धाऽस्ति, ततो घटपदवाच्योऽर्थो यो घटः, स घटो जगत्यवश्यं विद्यते एव अनयैव रीत्या जीवपद-मप्यसमस्तत्वेन शुद्धपदम् , किञ्चाऽजीवज्जीवति जीविष्यतीति तस्य व्युत्पत्तिरपि भवति ततोजीवपदवा-च्योऽर्थोजीवः, जगति विद्यत एव, डित्थडवित्थादिपदानि, असमस्तपदत्वेन शुद्धानि सन्त्यपि तेषां काचिद् व्युत्पत्तिर्न भवति, अत एतानि यादृच्छिकानि पदान्युच्यन्ते. ततो डित्थादिपदवाच्यः कश्चिदर्थो जगति न विद्यते, 'शशशृङ्गपदं व्युत्पतिमत्पदमस्ति परन्तु समस्तत्वेन नास्ति शुद्धं अतस्तद्वाच्यभूतशशशृ-ङ्गरूपोऽर्थोऽपि जगति न विद्यते, अर्थाद् यच्छुद्धं व्युत्पत्तिमच्च पदं भवति तद्वाच्योऽर्थो जगति विद्यमानएव जीवपदमपि तादृशमेवाऽस्ति अतस्तद्वाच्योऽर्थो जगति विद्यमानः सिद्ध्यति. ननु जीवपदवाच्योऽर्थः शरीरं कथं न ? इति चेदुच्यते "तदर्थश्च शरीरं नो पर्यायपदभेदतः'=यदि शरीरमेवाऽऽत्मा स्यात्तदाऽभिधानको-शादौ शरीरात्मानौ द्वौ शब्दौ पर्यायवाचकत्वेन कथितौ स्याताम् , तथा तौ पर्यायौ न स्तः, शरीरपर्याय-वाचकाः शब्दा भिन्नाः, कथितास्तत्रात्मरूपशब्दो न वर्णितः, आत्मपर्यायवाचकशब्देषु न शरीरशब्द उपन्यस्तः २९ ॥ ॥२४९॥

— चार्वाकदर्शनं सर्वथा त्याज्यम्-

आत्मव्यवस्थितेस्त्याज्यं, ततश्चार्वाकदर्शनम् ।
पापाः किलैतदालापाः, सद्व्यापारविरोधिनः ॥३० ॥

टीकाः—अनया रीत्या यदा शरीरतः कथञ्चिद्भिन्नस्वरूपस्य स्वतन्त्रस्यात्मनोऽस्तित्वं सिद्धं भवति तदाऽऽत्मानमपह्नुवानं चार्वाकदर्शनं त्यागयोग्यं भवत्येव मोक्षसाधकसदनुष्ठानविरोधिन एतस्य दर्शनस्य वचांसि स्वरूपतः पापानि पापानामालापानां श्रवणेऽपि पापं यत एतस्य फलानि, दुर्गतेः पापानुबन्धरूपान्येवेति ॥ ३० ॥

बौद्धमतस्य प्रतिपादनम्—

'ज्ञान क्षणाऽऽवलीरूपो, नित्यो नाऽऽत्मेति सौगताः ।
क्रमाऽक्रमाभ्यां नित्यत्वे, युज्यतेऽर्थक्रिया नहि ॥३१॥
स्वभावहानितोऽध्रौव्यं, क्रमेणाऽर्थक्रियाकृतौ ।
अक्रमेण च तद्भावे, युगपत्सर्वसम्भवः ॥ ३२ ॥

टीकाः—बौद्धः=शरीरादात्मा, स्वतन्त्रः पदार्थोऽस्तीति वयमवश्यं स्वीकुर्मः, परन्तु स आत्मा नित्योऽस्तीति न स्वीकुर्मः, यत आत्मा तु ज्ञानक्षणावलिस्वरूपोऽस्ति, अर्थात् ज्ञानक्षणसन्तानस्वरूप आत्माऽस्ति,

यस्मिन् क्षणे एष आत्मोत्पद्यते तस्मिन् क्षणे स तिष्ठति द्वितीयक्षणे तु स सर्वथा विनश्यति एवं क्षणे क्षणे नवं नवं ज्ञानमुत्पद्यमानमस्ति, एतादृशी या ज्ञानक्षणानां धारा स एवाऽऽत्माऽस्ति, बौद्धप्रश्नः=युष्मदभिमतो नित्य आत्माऽर्थक्रियां करोति, स किं क्रमेण वाऽक्रमेण करोति ? क्रमेण कथ्यमाने प्रथमक्षणे तस्याऽमुककार्यकरणस्वभावो य आसीत् स तु नष्टो, द्वितीयक्षणे च द्वितीयकार्यकरणस्वभाव उत्पन्नः, सोऽपि पश्चान्नष्टः, तृतीयक्षणे तृतीयकार्यकरणस्वभाव उत्पन्नः, अथ यद्यनया रीत्या प्रतिक्षणं स्वभावस्य हानिभवने तु, आत्मा स्वत एव क्षणिकः सिद्धो भवेदेव, स्वभावनाश एवाऽऽत्मनाशः कथ्यते यतः स्वभावं विना वस्तुनः सत्ता भवितुं नाऽर्हति, यदि नित्य आत्मा यौगपद्येन कार्यं करोति इत्येवं कथनं भवेत्तदा प्रथमक्षण एव युगपद्–अक्रमेणाग्रेतनसर्वक्षणानामर्थक्रियायां तत्रैव पूर्णताऽऽपत्तिरागच्छेत् , एवं क्रमेण वाऽक्रमेणाऽपि नित्याऽऽत्मनि, अर्थक्रियाकारित्वं न घटत एव, तत आत्मा क्षणिको मन्तव्यः ॥३१॥३२॥

कुर्वद्रूपविशेषिते क्षणिके न दोषः—

क्षणिके तु न दोषोऽस्मिन् , कुर्वद्रूपविशेषिते ।
ध्रुवे क्षणोत्थतृष्णाया निवृत्तेश्च गुणो महान् ॥ ३३ ॥

टीकाः–ननु क्षणिक आत्मा प्रतिपलं किं कार्यकरणस्वभाववानस्ति ? इति चेन्नाऽऽत्मा कुर्वद्रूपेण विशिष्टो यदा भवति तदैव कार्यमुत्पादयत्यन्यथा न, कुर्वद्रूपत्वं तु कार्यकरणशक्तिलक्षणं, यस्मिन् क्षणे ॥२५१॥

ऽर्थक्रिया भवति, तस्याः पूर्वक्षणे, आत्मा कुर्वद्रूपेण विशिष्टो भवति किश्च य आत्मानं क्षणिकत्वेन न मन्यते तेषां तु 'अहमस्मि' इति तादृशं ध्रुवनिरीक्षणरूपमात्मदर्शनमवश्यं भवत्येव तथा तस्य पुनर्जन्महेतुभूततृ'णाऽपि भविष्यति॰ अर्थात्तस्याऽऽत्मन उपरि स्नेहो भाव्येव ततः स, आत्मा सुखस्य साधनानि प्रति द्रुत २ गच्छत्येव यद्याऽऽत्मानं ये क्षणिकत्वेन मन्यन्ते तेषामहमस्मीति आत्मदर्शनं न भविष्यति तत आत्मोपरि स्नेहो न भावी ततः सुखसाधनानि प्रति द्रुतं २ न गमनं भावि एवं नित्याऽऽत्मदर्शनं वैराग्यस्य विरोधि भवति यदा क्षणिकाऽऽत्मदर्शनं तृष्णानिवृत्तिरूपं गुणं प्रापयत्येवेति ॥ ३३ ॥

बौद्धमतस्य खण्डनम्–

मिथ्यात्ववृद्धिकृन्नूनं, तदेतदपि दर्शनम् ।
क्षणिके कृतहानिर्य–त्तथाऽऽत्मन्यकृतागमः ॥ ३४ ॥

टीकाः–'मिथ्यात्ववृद्धिकृन्नूनं तदेतदपि दशनम्' यथा पूर्वोक्तं चार्वाकदर्शनं मिथ्यात्वं–मिथ्याबुद्धिं वर्द्धयते, तथैतदपि बौद्धदर्शनं मिथ्यामतौ वृद्धिं करोत्येव, यद्यात्मा, सर्वथा क्षणिको भवेत्तदाऽमुकक्षणे येन कृतानि पुण्यादिकार्याणि तेषां फलानां हानि र्भविष्यति, येष्वागामिक्षणेषु फलं भावि, तेषु क्षणेषु त्वेष आत्मा न स्थित आसीत् , किश्चाऽनन्तरक्षणेषु यो नव आत्मोत्पन्न आसीत् , तेन तु धर्मादिकार्याणि न कृतानि तथापि तस्य सुखादिफलप्राप्तिर्भविष्यति, एवं प्रथमक्षणस्थेन कृतधर्मादिकार्येणाऽऽत्मना न

तत्फलं प्राप्स्यते, अकृतधर्मादिकृत्यो नव आत्मा, तत्सुखादिफलं भोक्ष्यति कृतधर्मादिकृतजन्यफलध्वंसः, धर्मादेरकरणेऽपि अकृतकृत्यफलस्वरूपसुखादिफलागम इति द्वौ दोषावागमिष्यतः, इति ॥३४॥

एकद्रव्याऽन्वयाभावान्न वासनासङ्क्रमः—

एकद्रव्याऽन्वयाऽभावाद्, वासनासंक्रमश्च न ।
पौर्वापर्यं हि भावानां, सर्वत्राऽतिप्रसक्तिमत् ॥ ३५ ॥

टीकाः—ननु अस्माकं क्षणिकाऽऽत्मवादेकृतनाशाऽकृतागमरुपौ द्वौ दोषौ नाऽऽगमिष्यतः, यतो वयं वासनासङ्क्रमं मन्यामहे तथाहि=आत्मन एकान्तक्षणिकत्वेन प्रत्येकक्षणेषु नाशो भवतु परन्तु तत्तत्क्षणरूप आत्मा, स्वस्थानां वासनानामुत्तरोत्तरक्षणेषु सङ्क्रमं करोत्येव पूर्वक्षणीयधर्मादिवासनारूपे कारण आगते, तस्याः सुखादिफलमवश्यं स भुङ्क्ते इति चेदुच्यते; युष्मन्मते प्रत्येकक्षणरूपस्य प्रत्येकात्मनो निरन्वयनाशो भवति, अथ यदा प्रथमक्षणीय आत्मा, सर्वथा नष्टस्तदा तस्य नष्टस्यात्मनो वासना कथं द्वितीयक्षणे नवीनाऽऽत्मनि सङ्क्रान्ता भविष्यति ? यदि प्रत्येकात्मनो निरन्वयनाशो नाऽभविष्यत्तदाऽवश्यमात्मद्वयमध्ये कश्चित् सम्बन्धोऽभविष्यत्, ततश्च तद्द्वारा वासनासङ्क्रमोऽपि स्यात्, परन्तु तादृशः कश्चिदेकद्रव्यस्यान्वयस्तु नास्त्येव, तस्माद् वासनासङ्क्रमोऽसम्भवाऽऽक्रान्तः, किञ्चैकः पूर्वक्षणरूप आत्माऽस्ति, द्वितीयश्चोत्तरक्षणरूपआत्माऽस्ति, तादृशं यद्यात्मादिभावानां पौर्वापर्यं यूयं मन्यध्वे तदा ततः

कश्चिद् वासनासङ्क्रमो नोपपद्यते, यतो यथाऽमुककनामकात्मन उत्तरक्षणे तस्य कनामकात्मनः सजातीय आत्माऽस्ति, तथा द्वितीयखनामकादय आत्मानोऽपि कुतो न सन्ति ? एवं भवने कनामकाऽऽत्मख-नामकात्मनोर्मध्येऽपि पौर्वापर्यभावे सति कनामकात्मनोवासनाया, उत्तरक्षणीयखनामकात्मनि सङ्क्रमाऽतिप्रसक्तिरूपापत्तिरागच्छेत् , एवं यस्मिन् कस्मिंश्चिदुत्तररूपात्मक्षणे यस्य कस्यचित्पूर्वक्षणीयाऽऽत्मक्षणस्य वासनासङ्क्रमस्याऽतिप्रसक्तिरूपापत्तिरापद्येतेति ॥३५॥

-कुर्वद्रूपविशेषे च न प्रवृत्तिर्नवाऽनुमा-

कुर्वद्रूपविशेषे च, न प्रवृत्तिर्नवाऽनुमा ।
अनिश्चयान्नवाऽध्यक्षं, तथा चोदयनो जगौ ॥ ३६ ॥

टीकाः-ननु यः पूर्वक्षणीयात्मनि, उत्तरक्षणीयाऽऽत्मनः स्मरणानुकूलः कुर्वद्रूपविशेषो भवेत् , तत्पूर्वक्षणीयाऽऽत्मनो वासनाया एव तदुत्तरक्षणीयतदात्मनि संक्रमो भवतीति ब्रूमो यथा कुशूलस्थे बीजेऽङ्कुरोत्पादानुकूलकुर्वद्रूपविशेषो नास्ति, यदा क्षेत्रस्थे बीजे तादृशःकुर्वद्रूपविशेषोऽस्ति तस्मादेवाऽङ्कुरोत्पादो भविष्यति, एवं कुर्वद्रूपविशेषविशिष्टस्तत्तत्पूर्वक्षणीयक्षणिकपदार्थस्वीकारे यस्य कस्यचित्पूर्वक्षणीयात्माऽनुभवस्य वासनाया यस्मिन कस्मिंश्चिदुत्तरक्षणाऽऽत्मनि सङ्क्रमाऽऽपत्तिर्न भविष्यतीति चेन्न, कुर्वद्रूपविशेषवति 'क्षणिकपदार्थे कश्चिन्न प्रवर्त्तते- इदं क्षणिकबीजं कुर्वद्रूपविशेषवदस्ति' इति, ततस्तस्मिन्न

ङ्कुरोद्देशेन प्रवृत्तिं कुर्यामिति कस्यचिदपि न प्रतिभाति (१) यथा कुर्वद्रूपविशेषवति क्षणिकपदार्थे न कोऽपि प्रवर्त्तते तथा क्षणिकपदार्थस्य-क्षणिकत्वस्यानुमानं तत्र न प्रवर्त्तते (२) क्षणिकत्वविषयकनिश्चयं-सविकल्पज्ञानं विना क्षणिकत्वस्य निर्विकल्पप्रत्यक्षमपि न सम्भवतीति (३) एवं क्षणिकवादे प्रवृत्तेरभावः, अनुमितेरभावः, प्रत्यक्षस्याभावश्च सन्ति, ततः कयाऽपि रीत्या पदार्थे क्षणिकत्वस्य सिद्धि र्न भवतीति ॥३६॥

–उदयनाचार्येण कुसुमाञ्जलिग्रन्थस्य प्रथमस्तबके षोडश्यां कारिकायां यःश्लोको रचितोऽस्ति स एव श्लोक उपाध्यायजीमहाराजेनोक्तविचारस्य साक्षित्वेनाऽथोल्लिख्यते–

'न वैजात्यं विना तत् स्या-न्न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धि र्नाऽध्यक्षं निश्चयं विना ॥३७॥

टीकाः– (बौद्धाः) कुसूलस्थाद् बीजादङ्कुरो नोत्पद्यते तद्बीजं च क्षेत्रे पतितं यदा ततोऽङ्कुर उत्पद्यते तत्र किं कारणम्? नैयायिकाः=पृथ्वीजलसूर्यकिरणादिसहकारिकारणानि क्षेत्रे मिलितानि, तानि कारणानि कुसूले न विद्यन्ते, ततःक्षेत्रे तत्र बीजपतनाऽनन्तरं तत्तत्सहकारिकारणैरङ्कुरः स्फुटति, कुसूले तु न (बौद्धाः)=यदि कुसूलस्थं बीजं क्षेत्रस्थं बीजमेकमेव भवेत् तदा तद्बीजं क्षेत्रगमनाऽनन्तरं कथमङ्कुररूपं कार्यमुत्पादयेत? यद्यङ्कुरोत्पादस्वभाववद् भवेत्तदा प्रथमत एव कुसूले तत् बीजमासीत्, तदैव किमङ्कुरं नोत्पादयेत्? ततो मन्तव्यमेव बीजमेकं नास्ति, कुसूलस्थं यद् बीजमस्ति तदेव बीजं

क्षेत्रे नास्ति, परन्तु बीजद्वयं सर्वथा भिन्नमेव, द्वयो बीजयोरेकताया यज्ज्ञानं भवति तद् भ्रमात्मकं, पदार्थमात्रं क्षणिकमस्ति प्रथमे क्षणे उत्पद्य द्वितीयक्षणे सर्वथा विनश्यति, नैयायिकाः-यद्येवं स्यात्तदा ब्रूत यूयं कुशूलस्थात् क्षणिकाद् बीजादङ्कुरकार्यं किं न जातम् ? वयन्तु कथयिष्यामस्तत्र भूजलसंयोगादिरूपसहकारिकारणाभाव आसीत् (बौद्धाः)=कुशूलस्थे बीजे कुर्वद्रूपनामकोऽतिशयः (वैजात्यं) नाऽऽसीत, तद्धेतुना ततोऽकुरकार्यं न जातं क्षेत्रस्थे बीजे सोऽतिशय आसीत्, ततोऽङ्कुरकार्यं जातम्, नैयायिकाः=वैजात्यं स्वीकृत्य वस्तुमात्रे क्षणिकत्वं सिद्धं कुर्वद्भिरपि वैजात्यस्वीकारेणैव क्षणिकत्वं साधयितुं न शक्यते, तथाहि=यथा धूमबीजादिकारणेषु तैर्वैजात्यमङ्गी कृतं तथा वह्नि-अङ्कुरादिकार्येष्वपि तैर्वैजात्यं स्वीकरणीयमेव, यतो विजातीयधूमादिभिर्यः कश्चिदग्निः (अग्नि—सामान्य) उत्पद्येताऽर्थात् कारणविशेषेण कार्यविशेष एव जायेत (कार्यसामान्यं न) एवं स्वीकारापत्तिरेव, एवं कारणविशेषेण कार्यविशेषस्यैवाऽनुमानं स्यादिति निश्चयो जातोऽर्थात् कारणसामान्येन कार्यसामान्यस्याऽनुमानोच्छेदो जातः, अतोऽथ प्रश्नो भवति यत् क्षणिकत्वस्य सिद्धिःकयारीत्या कार्या ? 'यत्सत्, तत् क्षणिकमिति सामान्यविषयकमनुमानं तैर्न कथनीयं स्यात्, यद् वैजात्यस्वीकारं विना क्षणिकत्वं न स्वीकरणीयं स्यात, तद्वैजात्यस्वीकारे कृतेऽनुमानोच्छेद आगतः अर्थादनुमानसामान्यं विना क्षणिकत्वस्य पदार्थेऽनुमानमपि न भवेदिति (बौद्धाः)=माऽस्तु पदार्थेऽनुमानतः क्षणिकत्वस्य सिद्धिः परन्तु निर्विकल्प

प्रत्यक्षतस्तु क्षणिकत्वस्य सिद्धिर्भविष्यति, कथं न भविष्यति ? निर्विकल्पकप्रत्यक्षन्तु वयं प्रमाणं मन्यामहे नैयायिकाः—विकल्पं-निश्चयं विना तु निर्विकल्पप्रत्यक्षं प्रमाणभूतं भवितुं नार्हति, क्षणिकत्वस्य च विकल्पो-निश्चयस्तु न भवति, ततो निर्विकल्पकप्रत्यक्षेण पदार्थे क्षणिकत्वस्य सिद्धि र्न भवति, अतो युष्मदीयः क्षणिकवादो मिथ्येति निश्चितम् ॥३७॥

—एकताविषयकं प्रत्यभिज्ञानं क्षणिकत्वं बाधत एव—

'एकताप्रत्यभिज्ञानं, क्षणिकत्वं च बाधते ।
योऽहमन्वभवं सोऽहं स्मरामीत्यवधारणात् ॥३८॥

टीकाः—किञ्चाऽऽत्मैवमवधारयति यत् 'योऽहमन्वभवं सोऽहं स्मरामी'त्यत्र भूतकालीनवर्त्तमानकालीनाऽऽत्मन्येकताया—अभेदस्य यो निश्चयो भवति, एवमेकताप्रत्यभिज्ञानमेव दर्शयति यदात्मा क्षणिको न भवति, यद्येवं स्यात्तदाऽनुभवकर्त्ता, स्मरणकर्त्ता च द्वौ एक एव न भिन्नावित्यवधारणमसम्भवीति ॥३८॥

—आत्मन्येकताविषयस्य बाधाभावः—

'नाऽस्मिन् विषयबाधो यत्, क्षणिकेऽपि यथैकता ।
नानाज्ञानाऽन्वये तद्वत्, स्थिरे नानाक्षणाऽन्वये ॥३९॥

टीकाः–आत्मनि, एकताया विषयस्य बाधः–अभावो नास्त्येव, यतो यथा युष्मन्मते ज्ञानस्य क्षणिकत्वेऽपि 'नानाज्ञानाऽन्वये'=अनेकज्ञानसन्ततौ यथैकताया भानं बाधितं नाऽस्ति तथा स्थिराऽऽत्मवादेऽपि 'नानाक्षणा,न्वये'=अनेकज्ञानसम्बन्धवति स्थिर आत्मनि, एकता किं न घटेताऽर्थात् सर्वथा घटत एव, एवं यदाऽऽत्मनि, एकतायाः प्रत्यभिज्ञानं सिद्धं जातं, अथ तत्र क्षणिकत्वं न सम्भवतीति ॥३९॥

–नित्याऽऽत्मनि, अर्थक्रियाकारित्वस्य स्याद्वादसंनिवेशेन विरोधो न–

'नानाकार्यैक (क्य) करणस्वाभाव्ये च विरुद्ध्यते ।
स्याद्वादसंनिवेशेन, नित्यत्वेऽर्थक्रिया नहि ॥४०॥

टीकाः–ननु नित्याऽऽत्मवादेऽर्थक्रिया न घटते इति चेन्न, 'स्याद्वादसन्निवेशेन'=स्याद्वादमाश्रित्य, 'नानाकार्यैककरण स्वाभाव्ये=अनेककार्यकरणं एकः–केवलः स्वभाव आत्मनोऽस्ति, अर्थादात्मन एतादृशः केवलस्वभावोऽस्ति यस्मोऽनेककार्याणि क्रमेण करोत्येव, एवमथ नित्याऽऽत्मनि, अर्थक्रियाकारित्वनामककार्यजनकत्वरूपस्वभावस्य विरोधगन्धोऽपि नास्तीति 'तद्भावाऽव्यय नित्यमित्यपि स्मरणीयमत्र ॥४०॥

–एकस्मिन् द्रव्येऽनेकस्वभावा युष्माभिरपि मन्तव्याः–

'नीलादावप्यतद्भेद--शक्तयः सुवचाः कथम् ।
परेणाऽपि हि नाऽनेक--स्वभावोपगमं विना ॥४१॥

टीकाः-किञ्च नित्याऽऽत्मवादिनो वयं बौद्धान् पृच्छामः, यद् यद्येकस्मिन्ननेकस्वभावस्याऽस्वीकारे, तु युष्माकमापत्तिरागमिष्यति, तथाहि=नीले नीलभिन्ना ये पीतादयः सन्ति, तेषामनेकपीतादीनामनेकभेदा नीले वर्त्तन्ते, एता अनेकभेदशक्तयः-स्वभावविशेषा नीले कया रीत्या युष्माभिः स्पष्टीकरिष्यन्ते ? अत एकस्मिन्ननेकस्वभावा युष्माभिरपि मन्तव्या एवेति ॥४१॥

—अत्र क्षणिकवादे तु प्रेमनिवृत्तिनामको गुणोऽस्तीति विषयखण्डनम्—

'ध्रुवेक्षणेऽपि न प्रेम, निवृत्तमनुपप्लवात् ।
ग्राह्याकार इव ज्ञाने, गुणस्तन्नात्र दर्शने ॥४२॥

टीकाः-बौद्धैः कथितं यत् 'आत्मनि ध्रुवताया दर्शनेन तदुपरि रागो भवति, क्षणिकताया दर्शनेन रागस्य निवृत्तिरूपो गुणो भवति' तन्न चारु 'ध्रुवेक्षणेऽपि न प्रेम निवृत्तमनुपप्लवात्'=आत्मनि नित्यतायाः स्वीकारेऽपि तदुपरि प्रेम न सम्भवति प्रत्युत संक्लेशाऽभावे सत्युत्पद्यमानवैराग्यभावनया प्रेमैतन्निवृत्तं भवति, एतादृक्कश्चिन्नियमो नास्त्येकश आगतं वस्तु पश्चान्न निवर्त्तते यथा ज्ञानसन्ततौ भिन्नभिन्नविषयाणामाकारा ग्राह्या भवन्तीति यूयं मन्यध्वे, ते च ग्राह्याऽऽकारा निवृत्ताः किं न भवन्ति ? यथा ज्ञानसन्ततावागच्छन्तो ग्राह्यविषयाणामाकारा निवृत्ता भवन्ति तथा ध्रुवाऽऽत्मनि प्रेमाऽपि निवृत्तं भवति, अर्थात् 'अस्मिन क्षणिकवादे तु प्रेमनिवृत्तिनामकोगुणोऽस्ति' इति वस्तु सर्वथा न समञ्जसम् ॥४२॥

— एकान्ताऽनित्यवादे बहून् दोषान् प्रदर्श्य कथंचिन्नित्यात्मा स्वीकार्यः —

'प्रत्युताऽनित्यभावे हि, स्वतः क्षणजनुर्द्धिया ।
हेत्वनादरतः सर्व-क्रियाविफलता भवेत् ॥ ४३ ॥

टीका:=एवमात्मनो नित्यत्वस्वीकारे तु न कश्चिद्दोष आगच्छति, प्रत्युताऽऽत्मादिकस्यैकान्ताऽनित्यत्वस्वीकारे वहवो दोषा उपतिष्ठन्ते यतोऽत्र लोका एवं मन्यन्ते यत् , आत्मा स्वत उत्पद्यते तदनन्तरं स्वतो विनश्यति, अर्थादस्मदीयहिंसातः कोऽपि न म्रियते, रक्षणात् कोऽपि न रक्ष्यते, अभयदानतः कोऽपि न जीव्यते किञ्च–शुभकर्मबन्धतः सुखप्राप्तिः, अशुभकर्मबन्धतो दुःखप्राप्तिरित्यादिका अभिप्राया अपि भ्रान्ता भवन्ति शुभाऽशुभकर्मबन्धक आत्मा त्वनन्तरं नश्यति; ततः सुखादिकं कोऽनुभवेत् ? अथ यद्येवं सुखादावप्राप्ते सति शुभकर्मबन्धिका धर्मक्रिया अपि कः कुर्यात् ?

एवं सुखादिहेतुभूतकर्मणोऽनादेरसति सर्वक्रियाणां निष्फलत्वाऽऽपत्तिरप्यागच्छति, एतत् सर्वाऽऽपत्तिदूरीकरणे एक एवोपायोऽस्ति यत् आत्मा कथञ्चिन्नित्य इति स्वीकर्त्तव्य इति ॥ ४३ ॥

— बुद्धदर्शनमपि त्याज्यम्—

तस्मादिदमपि त्याज्य-मनित्यत्वस्य दर्शनम् ।
नित्यसत्यचिदानन्द–पदसंसर्गमिच्छता ॥ ४४ ॥

टीका:-तस्मात्-पूर्वोक्तकारणात्, 'नित्यसत्यचिदानन्दपदसंसर्गमिच्छता'=अविनाशिसच्चिदानन्दस्वभावस्थानसम्बन्धं स्पृहयता मुमुक्षुणा 'इदमपि त्याज्यमनित्यत्वस्य दर्शनम्'=पूर्ववदिदं शून्यवादप्रधानं बुद्धदर्शनं त्यागयोग्यमिति ॥ ४४ ॥

– साङ्ख्यमतस्य प्रतिपादनम्–

'न कर्त्ता, नाऽपि भोक्ताऽऽत्मा, कापिलानां तु दर्शने ।
जन्यधर्माश्रयो नायं, प्रकृतिः परिणामिनी ॥ ४५ ॥

टीका:-साङ्ख्या आत्मानं पुरुषपदेन सम्बोधयन्ति, पुरुषः शुभाऽशुभकर्मणां कर्त्ता न, भोक्ताऽपि न, कमलदलवन्निर्लेपः, संसारस्य कारणं प्रकृतिनामकं तत्त्वं, एषा प्रकृतिः पुरुषात् सर्वथा भिन्नाऽस्ति, अचेतनप्रकृतेः प्रतिबिम्बं चेतने पुरुषे पतति, तत एतादृश एवं पुरुषस्य भ्रमो भवति यदहं प्रकृतिरस्मि, एवं रीत्या प्रकृतेर्भ्रमो भवति पुरुषोऽहमस्मि' एवं सर्वथा भिन्नताविषयकज्ञानस्याऽभावात्–अभिन्नताया भ्रमस्य हेतुना पुरुषस्य संसार उत्तिष्ठते, यदैतस्य भ्रमस्य भङ्गो भवति, तदा प्रकृतिपुरुषौ भिन्नौ भवतः, एषैव पुरुषस्य मोक्षाऽवस्थाऽस्ति, एष पुरुष एकान्तनित्यत्वेन सर्वथा निष्क्रियोऽस्ति, तस्मिन् कोऽपि जन्यधर्म उत्पादाऽनर्हो भवति, ज्ञानादयोऽखिलजन्यधर्मास्तस्या जडप्रकृतेरेव सन्ति, यतः सा प्रकृतिः परिणामिनी, पुरुषश्चेत् परिणामी स्यात्तदा सोऽनित्यो भवेत्, सोऽपरिणामी सर्वथा मतोऽस्ति, अथ पूर्वो-

क्तरीत्या प्रतिबिम्बोदयवशात् , प्रकृतिपुरुषयोरभेदभ्रमो भवति, अत एव प्रकृतौ क्रियासुखादौ जाते सति, पुरुषस्यैवं भासते, अहं क्रियां करोमि सुख्यस्मि प्रकृतौ पुरुषत्वाऽभावे सत्यपि अभेदस्य भ्रमहेतुना तस्याः प्रकृतेरपि, एवमेव भासते "क्रियामहं करोमि" अहं सुख्यस्मीत्यादि, इदमत्र हृदयम्=बुद्ध्यहंकारादयो ये धर्माः प्रकृतेः सन्ति ते धर्माः पुरुषस्य निजे भासन्ते इति भ्रमो भवति, पुरुषे च यच्चैतन्यमस्ति जड-प्रकृतौ स्वस्यां भासनभ्रमो भवति, एतद्भ्रमस्य मूलकारणं पुरुषप्रकृतयोर्भेदाऽग्रहः ॥ ४५ ॥

– साङ्ख्यमताऽभिमतानि पञ्चविंशतिस्तत्त्वान्युच्यन्ते–

'प्रथमः परिणामोऽस्या बुद्धिर्धर्माष्टकाऽन्विता ।
ततोऽहङ्कारतन्मात्रे-न्द्रियभूतोदयः क्रमात् ॥ ४६ ॥

टीकाः–(१) पुरुषोऽपरिणामी (२) प्रकृतिः परिणामिनी, नित्या, (३) बुद्धिः–प्रकृतेः प्रथमः परिणामः, धर्माऽष्टकाऽन्विता=धर्म-ज्ञान-वैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यात्मकधर्माष्टकाऽन्विता, (४) अहङ्कारः बुद्धिजन्यं तत्त्वं (५) षोडशगणः=अहङ्कारजन्यः (शब्दस्पर्शरूपरसगन्धात्मिका=तन्मात्रा (५) श्रोत्रादीनि पञ्चेन्द्रियाणि, बुद्धीन्द्रियाणि (५) वाक्पाणिपादपायूपस्थात्मकानि, कर्मेन्द्रियाणि (१५) सङ्कल्पस्वरूपं मनः (१६) पञ्चतन्मात्राऽऽत्मकशब्दस्पर्शरूपरसगन्धेभ्यः क्रमश आकाशवायुतेजोजलपृथिव्यो जायन्ते ॥४६॥

– पुरुषस्य प्रकृतेश्च तत्त्वस्य सिद्धिः–

'चिद्रूपपुरुषो बुद्धेः, सिद्धयै चैतन्यमानतः ।
सिद्धिस्तस्या अविषयाऽवच्छेदनियमाच्चितः ॥ ४७ ॥

टीकाः–बुद्धौ 'अहं ज्ञानी-चेतन सुखीत्यादि यद्भ्रमात्मकं ज्ञानं भवति, तच्चेतनस्य स्वीकारं विनाऽनुपपन्नं भवति, यदि चैतन्यं कुत्राऽपि सत्यत्वेन विद्यमानं न भवेत्तदा तस्य बुद्धौ भ्रमो भवेत्, यद्वस्तु कुत्राऽविद्यमानं भवेत्तस्य कुत्रापि भ्रमो न भवेत्, बुद्धौ चैतन्यस्य भ्रमो जायते, तदुपपत्त्यर्थं चेतनतत्त्वमनिवार्यतया मन्तव्यम्, ननु बुद्धेः सर्वे जन्यधर्माः सुखादयश्चेतन एव स्वीकर्त्तव्यास्ततो बुद्धिकल्पनमनावश्यकमिति चेन्न, चेतनस्तु सर्वथा निष्क्रियोऽस्ति, यतः स एकान्तनित्योऽस्ति, अर्थाच्चेतने बाह्यादिविषयविषयकज्ञानादिक्रिया न सम्भवति, चेतनः कमपि विषय नावच्छिनत्ति, 'अविषयाऽवच्छेदनियमविषयाऽनवच्छेदनियमोऽस्ति, तथाऽपि तस्य विषयस्याऽवच्छेदरूप ज्ञानकरणस्य भ्रमस्तु भवत्येव, अर्थात्तत्सर्वं वस्तुतः बुद्धौ विद्यत एव; एवं स्वीकारे एव तया महाभेदभ्रमहेतुना चेतनेऽपि तद्भासते, एवं चेतनस्य जायमानभ्रमउपपद्यते, तस्माज्जन्यधर्माणां वास्तविकाऽऽश्रयरूपेण बुद्धितत्त्वमपि मन्तव्यम्, इदमत्र हृदयम्=बुद्धौ जायमानचैतन्यभ्रममुपपादयितुं प्रमाऽऽत्मकं चैतन्यं कुत्राऽपि मान्यमेव, यत्र चैतन्यं सत्यं

स एव पुरुषः, पुरुषे जायमानविषयात्वच्छेदभ्रममुपपादयितुं प्रमात्मको विषयावच्छेदः कुत्र स्वीकर्त्तव्यः, यत्र सत्यो विषयात्वच्छेदः, सा बुद्धिः स्वीकर्त्तव्येति ॥ ४७ ॥

– बुद्धितत्त्वमान्यताया अनिवार्यावश्यकता –

'हेतुत्वे पुंस्प्रकृत्यर्थे-न्द्रियाणामत्र निवृत्तिः ।
दृष्टाऽदृष्टविभागश्च, व्यासङ्गश्च न युज्यते ॥ ४८ ॥

टीकाः–(१) विषयावच्छेदे पुरुषस्य न हेतुः=यदि नित्यः पुरुषो नित्यं विषयाऽवबोधं कुर्यात्तदा कदाचिदपि तस्य न मोक्ष एव न स्याद् यतो विषयाऽवबोधक्रियाकरणस्य स्वभावः पुरूषस्य भवेत् , स्वभावश्च कदापि नष्टो न भवति (२) प्रकृतिरपि विषयावच्छेदं कर्तुं न शक्नोति=यदि प्रकृति विषयाऽवच्छेदकरणस्वभावा भवेत्तदा पुरुषाद् वियोगरूपो यस्तस्या मोक्षोऽस्ति, तस्या मोक्षाऽभवनरूपाऽऽपत्तिरागच्छेत् , (३) घटादिपदार्थाश्चैतन्यसम्बन्धिनो भूत्वा विषयावच्छेदिनो न भवन्ति=यदि घटादिपदार्थानां स्वभाव एतादृशोऽस्ति, यस्मात्स्वभावात्ते सर्वपदार्थाश्चैतन्यसम्बन्धिनो भवन्ति, तत्पश्चाद् 'घटो मया दृष्टः' 'पटो मया न दृष्टः' एतादृशो दृष्टाऽदृष्टविभागो जगति विद्यते, सोऽनुपपन्नो भविष्यति, यतोऽधुना तु सर्वेषां घटपटादिपदार्थानां चैतन्यसम्बन्धित्वभवनस्वभावात् , सर्वे चैतन्यसम्बन्धिनो भूत्वा दृष्टा एव भविष्यन्ति, न कोऽप्यदृष्टस्तिष्ठेदिति, ननु एतद्दोषाऽऽपत्त्या घटादिपदार्थान् साक्षाच्चैतन्य-

सम्बन्धित्वस्वभाववतो न स्वीकुर्मः परन्तु, इन्द्रियमात्रद्वारा (मनोविना) चैतन्यसम्बन्धित्वस्वभाववतः स्वीकुर्मः, अर्थाद् ये घटादयोऽर्था इन्द्रियद्वारा चैतन्यसम्बन्धिनो भवन्ति, ते दृष्टाः, अन्येऽदृष्टा भविष्यन्ति एवं दृष्टाऽदृष्टविभाग उपपन्नो भविष्यतीति चेन्न (४) इन्द्रियाणि विषयाऽवच्छेदं कर्तुं न शक्नुवन्ति=यदि केवलेन्द्रियद्वारा घटादौ चैतन्यसम्बन्धित्वं स्वीकृतं स्यात्तदा व्यासङ्गोऽनुपपन्नो भविष्यति, व्यासङ्गश्च ज्ञानोत्पत्तौ विलम्ब इत्यर्थः, एकमिन्द्रियं घटपदार्थेन सह सम्बन्धं करोति तदपि घटपदार्थविषयकं ज्ञानं न भवति, कदाचित् पदार्थेन सहेन्द्रियसम्बन्धे सत्यपि पदार्थज्ञानोत्पत्तौ विलम्बो भवति, अथ यदीन्द्रियद्वारा-घटादिपदार्थश्चैतन्यसम्बन्धि–भवनस्वभाववान् भवेत्तदा तत्कालमेव तस्य पदार्थज्ञानोत्पत्तिः स्यादेवं च भवनेऽर्थादेतादृशो ज्ञानोत्पत्तिविलम्बरूपव्यासङ्गोऽनुपपन्नो भवेदित्याऽऽपत्तिरागच्छेत , एतं व्यासङ्गा-भावमुपपादयितुं मनोऽपि मन्तव्यं स्यात् , यावन्मनःसहकृतं न स्यात्तावत्तत्पदार्थज्ञानोत्पत्तौ विलम्बः स्यात्तथाप्यनया रीत्येन्द्रियं मत्वा मत्वा बुद्धिनामकपदार्थो न स्वीक्रियेत तथाऽपि सिद्धिर्न भवति, यतः सुषुप्तौ इन्द्रियमनसो र्व्यापाराभावे सत्यपि तत्र श्वासनिःश्वासादिकक्रिया भवति, तस्या निमित्तत्वेन बुद्धिनामकं तत्त्वमवश्यं मन्तव्यम् , अर्थाद् विषयावच्छेदकारकं बुद्धितत्त्वं कथं न मान्यं स्यात् ? एवं रीत्या बुद्धितत्त्वस्य सिद्धि र्भवति, पुरुषः प्रकृतिश्चार्थश्चेन्द्रियाणि विषयावच्छेदकारकाणि नेति विषयोऽपि स्थिरो जात इति ॥ ४८ ॥

अहङ्कारतत्त्वस्य सिद्धिः—

'स्वप्ने व्याघ्रादिसङ्कल्पा-न्नरत्वाऽनभिमानतः ।
अहङ्कारश्च नियत-व्यापारः परिकल्प्यते ॥ ४९ ॥

टीकाः—प्रसुप्तस्य स्वप्नदशायां 'व्याघ्रोऽहं वराहोऽहमित्यादिभानाऽवसरे 'नरोऽह'मिति भानं न भवति, अर्थात्रेन्द्रियमनसो र्व्यापारोऽस्ति, नरत्वस्य स्वस्मिन् सन्निधानमप्यस्ति, तथापि तस्य 'नरोऽह-मिति भानं न भवति, व्याघ्रोऽहमथवा वराहोऽहमिति भानं भवति, 'नरोऽह'मिति भानाभावे यस्य व्यापार-स्य विरहः कारणमस्ति, तस्य व्यापारस्य सद्भावो 'नरोऽह'मिति भानकारणमस्ति, इति मन्तव्यमेवात एवा-ऽहङ्कारपदार्थसिद्धिः यदि स्वप्नदशायामहङ्कारस्य व्यापारः स्यात्तदा 'नरोऽह'मिति नियतं भानं स्यात्, एकदैक एव व्यापारो नियतस्तिष्ठति, एवं नियतव्यापारवानहङ्कारनामकः पदार्थः सिद्ध्यतीति ॥४९॥

—तन्मात्रादिषोडशगणस्य सिद्धिः—

'तन्मात्रादिक्रमस्तस्मा-त्प्रपञ्चोत्पत्तिहेतवे ।
इत्थं बुद्धिर्जगत्कर्त्री, पुरुषो न विकारभाक् ॥५०॥

टीकाः—पूर्वोक्ताऽहङ्कारनामकतत्त्वतस्तन्मात्रादिषोडशतत्त्वानि, पूर्वकथिताऽनुसारेणोत्पद्यन्ते एवं मन्तव्यमेव, यतस्तन्मात्रादिक्रमं विना प्रपञ्चरूपसंसारस्योत्पत्तिर्नघटते, एवं पञ्चविंशतिस्तत्त्वान्यवश्यं स्वी-

कर्त्तव्यान्येव, अनया रीत्या बुद्धिर्जगत्कर्त्तृस्वरूपेण सिद्धयति, पुरुषो निर्विकारी अपरिणामी समस्तीति निर्विकारत्वेन पुरुषः सिद्धयति, इदमत्रहृदयम्=बुद्धि घटादिज्ञानरूपेण परिणमन्ती वर्त्तते, बुद्धिसम्बद्धो विषयश्च स्वरूपमाच्छादयति, एषैव पुरुषस्य संसाराऽवस्था, यदा बुद्धेर्नाशः समुत्पन्नो भवति तदा विषयाऽवच्छेदो न भवति, अर्थात् पुरुषस्योपरितनं तदाच्छादनं विघटते, एष एव पुरुषस्य मोक्षः, यदा 'अहं प्रकृतितः (बुद्धितः) अत्यन्तं भिन्नोऽस्मि, अभेदस्य ज्ञानमेतत्तु भ्रान्तिरूपमस्ति, तादृशं भानं पुरुषस्य भवति, तदा नित्यप्रकृतितो नित्यःपुरुषो वियुक्तो भवति, एतत् प्रकृतिपुरुषयो र्वियोगवत्यवस्थैव मोक्षः ॥५०॥

–बुद्धे र्व्यापारः कृतिकरणरूपोऽस्ति एतस्या बुद्धेस्त्रयोंऽशाःसन्ति–

'पुरुषार्थोपरागो द्वौ, व्यापारावेश एव च ।
अत्रांशो वेद्म्यहं वस्तु, करोमीति च धीस्ततः ॥५१॥

टीका:–'वेद्म्यहं वस्तु' तादृशोऽध्यवसायो बुद्धे र्भवति, तदनन्तरं कृतिसत्क एतादृशोऽध्यवसायो भवति यत्'ममेदंकर्त्तव्यमिति (१) 'ममे'त्यंशः पुरुषोपरागरूपोऽस्ति, सोऽतात्त्विकोऽस्ति, यतः पुरुषेण सह बुद्धेर्वस्तुतो भेदोऽस्ति, तथापि तेन सहाभेद भ्रमहेतुना बुद्धे 'ममे' तादृशोऽध्यवसायो भवति, दर्पणे मुखस्य सम्बन्धरूपोपरागसमानः, बुद्धिरूपदर्पणे पुरुषस्य सम्बन्धोऽस्ति, वस्तुतो दर्पणे मुखस्याऽभेदस्य भानं भ्रान्तमस्ति, तथा बुद्धेः पुरुषात् स्वयमभिन्नोऽस्मीति भानं भ्रान्तमस्ति, तस्माद् बुद्धिगतो 'ममेत्यंशोऽतात्त्विकोऽस्ति

॥२६७॥

(२) 'इदं'=विषयोपरागरूपोंऽश एषः, इन्द्रियद्वारा बुद्धिर्बहिर्निर्गत्य तत्तद् घटादि विषयरूपेण परिणमति, एषा ज्ञानपरिणतिस्तात्त्विकी, दर्पणे मुखस्य निःश्वासेन यन्मलिनत्वं पतति, तद् यथा तात्त्विकं तथा मलिनत्वममाना ज्ञानपरिणतिरपि तात्त्विकी, बुद्धिनामको दर्पणोऽस्ति, यस्योभयपार्श्वतो वस्तुनः प्रतिबिम्बं पतति, एकतः पुरुषः प्रतिबिम्बितो भवति, अन्यतो विषयाः प्रतिबिम्बतः परिणमन्ति, (३) 'कर्त्तव्यमिति तृतीयोंऽशो व्यापारावेशरूपोऽस्ति, अर्थाद् बुद्धेः कृतेरध्यवसायरूप एष व्यापारावेशस्तात्त्विकोऽस्ति, यतो बुद्धौ कृतिगुणो वर्त्तते, बुद्धौ विषयस्य यज्ज्ञानं भवति, तद् बुद्धिरूपे दर्पणे, लग्नं मलरूपमस्ति, पुरुष एतद्दर्पणे प्रतिबिम्बतोऽस्ति, अर्थात् स मलः पुरुषस्य लग्नो दृश्यते, यथाऽऽदर्शे स्वमुखस्य द्रष्टुर्दर्पण लग्नो मलः स्वमुखस्योपरि भासते, वस्तुतस्तु दर्शकस्याऽऽस्यं स्वच्छमेवाऽस्ति, तथापि, आदर्शस्थितो मलो मुखं मलिनं दर्शयति, तस्मान्मुखस्योपरि लीनो मलो यथा वस्तुतस्तु भ्रान्तोऽस्ति तथा विषयोपरागस्वरूपं ज्ञानं, यन्मुखस्थानीयपुरुषे ज्ञायते तदतात्त्विकमस्ति ॥५१॥

—अनवच्छिन्नं चैतन्यं मोक्ष इष्यते—

'चेतनोऽहं करोमीति, बुद्धे र्भेदाऽग्रहात्स्मयः ।
एतन्नाशेऽनवच्छिन्नं, चैतन्यं मोक्ष इष्यते ॥५२॥

टीकाः—पुरुषस्यैवं भ्रमो जातोऽस्ति, यद् 'अहं' बुद्धेरभिन्नोऽस्मीति बुद्धया सह भेदाऽग्रहहेतुना

'चेतनोऽहं करोमी'ति तस्य पुरुषस्य यः कृतेरध्यवसायोऽस्ति, स भ्रान्तोऽस्ति, अत्र चेतने चैतन्यगुणस्तु वर्त्तत एव, तस्माच्चैतन्यांश एष तात्त्विकोऽस्ति, किन्तु 'कृत्यंशस्तु' अतात्त्विकः. यदा बुद्धिः 'याऽहंकरोमि, साऽहं चेतनः' एवं वाक्यं वदति, तदाऽत्राऽपि चेतनतः स्वस्य या भेदोऽस्ति तस्याऽज्ञानमेव, तस्यैताद्दशभानभवने हेतुरस्ति, अत्र बुद्धिः स्वस्यां कृत्यंशं मन्यते, तत्र काऽपि भ्रान्ति र्नास्ति, परन्तु स्वस्यां चैतन्यांशस्याऽभावेऽपि सा 'चेतनोऽहं' मिति वदति, तदा तत्र तस्या अवश्य भ्रान्तिरस्ति, अर्थाद् बुद्धिरिदं वाक्यं यदा वदति तदा चैतन्यांशो भ्रान्तो भवति, कृत्यंशश्च तात्त्विको भवति, पुरुषस्याऽध्यवसायगणनायां विपरीतं भवति, यदाऽभेदज्ञानं नष्टं भवति, अर्थात् पुरुषस्यैवं भवति यद् 'अहं बुद्धितः सर्वथा भिन्नोऽस्मि; तदैव 'अनवच्छिन्नं'=सकलविषयविषयकज्ञानरूपाऽवच्छेदस्यात्यन्ताभावविशिष्टं चैतन्यमेव पुरुषस्य मोक्ष इष्यत इति ॥५२॥

–कर्तृबुद्धिगते सुखदुःखे पुरुषे उपचारतः–

'कर्तृबुद्धिगते दुःखसुखे पुंस्युपचारतः ।
नरनाथे यथा भृत्य-गतौ जयपराजयौ ॥५३॥

टीकाः–कृतिस्तु बुद्धे र्गुणोऽस्ति, तस्माद् बुद्धिरेव कर्त्री, ततो बुद्धावेव वस्तुतः सुखादिरुत्पद्यते परन्तु तत्सुखादेरुपचारः पुरुषे भवति, यथा युद्धे सैनिका जयपराजयौ लभन्ते तथापि तयोरुपचारो नर-

॥२६१॥

नाथे भवतः, राजा जयति पराजयते च तथा वस्तुतस्तु पुरुषे सुखादिकं नास्त्येव; तथाप्यनया रीत्योपचारमात्रेण पुरुषे सुखादिकं स्यादिति ॥५३॥

–कर्त्ता भोक्ता च नो तस्मा-दात्मा नित्यो निरञ्जनः–

'कर्त्ता भोक्ता च नो तस्मादात्मा नित्यो निरञ्जनः ।
अध्यासादन्यथाबुद्धि-स्तथा चोक्तं महात्मना ॥५४॥
प्रकृतेः क्रियमाणानि, गुणैः कर्म्माणि सर्वथा ।
अहङ्कारविमूढाऽऽत्मा, कर्त्ताऽहमिति मन्यते ॥५५॥

टीकाः–तस्मादात्मा नो कर्त्ता च नो भोक्ता परन्तु नित्यो निरञ्जनः–सर्वथा रागाद्यञ्जनरहितस्तथाऽपि प्रकृत्या सहाभेदग्रहरूपाऽध्यासजन्याऽन्यथाबुद्धिरेवं भवति यत् 'सुख्यहं दुःख्यहं करोम्यहं' इत्यादि तथा च महात्मना कपिलेनोक्तं 'प्रकृतेः सत्त्वरजस्तमआदिगुणैः क्रियमाणानि सर्वथा कर्माणि भवन्ति, तथापि, अहङ्कारेण विमूढाऽऽत्मैवं मन्यते यत् 'तत्कर्मकर्त्ताऽहमस्मि', वस्तुतस्तु पुरुषः पुष्करपलाशवन्निर्लेपोऽस्ति, अकर्त्ताऽस्ति, अभोक्ताऽस्ति, परन्तु बुद्ध्या सहाऽभेदाऽध्यासात् 'कर्त्ताऽहं भोक्ताऽह'मिति मूढतां करोति ॥५४॥५५॥

-साङ्ख्यमतस्य खण्डनम्-

'विचार्यमाणं नो चारु, तदेतदपि दर्शनम् ।
कृतिचैतन्ययोर्व्यक्तं, सामानाधिकररायतः ॥५६॥

टीकाः-पूर्वोक्त बौद्धमतवत् साङ्ख्यमतमपि युक्तियुक्तं न, यतश्चेतने चैतन्यमस्ति, कृत्यादयश्च गुणा बुद्धौ' वर्त्तन्ते इति वैयधिकरण्यं न सम्यग्, यत एतादृशो नियमोऽस्ति यच्चैतन्यस्य कृतेश्चैकाधिकरणवृत्तित्वमेव ॥५६॥

-सांख्यमतखण्डनम्-

बुद्धिः कर्त्री च भोक्त्री च नित्या चेन्नास्ति निर्वृतिः ।
अनित्या चेन्न संसारः प्राग् धर्मादेरयोगतः ॥५७॥

टीकाः-यदा जडबुद्धिः कर्त्री च भोक्त्री तदैवं पृच्छयतेऽस्माभिः, कि सा बुद्धि र्नित्यावाऽनित्या ? यदि सा बुद्धिर्नित्या स्यात्तदा कदाचिदपि पुरुषस्य मोक्षो न भवेदित्याऽऽपत्तिरागमिष्यति यतो बुद्धिध्वंसे पुरुषस्य मोक्षः स्यादिति भवदीयः सिद्धान्तोऽस्ति, यदि बुद्धिध्वंसस्वीकारे 'बुद्धि र्नित्ये' ति सिद्धान्तो विलीनो भवेत्, अथ बुद्धिररनित्ये'ति पक्षे बुद्धिरुत्पादस्वभावा, यावद् बुद्धिर्नोत्पन्ना, तावद् बुद्धि-

स्थायिनो धर्माऽधर्माऽऽदयोऽपिनोत्पत्स्यन्ते, तदानीं पुरुषस्य संसार कुतः ? तथा पुरुषस्य मोक्षो जातः स्याद्, यतो धर्माऽधर्माभ्यामेव संसारः सम्भवति, यदि स पुरुषो धर्माऽधर्मादिशून्यः कदाऽप्यासीत्तदानीं तस्य मोक्षः किं न सञ्जातः ? तस्मिन् समये एनं पुरुषं संसारभावे गृहीत्वा बन्धनकर्त्ता क आसीत् ? इति ॥५७॥

-प्रकृतौ धर्मादिस्वीकारे घटादौ तादृग्धर्माऽन्वयः कथं न ?-

प्रकृतावेव धर्मादि-स्वीकारे बुद्धिरेव का ? ।
सुवचश्च घटादौ स्या-दीदृग् धर्माऽन्वयस्तथा ॥५८॥

टीकाः-ननु प्रकृतिस्तु परिणामिनीत्यऽस्ति, तत्र धर्माऽधर्मादिस्वीकारे नित्यस्थायिनो धर्माऽऽदयोऽपि प्रवाहतो नित्याः सञ्जाता अर्थात् पूर्वोक्ताऽऽपत्तिर्न स्थास्यतीति चेन्न यदि नित्यप्रकृतावेव धर्मादिस्वीकारः स्यात्तदा प्रश्न एवोऽस्ति यद् धर्मादिगुणशून्या बुद्धिः किमर्थं मान्या स्यात् ? अर्थाद् बुद्धितत्त्वमुड्डीनं भवति, किञ्च यद्यनया रीत्या जडप्रकृतावपि धर्माऽधर्मादयो गुणाः स्थातुं शक्या भवेयुस्तदा घटादिजडपदार्थेष्वपि धर्मादेरन्वयः-सम्बन्धो भवितुं शक्य एवं सुष्ठु रीत्या कथनीयं स्यादिति ॥५८॥

–कृतिभोगौ बुद्धेश्चेद् बन्धमोक्षौ नाऽऽत्मनः–

'कृतिभोगौ च बुद्धेश्चेद्—बन्धो मोक्षश्च नात्मनः ।
ततश्चात्मानमुद्दिश्य, कूटमेतद् यदुच्यते ॥५९॥

टीकाः–यदि कर्तृत्वं च भोक्तृत्वं च बुद्धेरेव गुणत्वेन गण्येते तदा निरुपचरितत्वेन बन्धश्च मोक्षो नात्मनो भवेतां, तत आत्मानमुद्दिश्य कपिलेन यद् वक्ष्यमाणमस्ति तत्कूटमुच्यते ॥५९॥

–कपिलेनात्मानमुद्दिश्य यत्प्रोक्तं तदुच्यते–

'पञ्चविंशतितत्त्वज्ञो, यत्र यत्राऽऽश्रमे रतः ।
जटी मुण्डी शिखी चाऽपि, मुच्यते नाऽत्र संशयः ॥६०॥

टीकाः–कपिलमुनिना कथितं यद् 'पञ्चविंशतिसङ्ख्याकतत्त्वज्ञः यत्र कुत्रचिदपि गृहस्थाश्रमादिकाश्रमचतुष्के रतःपरायणः, जटाधारी स्यान्नवा, जटाशून्यो मुण्डीवा, शिखाधारी स्यान्नवा स पुरुषो मुच्यते–मोक्षवान् भवति, अत्र विषये न संशयः, केवलं पञ्चविंशतितत्त्वज्ञः पुरुषो मोक्षायेष्ट एवेति ॥६०॥

–पुरुषे बन्धमोक्षयोरुपचरितत्वे मोक्षशास्त्रं वृथाऽखिलम्–

॥२७३॥

'एतस्य चोपचारत्वे मोक्षशास्त्रं वृथाऽखिलम् ।
अन्यस्य च विमोक्षार्थं, न कोऽप्यन्यः प्रवर्त्तते ॥६१॥

टीकाः—ननु पुरुषस्य बन्धमोक्षौ तूपचारत्वेन कथ्येते वस्तुतस्तु बुद्धिरेव बध्यते मुच्यते च तथाऽपि तयोरुपचारः पुरुषे भवति, पुरुषस्तु सदा मुक्त एव, पुरुषस्य बन्धमाक्षौ न स्तः इति चेन्न, यदि पुरुषे बन्धमोक्षावुपचरितौ भवेतां तदा मोक्षस्य प्रतिपादनं कुर्वतां भवतां मोक्षशास्त्रं समस्तं वृथा—निरर्थकं सिद्धं भवति यतः पुरुषाद् भिन्नाया बुद्धे निरुपचरितमोक्षाय पुरुषः कथं प्रयत्नं कुर्यात्? यज्ञदत्तस्य मोक्षाय सोमदत्तस्त्यागतपश्चर्यादिकं नैव कुर्यात् तद्वदत्रापि बोध्यमिति ॥६१॥

—तस्मात्कापिलानामस्मिन् मते रतिर्नैवोचिता—

'कापिलानां मते तस्मा--दस्मिन्नैवोचिता रतिः ।
यत्राऽनुभवसंसिद्धः, कर्त्ता भोक्ता च लुप्यते ॥६२॥

टीकाः—एतादृशे साङ्ख्यानां मतेऽस्मिन् रतिः—न रुचिः सर्वथा नोचिता—न युक्ता, यतो यत्रानुभवप्रमाणेन संसिद्धस्य कर्मकर्त्तुस्तत्फलभोक्तुरात्मनो विलोपः क्रियते ॥६२॥

(५) नास्ति निर्वाणमिति याज्ञिकमतप्रतिपादनम्—

'नास्ति निर्वाणमित्याहु--रात्मनः केऽप्यबन्धतः ।
प्राक्पश्चाद् युगपद् वाऽपि, कर्म--बन्धाऽव्यवस्थितेः ॥६३॥

टीकाः—आत्मनो नास्ति निर्वाणम् , यतो यो बध्यते स मुच्यते, आत्मा, कर्मणा न बध्यते एव, तदा तस्य मोक्षस्तु कथं भवेत् ? यद्यात्मा कर्मणा बध्यमानो भवेत्तदा प्रश्नत्रयी उपस्थीयते तथाहि=(१) किमात्मन उत्पत्तेः पूर्वमेव कर्मोत्पद्यते ? तेन कर्मणा स किं बध्यते ? यद्येवं वस्तुस्थितिः स्यात्तदा तत्सर्वथाऽसंगतं भवति यत आत्मकर्तृत्वहेतुना कर्मणि कर्मत्वमायाति, आत्मैव नास्ति तदा कर्तृत्वं विना, कर्मवस्तु, अस्तित्वाभाववद् भवति, कर्म विनाऽऽत्मनो बन्धो न भवति, बन्धं विना मोक्षोऽपि नैव० (२) किमात्मा, प्रागुत्पद्यते ? पश्चात्तं कर्म किं बध्नाति ? एष विपर्योऽपि न समीचीनो यतो, यतः केनाऽपि हेतुना विना कथमात्मोत्पद्यते ? उत्पत्तौ केनाऽपि कारणेन भवितव्यं कि न ? (३) किमात्मा कर्म च युगपदुत्पद्येते ? एतदपि न समीचीनम् , यतो युगपदुत्पन्ने वस्तुद्वये, एकः कर्त्ता, द्वितीयं कार्यं, एवं कर्तृत्वं कार्यत्वं च न घटेते, गोसम्बन्धिशृङ्गद्वये मिथः कर्त्तृत्वकार्यत्वे न घटेते एवात्मनि कर्मबन्धः कयाऽपि रीत्या न सङ्घाघटीति, आत्मनो मोक्षस्य वार्त्ताऽपि न सम्भवतीति ॥६३॥

– जीवकर्मणोरनादि सम्बन्धेऽनन्तत्वेनाऽत्मनो मोक्षो-न –

'अनादि-र्यदि सम्बन्ध—इष्यते जीवकर्मणोः ।
तदानन्त्यान्न मोक्षः स्या–त्तदाऽऽत्माऽऽकाशयोगवत् ॥६४॥

टीकाः-ननु जीवकर्मणोरनादितः सम्बन्धोऽस्ति, ततः प्राक्पश्चाद् युगपद् विषयकोत्पत्तेः प्रश्नो न सम्भवतीतिचेन्न, यदि जीवकर्मणोः सम्बन्धोऽनादिर्भवेत्तदा स सम्बन्धोऽनन्तोऽपि भवति, यस्याऽऽदिन तस्याऽन्तोऽपि न भवति, यथाऽऽत्माऽऽकाशयोगः, यतोऽनादिरस्ति ततोऽनन्तोऽस्ति, तथाऽत्रापि ज्ञेयमिति मोक्षो न स्यादेवेति ॥६४॥

– अमोक्षवादियाज्ञिकमत खण्डनम् –

'तदेतदत्यसम्बद्धं, यन्मिथो हेतुकार्ययोः ।
सन्तानाऽनादिता बीजा–ङ्कुरवद्देहकर्मणोः ॥६५॥

टीकाः-तदेतत् सर्वं याज्ञिकमतमसङ्गतम्, यत्र आत्माऽहेतुरस्ति, कर्मैतत्कार्यमस्ति, कर्मैतत्कारणमात्मनश्च विभिन्नपर्यायाः कार्यमस्ति, कर्मणा भिन्नभिन्नस्वरूपा भवाः प्राप्यन्ते, एतेषु च भवेषु कर्म बध्यते, पुनरेतेन कर्मणा भवाः प्राप्यन्ते, एवं द्वयोर्देहकर्मणो र्देहिकर्मणोर्वा परस्परं कार्यकारणभावोऽस्ति, यथा बीजाङ्कुरयोः, कार्यकारणभावः सन्तानतः प्रवाहतोऽनादिरस्ति तथाऽऽत्मकर्मणोर्देहकर्मणोर्वा कार्यकारणभावोऽपि सन्तानाऽनादिरूपोऽस्ति ॥६५॥

— सदृष्टान्त जीवः कर्मकर्त्ता, तत्फलभोक्ता चेति निरूपणम् —

'कर्त्ता कर्माऽन्वितो देहे, जीवः कर्मणि देहयुक् ।
क्रियाफलोपभुक् कुम्भे दण्डाऽन्वितकुलालवत् ॥६६॥

टीकाः-(१) सकर्मा जीवो देहस्य कर्त्ता, (२) सदेहो जीवः कर्मकर्त्ता भवति, (३) सदेहकर्मा जीवः कर्मणः सुखादिफलस्य भोक्ता भवति, यथा सदण्डः कुलालो घटस्य कर्त्ता, सकुम्भः कुलालो घटफल-भोक्ता भवति, तथा जीवः कर्मकर्त्ता, कर्मफलभोक्ता च भवतीति विषयः सिद्धो भवति ॥६६॥

— सोदाहरणमनादिसन्ततेर्नाशो भवतीति वर्णनम् —

'अनादिसन्ततेर्नाशः, स्याद् बीजाऽङ्कुरयोरिव ।
कुक्कुटयण्डकयोः स्वर्ण-मलयोरिव वाऽनयोः ॥६७॥

टीकाः-किञ्चानादिमन्ततेरन्तो न भवतीत्येतद् यन्निरूपितं, तन्न सम्यग् , बीजाऽङ्कुरयोरिव, कुक्कुटयण्डकयोरिव, स्वर्णमलयोरिव सन्ततेरनादित्वे सत्यपि विभिन्नोपायेनानादिसन्तते र्नाशो भवति, तथा प्रकृतेऽपि जीवकर्मणोरनादिमन्ततेः-प्रवाहतोऽनादि-सम्बन्धस्योपायविशेषेण नाशो भवतीति ॥६७॥

— अनादिसान्तभङ्गविशिष्टव्यवस्था भव्येष्वेव —

'भव्येषु च व्यवस्थेयं, सम्बन्धो जीवकर्मणोः ।
अनाद्यनन्तोऽभव्यानां, स्यादात्माऽऽकाशयोगवत् ॥६८॥

टीकाः-जीवकर्मणोरनादिसम्बन्धो नाश्यो भवतीत्यनादिसान्तभङ्गविशिष्टा, पूर्वोक्तव्यवस्था भव्यजीवेष्वेवाऽस्ति, यदाऽभव्यजीवेषु जीवकर्मणोरनादिसम्बन्धः कदाचिन्नाश्यो न भवतीति जीवकर्मणोः सम्बन्ध आकाशाऽऽत्मसम्बन्धवदनाद्यनन्तभङ्गविशिष्टोऽस्ति ॥६८॥

— जीवभावसमानेऽपि भव्याऽभव्यत्वयोर्भेदः —

'द्रव्यभावे समानेऽपि जीवाऽजीवत्वभेदवत् ।
जीवभावे समानेऽपि, भव्याऽभव्यत्वयो भिदा ॥६९॥

टीकाः-ननु जीवत्वं भव्याभव्ययोः समानमस्ति, तथाऽप्येको जीवो भव्योऽन्यो जीवोऽभव्यः कथ्यते तत्र किं कारणमिति चेदुच्यते. यथा जीवाऽजीवयो र्द्रव्यत्वं समानमस्ति, तथाऽप्येकं द्रव्यं जीव अन्यद्रव्यमजीव इति कथ्यते, तथाऽत्रापि बोध्यमिति ॥६९॥

— स्वाभाविकं भव्यत्व मोक्षे भव्यत्वनाशो भवति —

'स्वाभाविकं च भव्यत्वं, कलशप्रागभाववत् ।
नाशकारणसाम्राज्याद्, विनश्यन्न विरुद्ध्यते ॥७०॥

टीका:-ननु जीवस्य भव्यत्वं-मुक्तिगमनयोग्यत्वं स्वाभाविकमस्ति, ततः पश्चाज्जीवस्य मोक्षे जाते तस्य भव्यत्वस्य नाशः कथं ? किं स्वभावस्य नाशो भवति इति चेदुच्यते घटस्य प्रागभावः (अभाव-विशेषः) स्वाभाविकोऽस्ति तथाऽपि तस्य प्रागभावस्य नाशकारणानां दण्डकुलालघटादीनामुपस्थितौ तु तत् प्रागभावस्य नाशो भवति तथा प्रस्तुतेऽपि भव्यत्वनाशकारणभूतमुक्तिभावस्य प्राप्तौ भव्यत्वनाशे न कश्चिद् विरोधः, ननु जीवे स्वाभाविकं जीवत्वमप्यस्ति, तदा मोक्षप्राप्तौ किं जीवत्वस्यापि नाशो भवेदिति चेदुच्यते, जीवत्वमेतदुपादानकारणमस्ति, भव्यत्वमेतच्च सहकारिकारणमस्ति, मोक्षकार्योत्पत्तौ सत्यां भव्यत्वरूपसहकारिकारणं गच्छति, जीवत्वरूपोपादानकारणन्तु नैव गच्छति, यथा घटस्योत्पत्तौ सत्यां, घटसहकारिकारणभूतदण्डादिकं गच्छति, परन्तूपादानकारणीभूतमृत्तिका तु सदैव तिष्ठति, अर्थाद्घटरूपेण परिणमतीति ॥७०॥

—: भव्योच्छेदो नैवं स्याद् गुर्वानन्त्यान्नभोंऽशवत् :—

'भव्योच्छेदो न चैवं स्याद्, गुर्वानन्त्यान्नभोंऽशवत् ।
प्रतिमादलवत् क्वाऽपि, फलाभावेऽपि योग्यता ॥७१॥

टीका :—ननु यदि भव्येषु मोक्षगमनयोग्यता भवेत्तदाऽनन्तकालानन्तरमप्येतादृशः समय आगमिष्यति, तदाऽस्मिन् संसारे, एकोऽपि भव्यो जीवो न स्थास्यति, एकाकिभिरभव्यैर्जीवै भृ॑तः संसारः किं भविष्यति ? अथाऽत्रैवं कदाचित्समाधानं कुर्याद् यत् 'केचिद् भव्या मोक्षगता भविष्यन्ति, केचिन्न' तदैवं प्रश्नः स्यात्तदा तेषु भव्येषु स्थितस्य भव्यत्वस्य कोऽर्थः ? भव्यत्वस्य निष्फलताऽऽपत्ति र्भवेदिति चेन्न यथाऽऽकाशस्य प्रदेशास्तथा भविष्यत्कालस्य समया अष्टमेऽनन्ते स्थायिनो भवन्ति; तेषां कदाचिदप्यन्तो नाऽऽयाति, तथा भव्यजीवा अप्यष्टमेऽनन्ते तिष्ठन्ति, कस्मिश्चिदपि काले भव्यैः शून्यः संसारो भविष्यतीत्यापत्ति र्नागमिष्यति, भाविन्यनन्तकाले यदाऽपि कश्चिद् भव्याऽऽत्मा, केवलिनं भगवन्तं पृच्छेद् यत् 'अद्यपर्यन्ताः कतिपयसंख्याका भव्या मोक्षं प्राप्ताः स्युः' ? तस्यैकमेवोत्तरं सदा दास्यति भगवान्, यद् यावन्तो भव्याः सन्ति, तेषामनन्ततमो भागः सिद्धिपदं प्राप्तोऽस्ति, किञ्च—केचिदेतादृशा भव्याः सन्ति, ये जात्या भव्याः—जातिभव्याः कथ्यन्ते, तेषु सत्यपि भव्यत्वे ते कदाचिदपि मोक्षं न गमिष्यन्ति, एतावन्मात्रमपि न परन्तु ते जीवाः प्रत्येकतिर्यक्त्वमपि कदाचिदपि न प्राप्स्यन्ति, ततो मनुष्यो भूत्वा संयमव्रताद्याराध्य मोक्षगमनस्यापि का वार्त्ता ? ननु ततः पश्चात्तेषां भव्यत्वं किं न निष्फलं ? मोक्षे कदाऽपि न गच्छेयुस्तदा तेऽभव्याः किं न कथ्यन्ते ? इति चेन्न, स्वयंभूरमण-समुद्रस्याऽन्तस्तले स्थिते पाषाणे प्रतिमाभवनयोग्यताऽवश्यमस्ति, अस्तु तावत् पाषाणतः कदाचि

स्प्राप्तिर्न भवेत्तथाऽपि तस्या योग्यतायाः कथं नाशः स्यात् ? यदा कदा जातिभव्या मोक्षसामग्रीं प्राप्नुयुस्तदा तेषां मोक्षप्राप्तिः स्यात्, अभव्येषु तथा न भवति, तेषां बाह्यमोक्षसामग्रीसद्भावेऽपि मोक्षो न भवतीति ॥७१॥

—: यस्तु सिद्धयति सोऽवश्यं भव्य एवेति नो मतम् :—

'नैतद् वयं वदामो यद्-भव्यः सर्वोऽपि सिद्धयति ।
यस्तु सिद्धयति सोऽवश्यं, भव्य एवेति नो मतम् ॥७२॥

टीका:-वयमेतन्न वदामः 'यावन्तो भव्याः स्युस्ते सर्वे मोक्षमवश्यं गमिष्यन्त्येव परन्तु 'ये मोक्षं गताः सर्वे ते भव्या एवेति वदामो वयमर्थाद् योग्यताऽपेक्षया तादृशा अपि बहवो भव्याः सन्ति, ये कदाचिदपि मोक्षंगमिनो नैवेति ॥७२॥

—: प्रध्वंसवन्मोक्षस्य वर्त्तमानस्थितिर्जन्यत्वेऽप्यनन्ता :—

'ननु मोक्षेऽपि जन्यत्वाद् विनाशिनी भवत्स्थितिः ।
नैवं, प्रध्वंसवत्तस्या—निधनत्वव्यवस्थितेः ॥७३॥

टीका:-ननु मोक्षेऽपि भवत् स्थितिर्जन्याऽस्ति, मोक्षाऽवस्थानस्यैकदिवसे नाशो भविष्यति, यतो यज्जन्यं तद् विनाशीति नियमो वर्त्तते, यदि मोक्षे भवत् स्थितिर्विनाशिनी भवेत्तदा मुक्तस्य

पुनर्भवाऽऽपत्तिः स्यादिति चेन्न यथा घटादेर्ध्वंसो जन्योऽस्ति तथाऽपि स विनाशी नाऽस्ति, किन्तु नित्योऽस्ति यतो ध्वंसस्य ध्वंसो नास्त्येव, तस्मात्तादृशो नियमो नाऽस्ति 'यज्जन्यं तद् विनाशी' ति' एवं मोक्षे जायमानस्थितेर्जन्यत्वेऽपि, प्रध्वंसवद्, अनिधनत्व–अनन्तत्वव्यवस्था, तस्य–मोक्षस्य वर्त्तते, तस्मान्मुक्तस्य न पुनर्भवाऽऽपत्तिरिति ॥७३॥

–: ज्ञानादेः कर्मणो नाशे सत्यात्मनि किमधिकं भवति ? :–

'आकाशस्येव वैविक्त्या, मुद्गरादे र्घटक्षये ।
ज्ञानादेः कर्मणो नाशे, नात्मनो जायतेऽधिकम् ॥७४॥

टीकाः– ननु किमाऽऽत्मा कर्मणो मुक्तो भवेत्तदा तस्मिन् किमप्यधिकं न भवतीति चेन्न मुद्गरादिना घटस्य ध्वंसे कृते घटात्मकस्याऽऽवरणस्य गमने नभोऽपि किञ्चिदपि महत्त्वं भवति तथा ज्ञानादितः कर्मणो नाशे कर्मनामकावरणे विगते सति, आत्मनि किमप्यधिकं न भवति, अस्यात्मनो यदनन्तचिदानन्दमयं स्वस्वरूपं प्रकाशते एवेति ॥७४॥

कर्मनामकाणुसम्बन्धान्मुक्तस्य कथं मुक्तता ?

'नच कर्माऽणुसम्बन्धा-न्मुक्तस्याऽपि न मुक्तता ।
योगानां बन्धहेतूना-मपुनर्भवसम्भवात् ॥७५॥

टीका:- न च युष्मन्मते कर्मपुद्गलभूता अणवश्चतुर्दशरज्ज्वात्मके लोके सर्वत्र पूर्णतया भृताः पतिताः सन्ति, लोकाग्रे स्थितानां सिद्धानामपि कर्माऽणूनां सम्बन्धो भविष्यत्येव तस्मात्तेषां कर्माणु-सम्बन्धान्मुक्तानां मुक्तता नेति वाच्यम्, यतः कर्मबन्धहेतुभूता ये रागादिभावा मनोवाक्कायनामका योगाश्च स्युस्तेषु मुक्तेषु कस्यचिदपि बन्धहेतोरपुनर्भवसम्भवात् पुनः कर्मबन्धस्याऽवकाशोऽपि नास्त्येव कर्माणुसम्बन्धरूपस्पर्शमात्रेण मुक्ता अमुक्ता न भवन्त्येवेति ॥७५॥

—: यस्य तारतम्यं तेन प्रकर्षेण भाव्यम् :—

'सुखस्य तारतम्येन, प्रकर्षस्याऽपि सम्भवात् ।
अनन्तसुखसंवित्तिर्मोक्षः सिद्ध्यति निर्भयः ॥७६॥

टीका:-संसारेऽस्मिन सुखिषु जीवेष्वपि सुखस्य तारतम्यं-न्यूनाधिकभावो दृश्यते, एकस्माद् द्वितीयोऽधिकः सुखी, द्वितीयस्मात्तृतीयोऽधिकः सुखीत्येवमुत्तरोत्तरं सुखमधिकं दृश्यते, तस्मात् सुखस्य पराकाष्ठारूपः प्रकर्षः कुत्र सम्भावनीय एव यत्र सर्वोत्कृष्ट-प्रकृष्टाऽनन्तसुखस्य संवेदनं भवेत् स एव मोक्षःकथ्यते नाऽन्य इति मोक्षसिद्धिः ॥७६॥

—नास्तिकाभानां भ्रान्तानामात्मसत्तानिषेधकं हेयं वचः—

'वचनं नास्तिकाभाना-मात्मसत्तानिषेधकम् ।
भ्रान्तानां तेन नादेयं, परमार्थगवेषिणा ॥ ७७ ॥

टीकाः—तस्माद् भ्रान्तानां नास्तिकाभानां वस्तुतस्त्वात्मसत्तानिषेधकं वचनं परमार्थगवेषिणा तेन नाऽऽदेयम् , आत्मनः कर्मणो बन्धं च मोक्षं चाऽमन्वानाः, श्रीग्रन्थकारेण नास्तिका इति न कथयता 'नास्तिकाऽऽभाः' कथ्यन्ते, यत एते जीवाः स्थूलदृष्टया विचार्यमाणे त्वात्मानं मन्यन्त एवं दृश्यते, तथाऽपि सद्भिव सूक्ष्मदृष्टया विचारयता ग्रन्थकारेण ज्ञातं यत् , ते आत्मसत्तामेव च न मन्यन्ते, यतो ये आत्मनो मोक्षं न मन्यन्ते, त आत्मनः कर्मणो बन्धमपि नैव मन्यन्ते, अत आत्मनः कर्मबन्धहेतुभूतं रागादिकमपि नैव मन्यन्ते, एवं सति रागादिमयस्य संसारिण आत्मनः सत्ताया लोप एव कृतः, किञ्च वीतरागस्वरूपमात्मानमपि ते न मन्यन्ते, यत एषा तु आत्मनो मोक्षाऽवस्थाऽस्ति, आत्मनो मोक्षं तु ते न मन्यन्ते, एवं द्विधाऽऽत्मनः सत्तानिषेध एव मोक्षनिषेधः फलितो भवति, अर्थात् सूक्ष्मदृष्टया तु ते आत्माऽस्तित्वप्रतिषेधकाः नास्तिका एव कथ्यन्ते, यदा स्थूलदृष्टया नास्तिकाभासाः कथ्यन्ते, यत आत्मानं तु मन्यन्ते इति ॥७७॥

—षष्ठपदं मोक्षोपायो नास्तीति-माण्डलिकमतमण्डनम्—

'न मोक्षोपाय इत्याहुरपरे नास्तिकोपमाः ।
कार्यमस्ति न हेतुश्चेत्येषा तेषां कदर्थना ॥ ७८ ॥

टीका:—केचिन्माण्डलिकमताऽनुयायिनः, मोक्षरूपकार्यं तु मन्यन्ते, मोक्षस्योपायं न मन्यन्ते, एते लोका अपि नास्तिकसदृशा एव, मोक्षाऽऽत्मकं कार्यं स्वीकार्यं च तस्योपायस्तु न स्वीकार्य इत्येषा कीदृशी तेषां मोहकृतकदर्थना ! एषां लोकानामेतादृशं मन्तव्यमस्ति यदुपायं विनैव मोक्षः प्राप्यते, नियतित एव मोक्षःसाध्योऽस्ति, यदि नियतिर्बलीयसी न भवेत्तदा मोक्षोपायशतेनाऽपि किमपि न सिद्ध्यतीति ॥ ७८ ॥

—नियतावधौ समाप्तेऽकस्मादेव मोक्ष इति मतस्य खण्डनम्—

'अकस्मादेव भवतीत्यलीकं नियतावधेः ।
कादाचित्कस्य दृष्टत्वाद्, बभाषे तार्किकोऽप्यदः ॥ ७९ ॥

टीका:—एतन्मताऽनुयायिनामेतत् कथनमस्ति यत् 'जीवस्य मोक्षगमनाय योऽवधि नियतोऽस्ति तदवधौ समाप्तेऽकस्मादेव जीवस्य मोक्षो भवतीति-अथ माण्डलिकमतखण्डनम्—

एतत् पूर्वोक्तं मतं सर्वथाऽसत्यमस्ति, यतः 'यत्कार्यस्यावधिर्नियतोऽस्ति, तत्कार्यं सर्वं कादाचित्कं भवति. यत्कार्यं कादाचित्कं (कदाचिद् भवत) भवति, तत् सदाकालं सहेतुकं (हेतुजन्यं) भवति, एषा वार्त्ता तार्किकेणोदयनाचार्येणाऽपि कुसुमाञ्जलिग्रन्थे कथिताऽस्ति तथाहि—॥ ७९ ॥

'हेतुभूतिनिषेधो न स्वानुपाख्याविधिर्न च ।
स्वभाववर्णना नैव-मवधेर्नियतत्वतः ॥ ८० ॥

टीकाः-कार्यस्याऽकस्माद् भवनमित्युक्ते कोऽर्थः ? अवधेर्नियतत्वतः, पञ्च विकल्पाः प्रस्तूयन्तेऽथ तावत्, (१) हेतुनिषेधो न=यदि हेत्वभाव एव कार्यं स्यात्तदा सर्वदा कार्यं स्यादेव, एवन्तु न भवति, कदाचिदेव कार्यं भवति, (२) भूतिनिषेधो न=अकस्माद्भवनस्यार्थो यदि हेतुजन्यकार्यभवनाभावो भवेत्तदा कदाचिदपि कार्यं न भाव्यमेव, एषा वार्त्ताऽप्युभयमतसम्मता नास्ति, यतः कार्यं कदाचित्तु भवत्येव (३) स्वविधि र्न=अकस्माद् भवनमर्थाद्हेतुभिन्नात् कार्याद् भवनं—कार्यात् कार्यस्य भवनमिति स्वीकारे कार्यात्पूर्वं कार्यस्थित्यापत्तिः स्यात्, एतत्तु कथं भवेत् ? कार्योत्पत्तेः पूर्वं कथं कार्यं तिष्ठेत् ?

(४) अनुपाख्यविधिर्न=अकस्माद् भवनमर्थाद् हेतुभिन्नाद् भवनं अनुपाख्यादलीकाद्भवनं, अलीकपदार्थास्तु सदा वर्त्तन्ते, तस्मात् प्रागेव तानि कार्याणि किं न भवन्ति ? एवं स्थिते कार्यस्य सदातनभवनाऽऽपत्तिर्भवेत्, वस्तुतस्त्वलीकं वस्तु कस्यचित् कार्यस्य जनकं न भवत्येव, यतस्तस्मिन् कार्यजनकत्वं (अर्थक्रियाकारित्वं) नास्त्येव सद्वस्तुन्येव कार्यकारित्वं स्यात् ।

(५) स्वभाववर्णना न=स्वभाववर्णनतः—कथनतः कार्यं न भवत्येव, स्वभाव इत्युक्ते धर्मो वाच्यः स्यात्तदा त्विष्टापत्तिरेव, यतः कारणतारूपधर्मतः कार्यं भवत्येवैवं पञ्चानां विकल्पानामर्थो न घटते एव, यतः प्रत्येकं कार्यं नियतावधिमदेव भवति, तस्मादकस्मान्मोक्षस्य भवनं-उत्पत्तिरिति कथनमुन्मत्तप्रलापप्रायं ज्ञेयमिति ॥ ८० ॥

–सर्वव्यापकमोक्षस्याऽभावो यतः संसारोऽपि दृश्यते–

'न च सार्वत्रिको मोक्षः, संसारस्याऽपि दर्शनात् ।
न चेदानीं न तद् व्यक्ति-र्व्यञ्जको हेतुरेव यत् ॥८१॥

टीकाः–किञ्च यदि मोक्षोऽकस्माद् भावी स्यात्तदा सर्वत्र सर्वदा सर्वस्य मोक्षो भूतकाले सञ्जातो भवेदपितु नास्त्येवं यतः संसारिजीवानामपि संसारो दृश्यते एव, ननु वर्त्तमानकाले मोक्षभावस्य व्यक्तिस्तु नास्त्येवेति चेन्न, अस्तु तावदत्र मोक्षभावो नाऽभिव्यज्यते परन्तु मोक्षस्य रत्नत्रयीरूपो हेतु रभिव्यञ्जको विद्यत एवेति ।८१॥

–मोक्षोपायो रत्नत्रयीरूप एव सुनिर्णीत एव–

'मोक्षोपायोऽस्तु किन्त्वस्य, निश्चयो नेति चेन्मतम् ।
तन्न, रत्नत्रयस्यैव, तथाभावविनिश्चयात् ॥ ८२ ॥

टीकाः–ननु प्रत्येकदर्शनं, मोक्षस्य विविधानुपायान् दर्शयति, तस्मान्मोक्षस्योपायो जगति विद्यमानोऽस्ति, तथापि को मोक्षस्योपायः सत्य इति निश्चयोऽद्य यावन्न जातोऽस्तीति मतं चेन्न, सम्यग्दर्शनज्ञानचारित्ररूपा रत्नत्रय्येव मोक्षस्योपायोऽस्ति, यत आप्तपुरुषपुङ्गवैर्मोक्षस्योपायत्वेन रत्नत्र स्यैव विनिश्चयो निर्दिष्टो वर्त्तते ॥ ८२ ॥

—भवतत्कारणयोर्विरोधिमोक्षतत्कारणनिरूपणम्—

'भवकारणरागादि-प्रतिपक्षमदः खलु ।
तद् विपक्षस्य मोक्षस्य, कारणं घटतेतराम् ॥ ८३ ॥

टीकाः—यदि संसारोऽस्ति, तस्य च रागादिमिथ्यादर्शनादीनि कारणानि सन्ति, यदा च संसारस्य विरोधी मोक्षोऽप्यस्ति तदा संसारकारणमिथ्यादर्शनादिविरुद्धेन मोक्षकारणेन भवितव्यम्, तत्कारणं च सम्यग्दर्शनादिरत्नत्रयमेवेति, यथा रोगतत्कारणकुपथ्यादिविपक्षारोग्यतत्कारणसुपथ्यौषधाद्यप्यत्र चिन्त्यम् ॥८३॥

— पूर्वसेवाऽऽदिजन्यकर्मलघुतैव मोक्षकारणमस्तु किं रत्नत्रयेण—

'अथ रत्नत्रयप्राप्तेः प्राक्कर्मलघुता तथा ।
परतोऽपि तथैव स्या-दिति किं तदपेक्षया ॥८४॥

टीकाः—मोक्षकार्यं प्रति रत्नत्रयं कारणं माऽस्तु यतो रत्नत्रयप्राप्तेः प्रागपि जीवस्य पूर्वसेवादिकारणजन्यकर्मलघुता भवन्ती समागताऽसीत्, तादृशीं कर्मलघुतां विना रत्नत्रयप्राप्तिर्न भवति, ततोऽधुनैषैव पूर्वसेवादिकारणकर्मलघुता, वर्धमाना २ यावत सर्वकर्मक्षयो भवेदिति वाच्या, अथ सर्वकर्मक्षयकृते रत्नत्रयं नाऽऽवश्यकं परन्तु एतत्पूर्वसेवाऽऽदिजन्यकर्मलघुतैव मोक्षं प्रति कारणमस्त्विति चेत् ॥८४॥

—तस्मात् सम्यक्त्वादिक्रिया दृढैव शिवसाधने—

नैवं यत्पूर्वसेवैव, मृद्वी नो साधनक्रिया ।
सम्यक्त्वादिक्रिया तस्माद्दृढैव शिवसाधने ॥ ८५ ॥

टीकाः—मार्गानुसारिताया गुणप्रापिकाः पूर्वसेवादिक्रियाः सन्ति, ता अतिशयमृद्वयो भवन्ति, तादृश्यः कोमलक्रिया मोक्षाय साधीयस्यो न भवन्ति, मोक्षस्य साधने त्वत्यन्तदृढा एव क्रिया आवश्यकयस्तादृश्यस्तु रत्नत्रयस्याराधनारूपा अतिदृढसम्यक्त्वादिक्रिया एव, तस्मात्पूर्वसेवादिक्रियाभिर्मोक्षप्राप्तिर्दूरापास्तैव ॥ ८५ ॥

—अथ वेत्युक्त्वा पक्षाऽन्तरमाह—

गुणाः प्रादुर्भवन्त्युच्चै-रथवा कर्मलाघवात् ।
तथाभव्यतया तेषां कुतोऽपेक्षानिवारणम् ॥ ८६ ॥

टीकाः—अथवा तत्तज्जीवानां तथाभव्यत्वपरिपाकबलतः कर्मणो लाघवं भवत्येव, कर्मलघुताया बलत उच्चैःसम्यग्दर्शनादयो गुणाः प्रादुर्भवन्ति, सम्यग्दर्शनादिगुणानां बलतो मोक्षो भवति, अथ वस्तुस्थितिरेतादृश्येव यदा, तदा तेषां सम्यग्दर्शनादिगुणरूपकारणानां कुतः-कस्मादपेक्षानिवारणम् ? अर्थान्मोक्षकारणतयाऽवश्यं सम्यग्दर्शनादिगुणाः सर्वथाऽपेक्षिता एवेति ॥ ८६ ॥

—अन्योऽन्यसहकारित्वेन तथाभव्यत्वपाक-कर्मलाघव-सम्यग्दर्शनादिगुणाः समुदितत्वेन मोक्षं प्रति हेतवः—

'तथाभव्यतयाऽऽक्षेपाद् गुणा न च न हेतवः।
अन्योऽन्यसहकारित्वाद्, दण्डचक्रभ्रमादिवत् ॥८७॥

टीकाः—ननु आक्षेपकतथाभव्यतया सम्यग्दर्शनादिभावा आक्षिप्यमाणा भवन्ति, तथाऽपि मोक्षं प्रति तत् सम्यग्दर्शनादयः कथं कारणं ? सम्यग्दर्शनादिभावान् य आक्षिपति स तथाभव्यत्वादिरेव हेतुः स्वीक्रियताम्, मोक्षं प्रति सम्यग्दर्शनादिर्हेतुर्मा स्वीक्रियतामिति चेन्न, तथाभव्यत्वपरिपाकः, कर्मलघुता च तथा सम्यग्दर्शनादयश्च गुणाः सर्वेऽन्योऽन्यसहकारित्वेन हेतवो भूत्वैव मोक्षकार्यमुत्पादयन्ति, यथा दण्डचक्रभ्रम्यादयः सर्वे सम्भूय घटकार्यमुत्पादयन्ति तथाऽत्रापि ज्ञेयम्, अर्थाद् घटं प्रति दण्डेनोत्पद्यमानायाश्चक्रभ्रमेः कारणता न निषेध्या, तथा मोक्षं प्रति तथाभव्यत्वादितो जायमानसम्यग्दर्शनादेः कारणताऽपि कथं प्रतिषेध्या स्यादपितु नैव प्रतिषेध्या स्यादिति ॥ ८७ ॥

—भवक्षयं प्रति ज्ञानदर्शनचारित्राण्युपायाः—

'ज्ञानदर्शनचारित्रा–ण्युपायास्तद्भवक्षये ।
एतन्निषेधकं वाक्यं, त्याज्यं मिथ्यात्ववृद्धिकृत् ॥८८॥

टीकाः–तत्–तस्मादेव सुनिश्चितं स्थितं यत् 'मोक्षोऽस्ति, तस्योपायाः सन्ति' मोक्षोपायत्वेन ज्ञानदर्शनचारित्राण्येव सुनिश्चितानि यतस्ते उपाया एव संसारस्य क्षयं कर्तुं प्रत्यलाः, एवं निश्चये सत्यपि यदि यः कश्चिदिदं सत्यं प्रतिक्षिपेत्तदा तन्निषेधकं वाक्यं सदा सर्वथा त्याज्यं यत ईदृशं वचनं मिथ्यात्वस्य वृद्धिं कुर्वदाऽऽस्ते ॥ ८८ ॥

-मिथ्यात्वत्यागस्योपसंहारः-

'मिथ्यात्वस्य पदान्येता–न्युत्सृज्योत्तमधीधनः ।
भावयेत्प्रातिलोम्येन, सम्यक्त्वस्य पदानि षट् ॥ ८९ ॥

टीकाः–'उत्तमधीधनः'=अपूर्वनिर्मलबुद्धिरूपधनसम्पन्नो महात्मा, मिथ्यात्वस्यैतानि षट् पदान्युत्सृज्य–विहाय 'प्रातिलोम्येन'='आत्मा नास्तीत्यादीनां मिथ्यात्वस्य षण्णां पदानां प्रतिपक्षत्वेन 'आत्माऽस्ती'त्यादीनि सम्यक्त्वस्य षट्पदानि भावयेदनुप्रेक्षेत-भावनापथं नयेदिति यावत् ॥ ८९ ॥

---

इत्याचार्य श्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्याया टीकाया मिथ्यात्वत्यागनामकस्त्रयोदशोऽधिकारः समाप्तः ॥४७२॥

– अथ कदाग्रहत्यागनामकश्चतुर्दशोऽधिकारः –

–कदाग्रहत्यागः सर्वथा कर्त्तव्यः–

'मिथ्यात्वदावानलनीरवाहमसद्ग्रहत्यागमुदाहरन्ति ।
अतो रतिस्तत्र बुधैर्विधेया, विशुद्धभावैः श्रुतसारवद्भिः ॥१॥

टीकाः–यत्र यत्र चित्ते कदाग्रहस्तत्र तत्र मिथ्यात्वभावः, यत्र यत्र चित्ते कदाग्रहत्यागस्तत्र तत्र मिथ्यात्वपरिहार इति व्याप्तिः, मिथ्यात्वरूपदावानलप्रशमने महामेघरूपपुष्करावर्त्तमसद्ग्रहत्यागमुदाहरन्ति–कथयन्ति महर्षिपुंगवा, अतः-अस्मात्कारणात्, तत्र-असद्ग्रहत्यागे, 'रतिः' अपूर्वोऽनुरागः, 'श्रुतसारवद्भिः'=जिनेन्द्रप्रवचनभक्तिरूपश्रुतरहस्यसंपन्नैः, विशुद्धभावैः'=मैत्र्यादिसुदेवादितत्त्वविषयकसुपवित्राध्यवसायमहर्द्धिकैर्बुधैः-तत्त्वज्ञानिभिर्विधेया-कर्तव्येति ॥१॥

– कदाग्रहज्वलिताऽन्तःकरणे लोकोत्तरलतापुष्पफलप्रत्याशा का ? –

'असद्ग्रहाग्निज्वलितं यदन्तः, क्व तत्र तत्त्वव्यवसायवल्लिः ।
प्रशान्तपुष्पाणि हितोपदेश–फलानि चान्यत्र गवेषयन्तु ॥२॥

टीकाः-'असद्ग्रहाग्निज्वलितं यदन्तः'=यदन्तःकरणं कदाग्रहरूपाऽग्निना ज्वलितं, तत्राऽन्तःकरणे 'क्व तत्त्वव्यवसायवल्लिः'=सत्यतत्त्वविषयकनिश्चयरूपा लता कुतो दृश्यमाना स्यात्, १ 'प्रशान्तपुष्पाणि हितो-

पदेशफलानि च क्व'=प्रशमरसास्वादकभावनामकपुष्पाणि कुतो दृश्यमानानि स्युः ? च हितकारकोपदेश-रूपफलानि कुतो दृश्यमानानि स्युः ? अर्थात्कदाग्रहान्वित आत्मनि तत्त्वनिश्चयप्रशमभावहितोपदेशानामसम्भवः, तस्मादन्यत्र कदाग्रहरहित आत्मनि तत्त्वनिश्चयादीन् गवेषयन्तु-पश्यन्तु, यतस्तत्रैव तत्त्वनिश्चयादीनां सम्भवोऽस्ति ॥ २ ॥

ज्ञानलवदुर्विदग्धाः कदाग्रहिणः पण्डितमानिनो वचोरहस्यरहिता भवन्ति ।

'अधीत्य किञ्चिच्च निशम्य किञ्चिदसद्ग्रहात्पण्डितमानिनो ये ।
मुखं सुखं चुम्बितमस्तु वाचः, लीलारहस्यं तु न तैर्जगाहे ॥३॥

टीकाः–स्वल्पमधीत्य च स्वल्पं श्रुत्वा, ये ज्ञानलवदुर्विदग्धा 'असद्ग्रहात् पण्डितमानिनः' आत्मानं पण्डितमिव मन्यन्ते ये, 'वाचश्चुम्बितं मुखं सुखमस्तु'=वाण्या मुखस्पर्शजन्यसुखमात्रमस्तु परन्तु वाण्याः सङ्गमजलीलायाः–क्रीडाया रहस्यं तैः–पण्डितमानिभि र्न जगाहे-नावगाढमिति ॥ ३ ॥

– कदाग्रहिभिर्मानिभिर्जडैर्वितण्डापाण्डित्येन त्रिलोकी विडम्ब्यते—

'असद्ग्रहोत्सर्पदतुच्छदर्प-बोधांशताऽन्धीकृतमुग्धलोकैः ।
विडम्बिता हन्त जडैर्वितण्डापाण्डित्यकण्डूलतया त्रिलोकी ॥४॥

टीका:-असद्ग्रहोत्सर्पदतुच्छदर्पैः'=कदाग्रहोच्छलदमानाभिमानवद्भिः, 'बोधांशताऽन्धीकृतमुग्धलोकैः=ज्ञानलवेनाऽन्धीकृता मुग्धा लोका यैस्तैः, 'जडैर्वितण्डापाण्डित्यकण्डलतया'=मूर्खैं निरर्थकजल्पवादविषयकपाण्डित्यकण्डूलतया (कपिकच्छूनामककण्डूलतयाऽथवाकण्डूलस्य भावः कण्डूलता, तयेत्यर्थः) (कौनचेतिभाषायां, खाज-खरज इति भाषायां) हन्तेति खेदे त्रिलोकी=त्रिभुवनं, विडम्बिता-कदर्थितेति ॥४॥

— असद्ग्रहः कोऽपि कुहूविलासः —

'विधोर्विवेकस्य न यत्र दृष्टिस्तमोघना तत्त्वरविर्विलीनः ।
अशुक्लपक्षस्थितिरेष नूनमसद्ग्रहःकोऽपि कुहूविलासः ॥५॥

टीका:-यत्र-यस्मिन्नसद्ग्रहे तत्त्वरूपो रविर्विलीनः-अस्तङ्गतः, यत्र तमोघनं=अज्ञानरूपं तमो गाढं, यत्र विवेकनामकचन्द्रस्य दृष्टिर्न, नूनमेषोऽसद्ग्रहः=कदाग्रहः, 'अशुक्लपक्षस्थितिः'=अचरमावर्त्तरूपकृष्णपक्षे स्थितिर्यस्य स कदाग्रहः, कोऽपि-अपूर्वः 'कुहूविलासः'=सा नष्टेन्दुःकुहुःकुहूः' इत्यभिधानकोशप्रमाणेन चन्द्रशून्याऽमावास्याया विलासवद् विलासो यस्य सोऽर्थात् भावप्रकाशांशशून्यः कदाग्रहः, वस्तुतोऽचरमावर्तेऽसद्ग्रहो वर्त्तते तत्र तत्त्वाऽदर्शनविवेकलोपगाढाज्ञानादयो दोषा विलसन्तीति ॥ ५ ॥

— कदाग्रहाच्छन्नमतिर्मनुष्यः किं पापं न कुर्यात् !

'कुतर्कदात्रेण लुनाति तत्त्व-वल्लीं रसात् सिञ्चति दोषवृक्षम् ।
क्षिपत्यधः स्वादुफलं शमाख्य-मसद्ग्रहच्छन्नमतिर्मनुष्यः ॥६॥

टीका:-'असद्ग्रहच्छन्नमतिर्मनुष्यः'=कदाग्रहाच्छादिता (नष्टा) मतिर्यस्य, स मनुष्यः, 'कुतर्कदात्रेण तत्त्ववल्लीं लुनाति' कुतर्कनामकदात्रद्वारा तत्त्वरूपलतां छिनत्ति, कुतर्कीभूत्वा रहस्योच्छेदकारी भवति, रसात् सिञ्चति-दोषवृक्षं'=आन्तरमलिनभावरस-जलात् , दोषरूपवृक्षं सिञ्चति-मलिनभावरूपरसद्वारा दोषवृद्धिमान् भवति, 'शमाख्यं स्वादुफलमधः क्षिपति'=शमनामकं सुमधुरस्वादविशिष्टं फलमधस्तात् क्षिपति, अर्थात् कदाग्रही मनुष्यः, भ्रष्टमतिको भूत्वा कुतर्कनिमित्तद्वारा तत्त्वश्रद्धाहीनः सन् , रसापेक्षया दोषवृद्धिमान् , प्रशमनामकफलशून्यो भवति ॥ ६ ॥

– कदाग्रहनामकपाषाणमये चित्ते सद्भावविशुद्धबोधौ न भवतः –

असद्ग्रहग्रावमये हि चित्ते, न क्वाऽपि सद्भावरसप्रवेशः ।
इहाऽङ्कुरश्चित्तविशुद्धबोधः, सिद्धांतवाचां बत कोऽपराधः? ॥७॥

टीका:-'असद्ग्रहग्रावमये हि चित्ते'=निश्चयतः कदाग्रहरूपपाषाणघटिते चित्ते 'न क्वापि सद्भावरसप्रवेशः' कुत्रचिदपि तादृशे प्रस्तरघटिते चित्ते शोभनभावरूपधर्मध्यानरूपजलस्य प्रवेशो न, 'इहा-

॥२९५॥

ऽङ्कुरश्चित्तविशुद्धबोधः'=इह कदाग्रहशिलामये चित्ते, आध्यात्मिकविशुद्धबोधनामकाङ्कुरो नाविर्भवति, तत्र 'सिद्धान्तवार्ता=जिनेन्द्रवरागमवचनानां वर्तेतिनिश्चये कोऽपराधः ? एषोऽपराध एतस्या भूमेरेवेति ॥७॥

– व्रततपः पिण्डशुद्धीनां फलं नाऽभून्निह्नवानां स कदाग्रहस्याऽपराधः

'व्रतानि चीर्णानि तपोऽपि तप्तं, कृता प्रयत्नेन च पिण्डशुद्धिः ।
अभूत्फलं यत्तु न निह्नवाना–मसद्ग्रहस्यैव हि सोऽपराधः ॥८॥

टीकाः--यैर्निह्नवैर्व्रतानि-महाव्रतान्यपि, चीर्णानि-आद्दतानि विहितानि च, तपोऽपि तप्तं, पिण्डशुद्धिः-आहारशुद्धिश्च प्रयत्नेन कृता, यत्तु तेषां निह्नवानां व्रततपःपिण्डशुद्धीनां फलं नाऽभूत् , सोऽपराधोऽसद्ग्रहस्यैवेति ॥ ८ ॥

– कदाग्रहिणां कुत उपदेशः ?

'स्थालं स्वबुद्धिःसुगुरोश्च दातु-रुपस्थिता काचन मोदकाली ।
असद्ग्रहःकोऽपि गले ग्रहिता, तथाऽपि भोक्तुं न ददाति दुष्टः ॥९॥

टीकाः–स्थालं स्वबुद्धिः'= स्वबुद्धि रूपं स्थालमस्ति, 'सुगुरोश्च दातुरुपस्थिता काचन मोदकाली'= दानकर्तुः सुगुरोःप्रमादकारकस्यापूर्वा मोदकानां-लड्डुकानामावली, उपस्थिता उपदेशरूपेण प्रत्यक्षमागता,

तथाऽपि कोऽप्यसद्ग्रहो दुष्टः, गले ग्रहिता-गलक एतादृशस्तेन गृहीतो यतः स बुद्धिस्थालस्थगुरूपदेशरूप-लड्डुकान् भोक्तुं न ददाति ॥ ९ ॥

– गुरुकृपया लभ्यमानमर्थं कदाग्रही न गृह्णाति –

'गुरुप्रसादीक्रियमाणमर्थं, गृह्णाति नाऽसद्ग्रहवांस्ततःकिम् ।
द्राक्षा हि साक्षादुपनीयमानाः, क्रमेलकःकण्टकभुङ्न भुङ्क्ते ॥१०॥

टीकाः–असद्ग्रहवान 'गुरुप्रसादीक्रियमाणमर्थं'=कदाग्रहकुग्रहग्रस्तो गुरुकृपया सम्प्राप्यमाणमर्थं-मार्थं न गृह्णाति, ततः किं ? सत्यमस्ति हि 'साक्षादुपनीयमाना द्राक्षाः'=प्रत्यक्षेण खलु दीयमाना द्राक्षावलीः 'कण्टकभुग्-'कण्टकभोजनव्यसनी 'क्रमेलकः'-उष्ट्रो न भुङ्क्ते=न भक्षयति ॥ १० ॥

–– असद्ग्रहात् पामरसङ्गति ये कुर्वन्ति तेषां न रतिर्बुधेषु —

'असद्ग्रहात्पामरसङ्गतिं ये, कुर्वन्ति तेषां न रति बुंधेषु ।
विष्ठासु पुष्टा किल वायसा नो, मिष्टान्ननिष्ठाः प्रसभं भवन्ति ॥११॥

टीकाः–'असद्ग्रहात्पामरसङ्गति ये कुर्वन्ति'=कदाग्रहहेतुना ये नीचपुरुषैः सह संगतिं कुर्वन्ति, 'तेषां न रतिर्बुधेषु'=कदाग्रहिणां परमपुरुषेषु न रति र्भवति, किल 'विष्टासु पुष्टा वायसा' अशुचिषु पुष्टाः-

रक्ताः काकाः 'प्रसभं मिष्टान्ननिष्ठा नो भवन्ति'=बलादपि मिष्टान्नं प्रति रुचिमन्तो नो भवन्ति ॥ ११ ॥

– यत्र युक्तिस्तत्र मतिं न, यत्र च मतिस्तत्र युक्तिं नियुङ्क्ते सः –

'नियोजयत्येव मतिं न युक्तौ, युक्तिं मतौ यः प्रसभं नियुङ्क्ते ।
असद्ग्रहादेव न कस्य हास्योऽजले घटारोपणमादधानः ॥१२॥

टीकाः–असद्ग्रहादेव शास्त्रयुक्तौ स्वमतिं न नियोजयति, मतौ-स्वबुद्धौ च यद्रुचितं तदनुसारेण येन केन प्रकारेण शास्त्रयुक्तिं नियोजयितुं यः प्रसभं प्रयतते, सोऽजले-जलरहितमरुमरीचिकायां जलभरणाय घटस्य स्थापनमादधानः, कस्य हसनयोग्यो न स्यात्? अपि तु स्यादेवेति ॥ १२ ॥

– असद्ग्रहगृहीतस्य दीयमानं श्रुतं न प्रशस्यम् –

'असद्ग्रहो यस्य गतो न नाशं, न दीयमानं श्रुतमस्य शस्यम् ।
न नाम वैकल्यकलङ्कितस्य, प्रौढा प्रदातुं घटते नृपश्रीः ॥१३॥

टीकाः–यस्याऽसद्ग्रहोऽसन्नाशाद् विद्यते, तस्य कदाग्रहिणो दीयमानं शास्त्रसत्कं श्रुतं न श्रेयस्करं, शरीरस्याऽवयव गतवैकल्येन-विकलाङ्गत्वेन कलङ्कितस्य राजकुमारस्य प्रौढा समृद्धा, राजश्रीः, प्रदातुं सर्वथा न नाम घटते-नौचित्यमञ्चति ॥ १३ ॥

– कदाग्रहग्रस्तमतेः श्रुतात्प्रदत्तादुभयोर्विनाशः –

'आमे घटे वारि धृतं यथा सद् विनाशयेत्स्वं च घटं च सद्यः ।

असद्ग्रहग्रस्तमतेस्तथैव, श्रुतात्प्रदत्तादुभयोर्विनाशः ॥१४॥

टीकाः--यथाऽऽमेऽपरिपक्वे घटे वारि-जलं धृतं सत्, स्वं-जलं च तदाधारं घटं च सद्यः-तत्क्षणादेव विनाशयेत्तथैवासद्ग्रहग्रस्तमतेः, प्रदत्तश्रुतशास्त्रादुभयोः श्रुतश्रुतदात्रोर्विनाशोऽवश्यं भाव्येवेति ॥१४॥

– असद्ग्रहग्रस्तमतिरुपदेशस्याऽनर्हो भवति –

असद्ग्रहग्रस्तमतेः प्रदत्ते, हितोपदेशं खलु यो विमूढः ।

शुनीशरीरे स महोपकारी, कस्तूरिकालेपनमादधाति ॥१५॥

टीकाः-यः खलु विशेषेण मूढः-विमूढः, असद्ग्रहग्रस्तमतेर्हितोपदेशं प्रदत्ते, स महोपकारी ? (महाऽपकारी) शून्याः शरीरे कस्तूरिकालेपनमादधाति--करोतीत्यर्थः ॥ १५ ॥

– योऽसद्ग्रहदूषिताय विशदागमार्थं दत्ते स खिद्यते –

'कष्टेन लब्धं विशदाऽऽगमार्थं, ददाति योऽसद्ग्रहदूषिताय ।

स खिद्यते यत्नशतोपनीतं, बीजं वपन्नूषरभूमिदेशे ॥१६॥

॥२९१॥

टीकाः—योऽसद्ग्रहदूषिताय कष्टेन लब्धं विशदागमार्थं ददाति, स खिद्यते, यथोपरभूमिदेशे यत्नानां शतेनोपनीतं बीजं वपन् खिद्यते तथाऽत्रापि विज्ञेयम् ॥ १६ ॥

– असद्ग्रहवान् महाविवेचकत्वाऽभिमानी भवति –

'शृणोति शास्त्राणि गुरोस्तदाज्ञां, करोति नाऽसद्ग्रहवान् कदाचित् ।
विवेचकत्वं मनुते त्वसार-ग्राही भुवि स्वस्य च चालनीवत् ॥१७॥

टीकाः—कदाचित् कदाग्रही गुरोः सकाशाच्छास्त्राणि शृणोति, 'तदाज्ञां कदाचिन्न करोति'=गुरोराज्ञां कदाचिन्न प्रतिपद्यते, अहमेव महान् विवेचकोऽस्मीत्यभिमानं कुरुते, 'असारग्राही भुवि स्वस्य च चालनीवद् विवेचकत्वं मनुते' सारं त्यजन्नसारं गृह्णानः कोऽपूर्वो विपरीतो विवेकी अर्थात् सम्पूर्णोऽविवेकी भवत्ययमिति ॥ १७ ॥

– असद्ग्रहस्थानां विपरीता सृष्टिर्गुणानाम् –

'दम्भाय चातुर्यमघाय शास्त्रं, प्रतारणाय प्रतिभापटुत्वम् ।
गर्वाय धीरत्वमहो गुणाना-मसद्ग्रहस्थे विपरीतसृष्टिः ॥१८॥

टीकाः—कदाग्रहिणां चातुर्य—चतुरता, मायारूपफलाय भवति, 'शास्त्रमघाय'=धर्मशास्त्रमप्य-

धाय-पापफलजनकं भवति, 'प्रतारणाय प्रतिभापटुत्वम्'=पटुप्रतिभाया उपयोगः परेषां प्रतारणहेतुर्भवति, 'धीरत्वं गर्वाय' निश्चलत्वं गर्वरूपफलजनकं भवति, अहो इत्याश्चर्ये, 'असद्ग्रहस्थे गुणानां विपरीतसृष्टिः' कदाग्रहिणां विपरीतसृष्टिर्नाम गुणानामपूर्वशीर्षासनम् ॥ १८ ॥

– कदाग्रहिणां मित्रमनुपमदुःखि भवति –

असद्ग्रहस्थेन समं समन्तात्, सौहार्दभृद्दुःखमवैति तादृग् ।
उपैति यादृक्कदली कुवृत्त-स्फुटत्त्रुटत्कण्टककोटिकीर्णा ॥१९॥

टीकाः–असद्ग्रहस्थेन सम समन्तात् , सौहार्दभृत्-मैत्रीधरः, तादृग् दुःखमवैति-अनुभवति, 'यादृक्-कदली' कदलीनामककोमलतरुः सकण्टककुवृक्षसम्बन्धहेतोस्ततः स्फुटतां, त्रुटतां कण्टकानां कोटिभिः कीर्णा व्याप्ता सती दुखं-त्रासमुपैति ॥ १९ ॥

– असद्ग्रहाद् गुणा विनाशं यान्ति —

'विद्या विवेको विनयो विशुद्धिः, सिद्धान्तवाल्लभ्यमुदारता च ।
असद्ग्रहाद् यान्ति विनाशमेते, गुणास्तृणानीव कणाद् दवाग्नेः ॥२०॥

टीकाः– यथा दवाग्नेः–दावानलस्य कणमात्रेण तृणानि–तृणपुञ्जा विनाशं यान्ति, तथाऽसद्ग्र-

॥३०१॥

ह्राद् , विद्या-अभ्यासमाध्यज्ञानविशेषः, विवेकः— सदसदादिपदार्थपृथक्करणशक्तिविशेषः, विनयो-शास्त्रानुसारिनमनवृत्तिः, विशुद्धिः-विशिष्टात्मादिशुद्धिः, 'सिद्धान्तवाल्लभ्यं'=सर्वज्ञप्रणीतसिद्धान्तप्रियता, 'उदारता'-कृपणताया अभावपूर्वकदानपरिणामः, इत्यादयः सर्वे गुणा विनाशं यान्ति-गच्छन्तीति ॥२०॥

– कदाग्रहिणां कः प्रियः ?, केषु मैत्री ?, का स्थितिः ? –

'स्वार्थः प्रियो नो गुणवांस्तु कश्चिन्मूढेषु मैत्री न तु तत्त्ववित्सु ।
असद्ग्रहापादितविश्रमाणां, स्थितिः किलासावधमाऽधमानाम् ॥२१॥

टीकाः- कदाग्रहिणां स्वार्थः-स्वेच्छितकार्यविशेषः प्रियो भवति, परन्तु कश्चिद् गुणवानात्मा प्रियो न भवति, मूढेषु-कर्त्तव्याकर्त्तव्यमोहमूढेषु-मूर्खजनेषु मैत्री-मित्रता भवति, तत्त्वज्ञानिषु न मित्रत्वं, असद्-ग्रहहेतुना आपादितः-प्रापितः स्वसाधनाया इतिश्रीरूपो विश्रमो-विरामो येषां, तेषां 'अधमाऽधमानां' अधमेभ्योऽप्यधमानां किलाऽसौ-स्थितिरेतादृशी स्थितिर्विचित्रा वर्त्तते इति ॥ २१ ॥

– कदाग्रहत्यागविषयक उपसंहारः –

'इदं विदँस्तत्त्वमुदारबुद्धि-रसद्ग्रहं यस्तृणवज्जहाति ।
जहाति नैनं कुलजेव योषिद्गुणानुरक्ता दयितं यशःश्रीः ॥२२॥

॥३०२॥

टीकाः– य इदं तत्त्वं–कदाग्रहत्यागाऽत्यागाभ्यां कृतगुणदोषात्मकमिदं तत्त्वं विदन्–जानन्, उदारबुद्धिः' मारासारस्वीकारपरिहारसमर्थविचारशक्तिमान, 'तृणवदसद्ग्रहं' तृणतुल्यं कदाग्रहं, जहाति-त्यजति, अतो यथा गुणाऽनुरागिणी कुलजा योषित्–स्त्री, दयितं–पतिं न जहाति, तथैनं कदाग्रहत्यागिनं महात्मानं यशःश्री–कीर्तिलक्ष्मीर्न जहातीति ॥ २२ ॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा-कृतायामध्यात्मसारग्रन्थे भुवनतिलकाऽऽख्याया टीकाया कदाग्रहत्यागनामकश्चतुर्दशोऽधिकारः समाप्तः ४६४।

## – अथ योगस्वरूपनामा पञ्चदशोऽधिकारः –

### – योगस्वरूपस्य निरूपणम् –

'असद्ग्रहव्ययाद्वान्त-मिथ्यात्वविषविप्रुषः ।
सम्यक्त्वशालिनोऽध्यात्मशुद्धेर्योगः प्रसिद्ध्यति ॥ १ ॥

टीकाः–पूर्वमसद्ग्रहत्यागस्ततः परं मिथ्यात्वनामकविषबिन्दूनां वमनं भवति ततः परं सम्यग्-दर्शनं भवति क्रमतः, अतः सम्यक्त्ववतो याऽध्यात्मशुद्धिः–शुद्धात्मभावः, ततोऽध्यात्मशुद्धेः-अध्यात्म-शुद्धिप्रयुक्तो योगः–मोक्षमार्गः प्रसिद्धो भवतीति ॥ १ ॥

-- योगस्य कर्मज्ञानभेदेन प्रकारद्वयम्--

कर्मज्ञानविभेदेन स द्विधा तत्र चादिमः ।
आवश्यकादिविहित-क्रियारूपः प्रकीर्तितः ॥२॥

टीकाः--स--योगः, कर्मज्ञानविभेदेन द्विधा' एकःकर्मयोगो द्वितीयो ज्ञानयोग इति भेदेन, प्रकारद्वयभिन्नः, 'तत्र चादिमः'=प्रकारद्वयभिन्ने योगे प्रथमः 'आवश्यकादिविहितक्रियारूपः प्रकीर्तितः'=जिनेश्वरदेवप्रणीतावश्यकादिक्रियारूपः कर्मयोगः, अत्राऽऽदिपदेन मोक्षहेतुभूतो यः कश्चिदात्मव्यापारो भवेत् , स सर्वव्यापारो योगोऽथवा स्थानं-पद्मासनाद्यासनविशेषः, वर्णः--वर्णोच्चाररूपः, अर्थः,--आलम्बनं बाह्यजिनप्रतिमाद्यालम्बनविषयकं ध्यानम् , निरालम्बनं=समाधिस्वरूपं ध्यानम् , इति योगपञ्चकमध्ये प्राक्तनौ द्वौ कर्मयोगे, शेषास्त्रयो ज्ञानयोगे समाविशन्ति ॥ २ ॥

कर्मनामकयोगस्य लक्षणम् --

'शारीरस्पन्दकर्माऽऽत्मा, यदयं पुण्यलक्षणम् ।
कर्माऽऽतनोति सद्रागात् , कर्मयोगस्ततः स्मृतः ॥३॥

टीकाः--'यत् सद्रागात् पुण्यलक्षण कर्माऽऽतनोति'=यस्मात् कारणात् सुदेवसुगुरुप्रभृतितारक-

सम्बन्धिप्रशस्तरागहेतुजन्यं पुण्यनामकं कर्म करोति, शारीरस्पन्दकर्माऽऽत्मा=शरीरसम्बन्धिचलनरूपकर्मस्वरूपोऽयं कर्मयोगः स्मृतः—कथितः ॥ ३ ॥

**कर्मयोगस्य फलम्—**

'आवश्यकादिरागेण, वात्सल्याद् भगवद्गिराम् ।
प्राप्नोति स्वर्गसौख्यानि, न याति परमं पदम् ॥४॥

टीकाः—आवश्यकादिक्रियाया उपरि रागहेतुना, 'भगवद्गिरां वात्सल्यात्'=जिनेश्वरदेवानां वाङ्मयबहुमानरूपाद्वात्सल्यात्, शुभकर्मपुञ्जबन्धतः, स्वर्गस्य सौख्यानि प्राप्नोति, 'परमं पदं न याति'=मोक्षस्थानं न गच्छतीति ॥४॥

**ज्ञानयोगस्य स्वरूपं फलं च—**

'ज्ञानयोगस्तपःशुद्ध-मात्मरत्येकलक्षणम् ।
इन्द्रियाऽर्थोन्मनीभावात् स मोक्षसुखसाधकः ॥५॥

टीकाः—इन्द्रियाणां विषयेभ्य उन्मनीभावान्मनोभावस्याभावात् 'आत्मरत्येकलक्षणं'=सच्चिदानन्दमय आत्मनि रमणतारूपैकलक्षणलक्षितं शुद्धं तपः-'ज्ञानयोगः' कथ्यते, स ज्ञानयोगो मोक्षसुखसाधको भवतीति ॥५॥

॥३०५॥

– शुभं कर्माऽपि नैवाऽत्र व्याक्षेपायोपजायते –

'न परप्रतिबन्धोऽस्मिन्नल्पोऽप्येकात्मवेदनात् ।
शुभं कर्माऽपि नैवाऽत्र, व्याक्षेपायोपजायते ॥ ६ ॥

टीकाः—ज्ञानयोगी महात्मा, एकात्मवेदनरूपात्मरमणतामात्रे सर्वथा लीनोऽस्ति, अस्मिन्महात्मनि परद्रव्यमात्रं प्रति स्वल्पोऽपि ममतारूपप्रतिबन्धो नाऽस्ति, अत एवैतस्यावश्यकादिक्रियास्वपि रागो न वर्त्तते, कदाचिद् भिक्षाटनावश्यकादिक्रियाकरणरूपं शुभं कर्म करोति तदपि तत् प्रति विना रागभावं करोति यतःशुभकर्मकबन्धो न भवति, अर्थात् तदावश्यकादिशुभकर्माऽपि एकस्याऽद्वैतस्याऽऽत्मनो वेदन-रूपानुभवकार्यं प्रति व्याक्षेपाय-बाधाय नोपजायत इति ॥ ६ ॥

परेषां साक्षिपूर्वकं साधूनामप्रमत्तानां क्रियाऽप्यावश्यकादिका न नियता –

'नह्यप्रमत्तसाधूनां क्रियाऽप्यावश्यकादिका ।
नियता, ध्यानशुद्धत्वाद्यदन्यैरप्यदःस्मृतम् ॥ ७ ॥
यस्त्वाऽऽत्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ ८ ॥

नैव तस्य कृतेनाऽर्थो, नाऽकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु, कश्चिदर्थव्यपाश्रयः ॥ १ ॥

टीकाः—अप्रमत्तभावे रममाणानां सप्तमादिगुणस्थाने च निर्विकल्पदशायां रममाणानां ज्ञानयोगिनां महात्मनां, आवश्यकादिक्रिया न नियता भवति, यतस्ते ध्यानस्वरूपेण तपसा शुद्धाः सन्ति, अतिचार-रहितत्वेनाऽतिचारशुद्धिकरणरूपाऽऽवश्यकादिक्रियाया नियतं प्रयोजनं नास्ति अन्यैरपि वस्त्विदं कथितं स्वशास्त्रे तथाहि 'यः तु साह्वय आत्मज्ञाननिष्ठ आत्मरतिः आत्मनि एव रति र्न विषयेषु यस्य स आत्म-रतिः, एव स्याद् भवेद् आत्मतृप्तः च आत्मतृप्तश्च आत्मना एव तृप्तो न अन्नरसादिना मानवो—मनुष्यः संन्यासी, आत्मनि एव च सन्तुष्टः। संतोषो हि बाह्यार्थलाभे सर्वस्य भवति तम् अनपेक्ष्य आत्मनि संतुष्टः सर्वतो वीततृष्ण इति एतत् । य ईदृश आत्मवित तस्य कार्य-करणीयं न विद्यते—न अस्ति इत्यर्थे 'भगवद्गीतायां शाङ्कर भाष्यम्' न एव तस्य परमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनं अस्ति । अस्तु तर्हि अकृतेन अकरणेन प्रत्यवायाख्यः अनर्थः ।

न अकृतेन इह लोके (तस्य) कश्चन कश्चिद् अपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणो वा (अनर्थ-प्राप्तिः) न एव अस्ति । न च अस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिद् अर्थव्यपाश्रयः (सम्बन्धः) 'भगवद्गीतायां शाङ्करभाष्यम्' 'यद् यावन्मनुष्यः स्वचित्तस्याऽऽत्यन्तिकीं शुद्धिं कृत्वा 'स्थितप्रज्ञो' न

भवति, तावत्तस्य जन्मनः कृतार्थता न प्राप्यते, तावत्तस्य च किञ्चित्कर्त्तव्यं किञ्चिच्च न कर्त्तव्यमिति शेषं प्रतिभाति, तथापि यदा स स्थितप्रज्ञो भवति तदाऽऽत्मरतिरेवात्मतृप्तश्चात्मन्येव सन्तुष्टो मानवो भवति, तस्य कार्यं न विद्यते, कर्मद्वारा प्राप्तव्यमवशिष्टं नास्ति। तस्य च कृतेन कर्मणाऽकृतेन कर्मणा नेह मानवे कश्चनार्थः-प्रयोजनं फलं अथवा चित्तशुद्धौ काचिद्वृद्धिः, काचिच्च हानिर्न भवतः, किञ्चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयो न भवति, अर्थात् कार्याऽपेक्षा न भवतीति ॥७॥८॥९॥

ध्यानाश्रयतो ज्ञानयोगिनि हर्षशोकयोर्नावकाशः—

'अवकाशो निषिद्धोऽस्मिन्नरत्यानन्दयोरपि ।
ध्यानाऽवष्टम्भतः क्वाऽस्तु, तत्-क्रियाणां विकल्पनम् ॥ १० ॥

टीकाः-एष आत्मरतिरात्मा, ज्ञानयोगाराधनकाले धर्मशुक्लद्वयाऽन्यतरे ध्याने तादृशो लीनो भवति, यस्मात्तस्य भौतिकपदार्थस्य गन्धोऽपि नायाति, अत एव मनोज्ञाऽमनोज्ञपदार्थेषूपनतेषु हर्षशोकयोरवकाशो निषिद्धो-न सम्भवतीत्यर्थः 'क्वाऽस्तु तत् क्रियाणां विकल्पनम्'=तदावश्यकादिक्रियाकलापविषयकमनःकर्मरूपविकल्पस्य कुतः सम्भवः ? अर्थादसम्भव एव ॥ १० ॥

क्रिया सा ज्ञानिनोऽसङ्गान्नैव ध्यानघातिनी—

'देहनिर्वाहमात्रार्था, याऽपि भिक्षाटनादिका ।
क्रिया, सा ज्ञानिनोऽसङ्गान्नैव ध्यानविघातिनी ॥ ११ ॥

टीकाः—देहनिर्वाहमात्रप्रयोजनवती याऽपि भिक्षाटनादिका क्रिया, विद्यते साऽसङ्गतः-विरागताभावहेतुतः, ज्ञानिनो ज्ञानयोगिनः क्रिया, 'नैव ध्यानविघातिनी'=ध्यानं हन्तुं नैव शक्नोति, यथा वृक्षस्य पर्णं निश्चेष्टे सत्यपि वायु—वेगेन व्योम्न्युड्डीय भ्रमति, प्रारब्धकर्माऽऽयत्तो ज्ञानयोगी भिक्षाऽटनादिकां क्रियां करोति ॥ ११ ॥

— फलभेदादाचारक्रियाऽप्यस्य विभिद्यते —

'रत्नशिक्षादृगन्या हि तन्नियोजनदृग् यथा ।
फलभेदात्तथाऽऽचारक्रियाऽप्यस्य विभिद्यते ॥ १२ ॥

टीकाः—यथा रत्नवणिक्पुत्रो रत्नानि पश्यति गुणदोषान ज्ञातुं, ततश्च रत्नसत्कज्ञानार्जनरूपं फलं प्राप्नोति, यदा स एव पुत्र आपण उपविश्य व्यापारं करोति, तदा रत्नानि विक्रेतुं कश्चित् पुरुषस्तत् सन्निधावागच्छति तदा तद्रत्नक्रयसमयेऽपि प्राग्यया रीत्या रत्नानि पश्यति स्म, तया रीत्या स पुत्रो रत्नानि पश्यति, तथाऽपि प्राक्तनदर्शनदृष्टौ चाऽधुनातनदर्शनदृष्टौ महदन्तरं पतति, पूर्वीयदृष्टौ तु रत्नानां गुण-

॥३०१॥

दोषविषयकज्ञानरूपं फलं लब्ध्वा विरमति, यदाऽधुना ततोऽप्यग्रे गत्वा रत्नानां क्रयणादिद्वारा धनार्जनरूपफललाभस्य तस्य लक्ष्यमस्ति, एवमुभयसमये दर्शनक्रियायाः समानत्वेऽपि फलभेदेन क्रियाभेदो भवति, तथाऽत्रापि प्रमत्तभावस्याऽभ्यामदशासत्कभिक्षाटनादिक्रियायाश्चाऽप्रमत्तभावीयभिक्षाटनादिक्रियायाःप्रत्यक्षतयैकसमानत्वेऽपि द्वयोःफले भेदः पतति, प्रमत्तभावीया सरागाऽवस्था, अप्रमत्तभावीयविशिष्टावस्थाऽपेक्षयाऽल्पनिर्जराकारिका च बहुपुण्यबन्धकारिका भवति यतः, स्वर्गादिसुखफलप्रापिका भवति—यदाऽप्रमत्तभावीया सैव क्रियाऽत्यन्तप्रकृष्टकर्मनिर्जराकारिका भूत्वा मोक्षफलजनिका भवत्येवं फलभेदेनाऽऽचारक्रियाया अपि भेदो विज्ञेय इति ॥ १२ ॥

– ध्यानार्था हि क्रिया सेयं –

ध्यानार्था 'हि क्रिया सेयं, प्रत्याहृत्य निजं मनः ।
प्रारब्धजन्मसङ्कल्पा-दात्मज्ञानाय कल्पते ॥ १३ ॥

टीकाः–एषा भिक्षाऽटनादिक्रिया, ध्यानविक्षेपिका न भवति, प्रत्युत ध्यानप्रयोजनजनिका भवति, एतावन्मात्रमपि नो परन्तु ज्ञानयोगी तु दृढमेव विमृशति 'जन्मैतत् प्रारब्धकर्मणा प्राप्तमित्येवं विशिष्टसङ्कल्पबलान्महात्मा स स्वीय मनो विषयेभ्यः प्रत्याहृत्य–समाहृत्याऽसङ्गभावतो भिक्षाऽटनादिकां क्रियां करोति, तस्मात्ता अपि क्रिया आत्मज्ञानसम्पादिका भवन्ति ॥ १३ ॥

– स्थिरीभूतमनसः पुनश्चलत्वे स्थिरीकरणप्रक्रिया –

'स्थिरीभूतमपि स्वान्तं, रजसा चलतां व्रजेत् ।
प्रत्याहृत्य निगृह्णाति, ज्ञानी, यदिदमुच्यते ॥ १४ ॥
शनैः शनैरुपरमेद् , बुद्धया धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा, न किञ्चिदपि चिन्तयेत् ॥ १५ ॥
भग. गी.६-२५

यतो यतो निःसरति, मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ १६ ॥ भ. गी. ६-२६

टीकाः—आत्मनि स्थिरीभूतं मनोऽपि रजोभावस्योदये (मोहोदये) कदाचिच्चलतां व्रजेत् परन्तु तदा यो ज्ञानयोगी महात्माऽस्ति, स तु मनो विषयेभ्यः प्रत्याहृत्य निगृह्णात्येव, अनया रीत्या प्रत्याहारो-मनसः करणीय इति भगवद्गीतायामुक्तं हि=शनैः शनैः न सहसा उपरमेद् उपरतिं कुर्यात् । कया, बुद्धया किं विशिष्टया धृतिगृहीतया, धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः । आत्म संस्थम्'—आत्मनि संस्थितम् , आत्मा एव सर्वं न ततः अन्यत् किञ्चिद् अस्ति, इति एवम् आत्मसंस्थं मनः

॥३११॥

कृत्वा, न किञ्चिद् अपि चिन्तयेद् एष योगस्य परमो विधिः ॥ शाङ्करभाष्यम् भगवद्गीतायां ६।२५। तत्र एवं आत्मसंस्थं मनः कर्तुं प्रवृत्तो योगी–

'यतो यतो यस्माद्यस्माद् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषाद् मनः चञ्चलम्-अत्यर्थं चलं अत एव अस्थिरं ततः ततः तस्मात् तस्मात् शब्दादेः निमित्ताद् नियम्य तत् तद् निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतद् मन आत्मनि एव वशं नयेद् आत्मवश्यताम् आपादयेत् । एवं योगाऽभ्यासबलाद् योगिन आत्मनि एव प्रशाम्यति मनः ॥ शाङ्करभाष्यम् भगवद्गीतायां ६ । २६

'शनैः शनैर्धृतिगृहीतया=धैर्येण सहितया बुद्धया 'उपरमेत्'=विरतिकार्यं कुर्यात् , अनया रीत्या मनो विषयेभ्यः प्रत्याहरणीयं ततो मन आत्मसंस्थं कृत्वा न किञ्चिदपि चिन्तयेत् । यदा यदा चञ्चल-मस्थिरं मनः मद् आत्मगृहान्निःसृत्य विषयेषु गच्छेत्तदा तन्मनो बुद्धया नियम्यात्मन्येव वशं नयेत् ॥१४ ॥ १५ ॥ १६ ॥

– चलचित्तो महामति र्मनोवशाय शास्त्रोदितां सर्वां क्रियां कुर्यात् –

'अत एवाऽदृढस्वान्तः, कुर्याच्छास्त्रोदितां क्रियाम् ।
सकलां विषयप्रत्या–हरणाय महामतिः ॥ १७ ॥

टीकाः—'अत एवाऽदृढस्वान्तः'=शिथिलमना निमित्तवशाच्चलचित्तो वा महामति विषयप्रत्याहार-मुद्दिश्य 'शास्त्रोदितां-जिनागमविहितां 'सकलां क्रियां कुर्यात्'=कर्त्तव्यबुद्ध्या सकलाऽऽवश्यकादिका क्रियाऽऽचरणीया तत एव विषयादितो मनःप्रत्याहारो भवेन्नान्यथेति ॥१७॥

– नित्यं संयमयोगेषु व्यापृताऽऽत्मा भवेद् यतिः –

'श्रुत्वा पैशाचिकीं वार्त्तां, कुलवध्वाश्च रक्षणम् ।
नित्यं संयमयोगेषु व्यापृताऽऽत्मा भवेद् यतिः ॥ १८ ॥

टीकाः—'श्रुत्वा पैशाचिकीं वार्त्तां'=एकस्य श्रेष्ठिन उपरि प्रसन्नेन पिशाचेन कथितं यत् 'यदा कार्यं न दास्यति तदा त्वां भक्षयिष्यामी'ति एकदा कार्यं सर्वं समाप्तं, श्रेष्ठी भृशमाकुलो जातः, तथाऽपि बुद्धिमान् श्रेष्ठ्यामीद् , निःश्रेणीमानीय पिशाचं दत्त्वोक्तं यावद् द्वितीयं कार्यं नाऽर्पयामि तावत्त्वया निःश्रेणी पुनः पुनः आरुह्यतामवरुह्यता'मिति पैशाचिकीं वार्त्तां श्रुत्वा 'कुलवध्वाश्च रक्षणम्'=एकस्या नवोढायाः पति देंशाऽन्तरं गतोऽस्ति, बहुमासव्ययाऽनन्तरं नवोढा कामवासनाऽऽक्रान्ता, श्वशुरस्तत्प्रवृत्तिं ज्ञातवान् , श्वशुरेण गृहस्य सर्वा दास्यो निष्काशिताः, सर्वकार्यस्य भारो नववध्वा उपरि मुक्तः, निशायामापतितायामपि कार्यं समाप्तं न भवति, सर्वं कार्यं समाप्य भृशं परिश्रान्ता सती निद्राऽधीना जायते, सा वासना

कुत्रापि विनष्टा जातेति कुलवध्वाश्च रक्षणं श्रुत्वा यतिमुनिः, नित्यं संयमसम्बन्धियोगेषु व्यापृताऽऽत्मा'= क्रियावानात्मा भवेत् , कदापि निष्कर्मा न तिष्ठेदिति ॥ १८ ॥

– निश्चयव्यवहारदशायां क्रियाव्यवस्थाविभागः –

'या निश्चयैकलीनानां, क्रिया नाऽतिप्रयोजनाः ।
व्यवहारदशास्थानां, ता एवाऽतिगुणावहाः ॥ १९ ॥

टीकाः–निश्चयधर्म एवाऽऽत्मनि भावितो यैस्तेषां=निश्चयैकलीनानां महात्मनां या आवश्यकादिकाः क्रिया 'नातिप्रयोजनाः'=अत्यन्तप्रयोजनरहिताः, व्यवहारदशास्थानां ता एव'=ता आवश्यकादिकाः क्रिया एव अतिगुणावहाः–अत्यन्तलाभकारिका एवेति ॥ १९ ॥

श्रद्धामेधाऽऽदियोगतः शुद्धस्य कर्मणोऽपि मुक्तिहेतुत्वमक्षतम्–

कर्मणोऽपि हि शुद्धस्य; श्रद्धामेधाऽऽदियोगतः ।
अक्षतं मुक्तिहेतुत्वं, ज्ञानयोगाऽनतिक्रमात् ॥ २० ॥

टीकाः–ननु किमन्ततो गत्वा ज्ञानयोगस्यैव मुक्तिहेतुत्वं न क्रियाया इति चेन्न शुद्धायाः कायोत्सर्गादिरूपक्रियाया अपि वर्धमान–श्रद्धा-मेधा-धृति-धारणाऽनुप्रेक्षासहकृताया मुक्तिहेतुत्वं सङ्गतिमङ्गति यतः शुद्धे कर्मणि ज्ञानयागस्याऽतिक्रमो न भवति, ज्ञानयोगस्य तु तत्राक्षतत्वं वर्तत एवेति ॥२०॥

कर्मयोगज्ञानयोगयोर्मर्यादा–

'अभ्यासे सत्क्रियाऽपेक्षा, योगिनां चित्तशुद्धये ।
ज्ञानपाके शमस्यैव यत्परैरप्यदः स्मृतम् ॥ २१ ॥
आरुरुक्षो मुने र्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ २२ ॥

टीकाः–योगाऽभ्यासकाले योगिनां चित्तशुद्धये, आवश्यकादिका सत्क्रियाऽपेक्षा वर्त्तते, किञ्च यदा यदा तत् सत् क्रियायां सत्यां परिपक्वज्ञानदशा (उपशान्तदशा) पुनः पुनः कृतायामेव प्राप्यते तदा तत् मत्क्रिया नाऽपेक्ष्यते, मात्र सम्प्राप्तेन्द्रियमनसोः शमनमपेक्ष्यते (भगवद्गीतायां व्यासमुनिनाऽप्युक्तं हि–'आरुरुक्षोः आरोढुम् इच्छतः अनारूढस्य ध्यानयोगे अवस्थातुम् अशक्तस्य एवेत्यर्थः, कस्य आरुरुक्षोः, मुनेः कर्मफलसंन्यासिन इत्यर्थः किमारुरुक्षोः योग, कर्म कारणं साधनम् उच्यते । योगारूढस्य पुनः तस्य एव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारण योगारूढत्वस्य साधनम् उच्यते इत्यर्थः । यावद् यावत् कर्मभ्य उपरमते तावत् तावद् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति तथा चोक्तं व्यासेन-नैतादृशं ब्राह्मणस्याऽस्ति वित्तं, यथैकतासमतासत्यता च शीलं स्थिति-

दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ महा० शान्ति० १७५।३७ इति० शाङ्करभाष्यम् भगवद्गीतायां ६।३॥

सङ्कल्पसन्न्यासरूपयोगमारोढुमिच्छोः साधकमुनेः सत्क्रियारूपं कर्मकारणत्वेनाऽपेक्षितं यदा योगारूढस्य तस्य मुनेः कर्मणोऽपेक्षा नास्ति, परन्तु कर्मयोगप्राप्य (प्राप्त) शमस्यैवापेक्षा वर्तत एव शमयोग एव योगारूढदशायां तं मुनिं स्थिरीकरोति, योगारूढस्यात्मनः सर्वथा सङ्कल्पा विनाशं न गताः सन्ति, परन्तूपशान्ता एव, यतः क्षीणदोषा योगातीता उच्यन्ते अर्थाद्योगारूढस्योपशान्तसङ्कल्पस्य (सन्न्यस्तसङ्कल्पस्य) पुनः सङ्कल्पोत्थानस्य शक्यतयाऽनुत्थानकृते सङ्कल्पस्य शमभावोऽत्यन्ताऽऽवश्यक एवेति ॥२१॥२२॥

— योगारूढस्य वर्णनम् —

'यदा हि नेन्द्रियार्थेषु, न कर्मस्वनुषज्यते।
सर्वसङ्कल्पसन्न्यासी, योगारूढस्तदोच्यते ॥२३॥

टीकाः—यदा समाधीयमानचित्तो योगी हि इन्द्रियाऽर्थेषु इन्द्रियाणाम् अर्थाः शब्दादयः तेषु इन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाऽभावबुद्धया नाऽनुषज्यते अनुषङ्गं कर्त्तव्यताबुद्धिं न करोति इत्यर्थः। सर्वसङ्कल्पसंन्यासी सर्वान् सङ्कल्पान् इहामुत्रार्थकामहेतून् संन्यसितुं शीलं अस्य इति सर्वसङ्कल्पसंन्यासी, योगारूढः प्राप्तयोग इति एतत् तदा तस्मिन् काले उच्यते। सर्व-

॥३१६॥

संकल्पसंन्यासी इति वचनात् सर्वान् कामान् सर्वाणि च कर्माणि संन्यसेद् इत्यर्थः। संकल्पमूला हि सर्वे कामाः—संकल्पमूलो कामो वै यज्ञाः संकल्पसंभवा' (मनु० २।३) 'काम ! जानामि ते मूलं संकल्पात्त्वं हि जायसे। न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि ॥' (महा० शान्ति० १७७।२५) इत्यादिस्मृतेः।

'सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति 'स यथाकामो भवति तत् क्रतु र्भवति, यत्क्रतु र्भवति तत्कर्मकुरुते (बृह० ५।४। ४। ५) इत्यादिश्रुतिभ्यः यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्' (मनु० २। ४ इत्यादिस्मृतिभ्यः च। न्यायात् च न हि सर्वसंकल्पसंन्यासे कश्चित् स्पन्दितुम् अपि शक्तः। तस्मात् सर्वसंकल्पसंन्यासी इति वचनात् सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान् ॥६। ४॥ भगवद् गीतायां शाङ्करभाष्यम् ॥

'हीतिनिश्चये, यदेन्द्रियाणामर्थेषु—विषयेषु यो नाऽनुषज्यते नाऽऽसक्तो भवति कर्मसु (तत्कर्मफलेषु च नानुषज्यते रागवान्न भवति, तदा सर्वसंकल्पसंन्यासी योगारूढः स उच्यते—उपशान्तसर्वसंकल्पो योगारूढो ज्ञेयः ॥२३॥

— ज्ञानकर्मयोगयोर्गुणप्रधानभावेन दशाभेदः —

'ज्ञानं क्रियाविहीनं न, क्रिया वा ज्ञानवर्जिता ।
गुणप्रधानभावेन, दशाभेदः किलैनयोः ॥२४॥

॥३१७॥

टीकाः—ज्ञानक्रिययो मिलित्वैव—समुदितयोर्मुक्तिहेतुत्वमर्थान्न केवलं ज्ञानं क्रियाविहीनं मुक्तिं प्रति हेतुः, न केवला क्रिया ज्ञानवर्जिता मोक्षं प्रति हेतुः, परन्तु 'किलैनयोः'=अनयो र्ज्ञानक्रिययोर्गुणप्रधान-भावेन दशाभेदो वर्ण्यते, कर्मयोगदशा=यत्र क्रियायाः प्राधान्यं ज्ञानस्य च गुणत्वं (ज्ञानं गौणं) तत्र कर्म प्रधानो योगः कर्मयोगः। ज्ञानयोगदशा=यत्र दशायां ज्ञानस्य प्राधान्यं कर्मणश्च गुणत्वं (कर्म गौणं) तत्र ज्ञानप्रधानो योगो ज्ञानयोगः, अत्र कर्मस्वरूपो योगः कर्मयोगः ज्ञानस्वरूपो योगो ज्ञानयोग इति व्युत्पत्तिर्न विज्ञेया वा कर्त्तव्येति तत्त्वं ॥२४॥

— चित्तशोधककर्मयोगाऽनन्तरं ज्ञानयोगौचिती —

'ज्ञानिनां कर्मयोगेन चित्तशुद्धिमुपेयुषाम् ।
निरवद्यप्रवृत्तीनां, ज्ञानयोगौचिती ततः ॥ २५ ॥

टीकाः—ये कर्मयोगेन, चित्तशुद्धिं प्राप्तास्तेषां निष्पापप्रवृत्तीनां कर्मयोगिनां ज्ञानिनां ततः--कर्म-योगानन्तरं ज्ञानयोगं साधयितुमुचितं नान्यथा यथा रोगिणामन्त्राणि निर्मलानि दृढानि च कर्तुं मुद्गजला-नन्तरं पुष्ट्यै दुग्धं दीयते तथाऽत्राऽपि मुद्गजलसमः कर्मयोगः, दुग्धसमो ज्ञानयोगो विज्ञेयः ॥२५॥

— पूर्वं कर्मयोगः पश्चाच्च ज्ञानयोग इति क्रमो जिनोक्तोऽस्ति—

अत एव हि सुश्राद्ध-चरणस्पर्शनोत्तरम् ।
दुष्पालश्रमणाचार-ग्रहणं विहितं जिनैः ॥ २६ ॥

टीकाः—अत एव जिनेश्वरैः, प्राक्, सुश्राद्धस्य-समीचीनदेशविरतस्य-श्रावकस्य, सम्यक्त्वमूल-द्वादशव्रतादिदेशविरतिरूपचारित्रस्य स्पर्शनाकालादनन्तरं दुष्पालश्रमणाचारग्रहणं विहितं'=दुःसाध्यजैन-साधुसत्कपंचमहाव्रतादिपालनरूपाचारस्य ग्रहणं निरूपितं देशविरतस्य जीवनमपेक्षया कर्मयोगप्रधान-मस्ति, मुनिजीवनमपेक्षया ज्ञानयोगप्रधानमस्ति ज्ञेयमिति ॥२६॥

— एवं निरुक्तक्रमस्य कारणं प्रदर्श्यते —

एकोद्देशेन संवृत्तं कर्म यत् पौर्वभूमिकम् ।
दोषोच्छेदकरं तत् स्यात्, ज्ञानयोगप्रवृद्धये ॥ २७ ॥

टीकाः—एवं क्रमस्य कारणमस्ति यद् 'विरतिरूपमेकमुद्देश्यं कृत्वा देशविरतिरूपपूर्वभूमिकायां यत्कर्म संवृत्तं'—स्थूलप्राणातिपातादिविरमणरूपव्रतपालनजन्यं यत्कर्म जातं वा प्रवृत्तं तत्कर्म, पुरस्तात् सिध्यत्ज्ञानयोगस्य प्रवृद्धये, 'दोषोच्छेदकरं स्यात्'=अन्तरागतस्य प्रतिबन्धकराणां दोषाणामुच्छेदकरं भवेद् वस्तुस्थितिरेतादृश्येव, तस्माज्ज्ञानयोगं सिसाधयिषुभिर्बाधकदोषप्रक्षालनाय प्राक् कर्मयोग एव प्रतिपत्तव्य इति ॥ २७ ॥

॥३११॥

– अज्ञानिनां तु यत्कर्म न ततश्चित्तशुद्धिः –

'अज्ञानिनां तु यत्कर्म, न ततश्चित्तशोधनम् ।
यागादेरतथाभावात्, म्लेच्छादिकृतकर्मवत् ॥ २८ ॥

टीकाः—अत्रैकं वस्तु लक्ष्यं नेतव्यं यद् यस्य कस्यचिदभिमतः कर्मयोगश्चित्तशोधको न भवति, यतोऽज्ञानिनां कर्मयोगश्चित्तशुद्धिं कर्त्तुं नाऽलं तत्रेदं कारणमस्ति तथाहि=यज्ञयागस्नानशौचादिकर्मयोगानामत्यन्तसावद्यस्वरूपत्वाच्चित्तस्य शोधनमकृत्वा तच्चित्तं प्रशमपरिणामवज्जनयितुं न शक्यते, यथा म्लेच्छादिजनैर्देवदेव्यादीनां समक्षं भवत्पशुवधाऽऽदिकं कर्म चित्तशोधकं न भवितुमर्हति, यत्कर्म चित्तशोधनाय नाऽलं तत्कर्म, कर्मयोगत्वेन कथयितुं न पार्यते इति ॥ २८ ॥

– स्वरूपतः सावद्यत्वाद् यज्ञयागादिकर्मयोगो वाङ्मात्ररूपः –

'न च तत् कर्मयोगेऽपि, फलसङ्कल्पवर्जनात् ।
संन्यासो ब्रह्मबोधाद्वा, सावद्यत्वात्स्वरूपतः ॥ २९ ॥

टीकाः—ननु यज्ञयागादिकर्मयोगेऽपि चित्तदोषत्यागो भवति, यतस्तत्रापि यदि स्वर्गादिफलसङ्कल्पवर्जनं भवेदथवाऽऽत्मज्ञानं सञ्जातं भवेत्तदा दोषत्यागः किं न स्यात्? अनया रीत्या दोषत्यागे

सति चित्तशुद्धिरपि भवेत्ततो ज्ञानयोगोऽपि प्राप्तः स्यादिति चेन्न यो यज्ञयागादिवाङ्मात्रः कर्मयोगोऽस्ति यतः स आत्माऽज्ञानभावतोऽथवा स्वरूपतः (हिंसाऽऽत्मकत्वेन) सावद्यो–अवद्यसहितोऽस्ति, तस्मात्ततो दोषसन्न्यासश्चित्तशुद्धिश्च न भवितु' शक्येते यत्र चित्ते हिंसाऽऽत्मकप्रवृत्तिकरणसंक्लिष्टपरिणामोऽस्ति, तत्र चित्ते तादृश्या प्रवृत्त्या कुतः शुद्धिसम्भवः स्याद् ? इति ॥ २९ ॥

– वेदविहितमपि स्वरूपतः सावद्यं कर्म चित्तशोधकं न भवति –

'नो चेदित्थं भवेच्छुद्धिर्गोहिंसाऽऽदेरपि स्फुटा ।
श्येनाद्वा वेदविहिताद् विशेषाऽनुपलक्षणात् ॥ ३० ॥

टीका:–यदि वेदमानिनामेतादृश आग्रहः स्याद् यद् 'स्वरूपतः सावद्यमपि यज्ञादिकर्म चित्तशुद्धि जनयत्येवेति, तदा स्वेष्टदेवतासमक्षं म्लेच्छादिभि र्यद्गोवधादिकं कर्म क्रियते तदपि चित्तशुद्धि किं न जनयेत् ? ततो ज्ञानयोगोऽपि किं न सिद्ध्येत ? तत्राऽपि तु युष्माकमपि निषेधो वर्त्तते, ननु तत्र तु वेदविहितं नास्त्यतो निषेधोऽस्ति परन्तु यत्कर्म वेदविहितं भवेत्तत्स्वरूपतः सावद्यमपि भवेत्तथाऽपि ततश्चित्तशुद्धिरवश्यं भवेदिति चेन्न, एवं सुष्ठु तथापि श्येनयागस्तु वेदविहितोऽस्ति 'येन शत्रुवधः कर्त्तव्यस्तेन श्येनयागः, कर्त्तव्योऽस्ति एतादृशं वेदोक्तमस्ति, एष श्येनयागः, दुर्गतेरनुबन्धस्य भयंकरतादि दृष्ट्वा-

ऽतिनिन्द्यकर्मत्वाद्युष्माकं शिष्टपुरुषैः स हेयत्वेनोद्घोषितोऽस्ति श्येनयागस्य कर्म वेदविहितत्वेऽपि चित्तशुद्धिं न जनयत्येव एवं स्वरूपतः सावद्यकर्मरूपा म्लेच्छानां गोहिंसाश्येनयागादिकर्मतोऽपि चित्तदोषसंन्यासः कथं भवेत ? अपितु न सम्भवति यतो यज्ञयागादौ च गोहिंसादौ कर्मणि सावद्यतादृष्ट्या न किमप्यन्तरमस्ति अतः स्वरूपतः सावद्यकर्माणि, चित्तशोधकानि न भवेयुरेवं मन्तव्यमेव ततोऽज्ञानिनां यज्ञयागादिकर्माण्यपि स्वरूपसावद्यानि सन्ति, ततस्तानि चित्तशोधकानि न भवन्तीति प्रतिपत्तव्यमेव, यानि कर्माणि चित्तशोधकानि न भवन्ति तानि कर्मयोगत्वेन न कथ्यन्ते, कर्मयोगस्तु चित्तशुद्धिजननद्वारा ज्ञानयोगस्य साधको भवतीति ॥ ३० ॥

– सावद्यं कर्म, तस्मान्नादेयं बुद्धिविप्लवात् ।

'सावद्यं' कर्म नो तस्मा-दादेयं बुद्धिविप्लवात् ।
कर्मोदयाऽऽगते त्वस्मि-न्नसङ्कल्पादबन्धनम् ॥ ३१ ॥

टीकाः–तस्माद् यज्ञयागादि यावत् साऽवद्यं कर्म नादेयं=नोपादेयं यावन्नादरणीयम् यतः बुद्धिविप्लवात्' सावद्यानि कर्माणि चित्ते हिंसाऽऽत्मकपरिणामजननद्वारा, सद्बुद्धिविध्वंसकारकाणि भवन्ति, ननु ज्ञानयोगी कदाचिदपि सावद्यं कर्म न सेवेतेति चेन्न, असातवेदनीयकर्मोदयेनाऽसह्यरोगादेरुपद्रवो यदाऽऽपतेत्तदा कदाचिदाधाकर्मादिसावद्यकर्मसेवनस्याऽभियोग आपतेत्तदाऽपि तत्सावद्यकर्मसेवनाय मनोवृत्ति-

स्तु नास्त्येव, मनो विनाऽपि तत्कर्मसेवनमापतति तस्मात्तत्सावद्यकर्मसेवनतः पापकर्मणामनुबन्धो न पतति यत्कर्मणोऽशुभोऽनुबन्धो न पतति तत्कर्मणः सावद्यत्वेऽपि वस्तुतः सावद्यं न कथ्यतेऽशुभत्वेऽपि न वस्तुतोऽशुभं कथ्यते इति ॥ ३१ ॥

— कर्माऽप्याचरतो ज्ञातुर्मुक्तिभावो न हीयते —

कर्माऽप्याचरतो ज्ञातुर्मुक्तिभावो न हीयते ।
तत्र सङ्कल्पजो बन्धो गीयते यत्परैरपि ॥ ३२ ॥
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु, स युक्तः कृत्स्नकर्मकृत् ॥ ३३ ॥

टीकाः—यो ज्ञाताऽस्ति तस्यापवादमार्गेण सावद्यं कर्माचरतोऽपि मुक्तिभावो न बाध्यते यत आत्मनि कर्मणो बन्धो, हिंसादेः सङ्कल्पतः पतति यत्परैरपि गीयते भगवद्गीतायां कर्मणि कर्म क्रियते इति व्यापारमात्रं तस्मिन् कर्माणि अकर्म कर्माभावं यः पश्येद्, अकर्मणि च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योः वस्तु अप्राप्य एव हि सर्व एव क्रियाकारकादिव्यवहारः अविद्याभूमौ एव कर्म यः पश्येत् पश्यति स बुद्धिमान् मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृत् समस्तकर्मकृत् च स इति स्तूयते कर्माऽकर्मणोः इतरेतरदर्शी ।

य एवं (तत्त्वतः) कर्माऽकर्मविभागज्ञः स बुद्धिमान् पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृत् च सः अशुभाद् मोचितः कृतकृत्यो भवति इत्यर्थः। इति भगवद्गीतायां शाङ्करभाष्यांशा उद्धृताः ॥ 'यः पुरुषः कर्म चाऽकर्म सम्यग् जानाति स योगयुक्तः सञ्जातेषु मत्कर्मसु बन्धनं न पश्यति, तस्मात् स कर्मणि अकर्म पश्यति, चाऽकर्मणि कर्म पश्यति, अर्थान्निष्क्रियेऽज्ञानतः स बन्धनकारकं कर्मैव जानाति प्राज्ञा एतादृशाः पुरुषाः सर्वप्रवृत्तौ पूर्णप्रतिभावन्तो भवन्त्यतो यद् विकर्म न भवेत् तादृशं सर्वं कर्म योगतः कुर्वन्ति ॥३२॥३३॥

— जैनमते कर्माऽकर्मविषयकभङ्गानां वैचित्र्यं दर्शयति —

'कर्मण्यकर्म वा कर्म, कर्म यस्मिन्नुभे अपि ।
नोभे वा भङ्गवैचित्र्या-दकर्मण्यपि नो मते ॥ ३४ ॥

टीकाः—'नो मते'=अस्माकं जैनमते पूर्वोक्तौ द्वौ भङ्गौ केवलं न स्तोऽपि तु भङ्गानां वैचित्र्यकारणेन बहवो भङ्गा भवन्त्येव तथाहि=(१) कर्मणि अकर्मदर्शनरूपो योगः (२) कर्मणि कर्मदर्शनरूपो योगः (३) कर्मणि कर्माऽकर्मदर्शनरूपयोगः (४) कर्मणि कर्माभावाऽकर्माभावदर्शनरूपयोगः (५) अकर्मणि अकर्मदर्शनरूपयोगः (६) अकर्मणि कर्मदर्शनरूपयोगः (७) अकर्मणि कर्माऽकर्मदर्शनयोगः (८) अकर्मणि कर्माभावाऽकर्माभावदर्शनरूपयोगः ॥ ३४ ॥

— ज्ञानयोगी भोगैर्न लिप्यते जलजदलमिव जलेन —

'कर्मनैष्कर्म्यवैषम्यमुदासीनो विभावयन् ।
ज्ञानी न लिप्यते भोगैः पद्मपत्रमिवाऽम्भसा ॥ ३५ ॥

टीका:–पूर्वकथितकर्माऽकर्मविषयकभङ्गानां वैषम्यं विभावयन्–विचारणे विषयीकुर्वन् ज्ञानी, कदाचित् क्रियमाणेषु सांसारिककर्मसूदासीनस्तिष्ठति. तस्माच्च भुज्यमानैर्भोगैर्न लिप्यते यथाऽम्भसा जलेन पद्मपत्रं–कमलदलं न लिप्यते तथाऽत्रापि ज्ञेयमिति ॥ ३५ ॥

— अनन्यपरमात् साम्यात् , ज्ञानयोगी भवेन्मुनिः —

'पापाऽकरणमात्राद्धि, न मौनं विचिकित्सया ।
अनन्यपरमात् साम्यात्, ज्ञानयोगी भवेन्मुनिः ॥३६ ॥

टीका:—अपवादमार्गे आधाकर्मादिमावद्यकर्मणः सेवनमप्यापतेत्तथापि यदि तदानीं चित्ते कश्चिद्रागादिसंक्लेशो न भवेत् , अनन्यपरमात् साम्यात्'=असाधारणोत्कृष्टसमतासम्भृतो भवेत्तदा तज्ज्ञानयोगिनि सत्यमुनित्वमवश्यं वाच्य भवेत् , परन्तु पापफलरूपदुर्गतिसंशयमात्रतः पापाऽकरणमात्रतः पापस्याऽकर्त्तरि सत्यमुनित्वं न कथनीयं स्यात ॥ ३६ ॥

— विषयेषु समं रूपं विदन् ज्ञानयोगी न लिप्यते —

'विषयेषु न रागी वा, द्वेषी वा मौनमश्नुते ।
समं रूपं विदंस्तेषु ज्ञानयोगी न लिप्यते ॥ ३७ ॥

टीका:—यस्य विषयान् प्रति नास्ति रागो नास्ति च द्वेषः, तस्यैव मुनित्वप्राप्तिर्वक्तव्या, विषयासेवनरूपपापाऽकरणमात्रान्मुनित्वस्वीकारो निश्चयनयतो दोषावहः कथ्यते, सर्वेषु पुद्गलेषु कुत्रापीष्टत्वबुद्धिरनिष्टत्वबुद्धिर्वा नैतादृशं यच्चित्तस्य संवेदनं स एव ज्ञानयोगोऽस्ति तादृशज्ञानयोगविशिष्टो महात्मा, अपवादमार्गेणाऽऽधाकर्मादिसेव्यपि कर्मणा न लिप्यते ॥ ३७ ॥

-- ज्ञानयोग्येवाऽऽत्मवान् ज्ञानवान् वेदधर्मब्रह्मयो भवति –

'सतत्त्वचिन्तया यस्याऽभिसमन्वागता इमे ।
आत्मवान् ज्ञानवान् वेदधर्मब्रह्ममयो हि सः ॥ ३८ ॥

टीका:—यस्याऽभिसमन्वागता इमे सतत्त्वचिन्तया=येनोपनता विषयभोगाः केवलं दुःखकारणत्वेन ज्ञपरिज्ञया स्वभावचिन्तनेन विज्ञाताः, ततो येन प्रत्याख्यानपरिज्ञया स्वरूपचिन्तनबलेन प्रत्याख्यातास्त्यक्ताः, स आत्मा निश्चयत आत्मवान् (स्वरूपवान्) विद्यते (१) स ज्ञानवान्=वस्तुस्वरूपज्ञातृत्वाज्ज्ञान-

वानस्ति (२) स वेदवान्=आचाराङ्गाद्यागमरूपवेदवेत्तृत्वाद् वेदवानस्ति (३) स धर्ममयः=स्वर्गाऽपवर्गमार्गस्वरूपस्य दुर्गतिपतज्जन्तूनां रक्षकस्य च धर्मस्य ज्ञातृत्वाद्धर्मविदस्ति (४) स ब्रह्ममयः=सर्वथा निष्कलङ्कस्य योगसुखस्य ज्ञातृत्वाद् ब्रह्मविद्-ब्रह्ममयोऽस्ति, एतादृशविशिष्टात्माऽपवादमार्गेण विषयस्य सावद्यकर्मणो वा सेवनमात्रेण कथं कर्मणा लिप्येत ? अपितु न लिप्यत एवेति ॥ ३८ ॥

— **विषमताया मूलमज्ञानं ज्ञानयोगेन नश्यति** —

वैषम्यबीजमज्ञानं, निघ्नन्ति ज्ञानयोगिनः ।
विषयांस्ते परिज्ञाय, लोकं जानन्ति तत्त्वत ॥ ३९ ॥

टीकाः–विषयनिष्ठेष्टत्वाऽनिष्टत्वादिवैचित्र्यस्य बीजं मूलकारणभूतमज्ञानं आत्मादितत्त्वाज्ञानं ज्ञानयोगिनो निघ्नन्ति'=स्वप्रतिभाप्रकाशेन दूरतः क्षिपन्ति, अत एव वैषम्यदर्शनं दूरे भवति, एवं स्थिते इष्टत्वाऽनिष्टत्वभानविरहितास्ते विषयाणां वास्तविकीं प्रकृतिं क्षणविनश्वरस्वभावं विज्ञाय महात्मानस्तत्त्वतो लोकं जानन्ति-समस्तलोकस्वरूपमात्रस्य ज्ञातारो भवन्तीति ॥ ३९ ॥

— **ज्ञानयोगिनो ज्योतिष्मन्तो भवन्ति** —

इतश्चापूर्वविज्ञानाच्चिदानन्दविनोदिनः ।
ज्योतिष्मन्तो भवन्त्येते, ज्ञाननिर्धूतकल्मषाः ॥ ४० ॥

टीका:–तादृशापूर्वविज्ञानप्रयोज्यचिदानन्दविषयकाऽपूर्वविनोदप्रमोदवन्तः 'ज्ञाननिधूतकल्मषाः'=ज्ञानबलेन पापवासनानां विनाशं कृतवन्तः, एते ज्ञानयोगिनो महात्मानो 'ज्योतिष्मन्तो भवन्ति'=आत्मनो विशेषज्ञानरूपप्रकाशस्य देदीप्यमानपुञ्जमया भवन्तीति ॥ ४० ॥

– पर्यायक्रमवृद्धितस्तेजोलेश्याविवृद्धिरित्थंभूतस्यैव –

तेजोलेश्याविवृद्धिर्या, पर्यायक्रमवृद्धितः ।
भाषिता भगवत्यादौ सेत्थंभूतस्य युज्यते ॥ ४१ ॥

टीका:–यथा यथा मुनेः संयमपर्यायो वर्धमानो भवति, तथा तथा तस्य मुनेरुपरितनोपरितनवैमानिकदेवलोकस्य शुद्धशुद्धतरशुद्धतमतेजो (शुभ-शुद्ध) लेश्याप्रयुक्तानि साध्यानि चित्तस्य सुखदसंवेदनानि, सातिशयविशिष्टात्मतृप्तिसन्तुष्टिं च ज्ञानयोग्येवानुभवति, एवं श्रीभगवत्यादिसूत्रे यदुक्तं तदेतादृशविशिष्टज्ञानयोगिनि मुनिवरे घटते नान्यत्रेति ॥ ४१ ॥

– विषमेऽपि समत्वदर्शनं विशिष्टापूर्वगुणावहम् –

विषमेऽपि समेक्षी यः, स ज्ञाता स च पण्डितः ।
जीवन्मुक्तः स्थिरं ब्रह्म तथा चोक्तं परैरपि ॥ ४२ ॥

टीका:—कर्मनिमितविद्याजातिकुलादिरूपे विषमेऽपि यत्समानत्वं यः पश्यति, स ज्ञानी स च पण्डितः, स जीवन्मुक्तः सांसारिकस्थितिकारकद्रव्यप्राणैरञ्चितोऽपि मुक्त इव मुक्ताऽऽत्माऽस्ति पुष्करपलाशवन्निर्लेपोऽस्ति, स एव स्थिरं ब्रह्म(कूटस्थात्मरूपं) विद्यते तथा चोक्तं परैरपि-भगवद्गीतायामुक्तं ॥ ४२ ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च, पण्डिताः समदर्शिनः ॥ ४३॥ भ० गी० ५।१८

टीका:—विद्याविनयसंपन्ने=विद्या च विनयः च विद्याविनयौ, विद्या आत्मनो बोधः, विनय उपशमः, ताभ्यां विद्याविनयाभ्यां संपन्नो विद्याविनयसंपन्नो विद्वान् विनीतः च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि च एव श्वपाके च पण्डिताः समदर्शिनः, विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायां राजस्यां गवि संस्कारहीनायां अत्यन्तम् एवकेवलतामसे च सत्त्वादिगुणैः तज्जैः संस्कारैः तथा राजसैः तथा तामसैः च संस्कारैः अत्यन्तम् एव अस्पृष्टं समम् एकम् अविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥१८॥ भगवद्गीतायां शाङ्करभाष्यम् ॥४३॥

'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म, तस्माद् ब्रह्मणि ते स्थिताः ॥४४॥ भ. गी. ५।१९

टीकाः—इह एव जीवद्भिः एव तैःसमदर्शिभिः पण्डितैः जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम् । निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवद् इव विभाव्यते तथापि तद्दोषैः अस्पृष्टम् इति । निर्दोषं दोषवर्जितं हि यस्मात् । अतः समं ब्रह्म एकं च तस्माद् ब्रह्मणि एव ते स्थिताः तस्माद् न दोषगन्धमात्रम् अपि तान् स्पृशति, देहादि संघाताऽऽत्मदर्शनाऽभिमानाऽभावात् इति शाङ्करभाष्यांशा भगवद्गीतायां । ४४॥

यस्माद् निर्दोषं समं ब्रह्म आत्मा तस्मात्—

'न प्रहृष्येत् प्रियं प्राप्य, नोद्विजेत् प्राप्य चाऽप्रियम् ।
स्थिरबुद्धिरसंमूढो, ब्रह्मविद् ब्रह्मणि स्थितः ॥ ४५ ॥

टीकाः—न प्रहृष्येद् न प्रहर्षं कुर्यात् प्रियम् इष्टं प्राप्य लब्ध्वा, न उद्विजेत् प्राप्य एव च अप्रियम् अनिष्टं लब्ध्वा, देहमात्राऽऽत्मदर्शिनां हि प्रियाऽप्रियप्राप्ति हर्षविषादस्थाने न केवलात्मदर्शिनः तस्य प्रियाप्रियप्राप्त्यसंभवात् किञ्च सर्वभूतेषु एकःसमो निर्दोष आत्मा इति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिः असंमूढः संमोहवर्जितः च स्याद् यथोक्तो ब्रह्मविद् ब्रह्मणि स्थितः, अकर्मकृत् सर्वकर्मसंन्यासी इत्यर्थः ॥

इति शाङ्करभाष्यम् भगवद्गीतायां 'अनया रीत्या येषां साम्ये स्थितं मनः' यैःसर्वत्र ब्रह्म दृष्टं तैस्तु इहैव=अस्मिन् मनुष्यजन्मनि स्थित्वैव 'सर्गोजितः'=जन्ममरणसंसाररूपसर्गः, तीर्ण उत्तीर्णः, अर्थात् महा-

मृत्युस्थानतो निर्गत्यामृतपदं प्राप्तम्, यतः सर्वत्र ब्रह्म समं निर्दोषं चास्ति, एष ज्ञानयोगी सर्वत्र समत्वं-पश्यति, 'तस्माद् ब्रह्मणि ते स्थिताः'=तस्मात् कारणात् समत्वस्वरूपे निर्दोषे ब्रह्मणि, आत्मज्ञानिनस्ते, सदास्थिरत्वसम्पन्ना वर्तन्ते इति ।

टीकाः—'प्रियं प्राप्य न प्रहृष्येत्'=यदिष्टं लब्ध्वा तस्मिंश्च लीनो भवेद्, 'नोद्विजेत् प्राप्य चाप्रियं'= अनिष्टं प्राप्य तस्माद् दीनो न भवेदतएव स 'स्थिरबुद्धिः'=स्थैर्यविशिष्टबुद्धिमान् भवति, "असंमूढः'-संमोहाऽभावविशिष्टो भवति 'ब्रह्मवित्' वस्तुतः आत्मनोऽमृतपदवेत्ता भवति, 'ब्रह्मणि स्थितः'-चिदानन्दादि स्वरूपे स्थिरतावान् भवतीति ॥४५॥

निरपेक्षमुनीनां तु वैषम्ये साम्यदर्शनं रागद्वेषक्षयाय-

'अर्वाग्दशायां दोषाय वैषम्ये साम्यदर्शनम् ।
निरपेक्षमुनीनां तु रागद्वेषक्षयाय तत् ॥ ४६ ॥

टीकाः—ननु तत्तदात्मनि जातिकुलादिसत्कोच्चतानीचताजनितविषमता तु विद्यते एव तथाऽपि तद्विषमताया दर्शनं न कर्त्तव्यं च सर्वत्र सर्वं समत्वेन दर्शनीयमित्येष किं दोषो नास्ति ? इति चेन्न वैषम्ये साम्यदर्शन-मित्येतद्दोषरूपं विद्यते 'अर्वाग्दशायां दोषाय वैषम्ये साम्यदर्शनम्'=अर्थात् पूर्वावस्थायां कर्मयोगस्याराधनायां तद् वैषम्ये साम्यदर्शनं दोषाय कल्पते परन्तु अर्वाग्दशामतिक्रम्याग्रे गता ये ज्ञानयोगिनः सन्ति

तेषां 'निरपेक्षमुनीनां'=निःस्पृहिणां महात्मनां तु वैषम्ये साम्यदर्शनं दोषाय न भवति प्रत्युत रागद्वेषाजनन-द्वारा गुणायैव प्रभवति ॥४६॥

रागद्वेषक्षयप्रयुक्तविषयशून्यतापूर्णो ज्ञानीभवति-

'रागद्वेषक्षयादेति ज्ञानी विषयशून्यताम् ।
छिद्यते भिद्यते वाऽयं, हन्यते वा न जातुचित् ॥ ४७ ॥

टीकाः-वैषम्ये साम्यस्य दर्शनं कुर्वतां ज्ञानिनां रागद्वेषक्षयो भवति, अर्थात् तेषां ज्ञानिनां हृदयं विषयान् गृह्णाति परन्तु इष्टानिष्टस्वरूपेण तान् विषयान् ग्रहीतुं तु तेषां चित्तं सर्वथा शून्यं भवति, तत्पश्चाज्ज्ञानयोगिनः स्वस्य शरीरं केनचिच्छिद्यमानं भिद्यमानं हन्यमानं भवेत्तथाऽपि तत्सर्वमनिष्टमनिष्टत्वेन तच्चित्तं न गृह्णाति, अर्थात् कदाचिदपि स आत्मा, वस्तुतस्तु न च्छिद्यते न भिद्यते न हन्यते इति ॥४७॥

-श्लोकाष्टकं यावज्ज्ञानयोगिस्वरूपं निरूप्यते—

'अनुस्मरति नातीतं नैव काङ्क्षत्यनागतम् ।
शीतोष्णसुखदुःखेषु समो मानाऽपमानयोः ॥ ४८ ॥

टीकाः–'नातीतमनुस्मरति'=ज्ञानयोगी पूर्वानुभूतं सुखादिकं न स्मरति, 'नैवाऽनागतं काङ्क्षति'=भाविजन्यसुखादिकं नेच्छति, शीते चोष्णे, सुखे च दुःखे, माने चापमाने सदा समतावान् भवति, कुत्राऽपि न विषीदति च न प्रमीदति ॥४८॥

'जितेन्द्रियो जितक्रोधो, मानमायाऽनुपद्रुतः ।
लोभसंस्पर्शरहितो, वेदखेदविवर्जितः ॥ ४९ ॥

टीकाः='यो ज्ञानयोगी, इन्द्रियविषयविजेता भवति, क्रोधविजेता भवति च, लोभसंस्पर्शेन रहितो, मानस्य मायायाश्चोपद्रवशून्यो भवति, पुरुषवेदादेर्भयंकरोदयजन्यखेदस्य विशेषेण वर्जनविशिष्टोऽर्थान्मोक्षमार्गं प्रति द्रुतं गच्छतस्तस्य ग्लानिर्न भवतीति ॥४९॥

सन्निरुध्याऽऽत्मनाऽऽत्मानं, स्थितः स्वकृतकर्मभित् ।
हठप्रयत्नोपरतः, सहजाऽऽचारसेवनात् ॥ ५० ॥

टीकाः–शुद्धोपयोगस्वरूपेणाऽऽत्मना, भावमनःस्वरूपसङ्कल्पात्मकमात्मानं सम्यक्तया निरुद्ध्य च सदा सर्वकालमात्मस्वरूपे स्थितः–स्थिरतावान् भवेत्, 'स्वकृतकर्मभित्'=पूर्वोपार्जित–स्वकर्मभेदकारी भवेत्, निकाचितकर्मबलात् सहजरीत्या प्रवर्तमानो ज्ञानयोगी, इन्द्रियादीनां प्रत्याहाराय मनसि हठप्रयत्नरूपबलात्कारपूर्वकप्रवृत्तितः सर्वथा उपरतो–विरतो भवत्येवेति ॥५०॥

लोकसंज्ञाविनिर्मुक्तो, मिथ्याचारप्रपञ्चहृत् ।
उल्लसत्कण्डकस्थानः, परेण परमाश्रितः ॥ ५१ ॥

टीकाः=एष ज्ञानयोगी तु लोकस्य गताऽनुगतिकतायाः सर्वथा विनिर्गतः, तत एव लोकानां 'मिथ्याचारप्रपञ्चहृत्'=असत्यभूतस्याचारस्य प्रपञ्चं हरन् 'उल्लसत्कण्डकस्थानः' संयमधर्मस्याऽसङ्ख्याताध्यवसायस्थानानां निःश्रेणीसोपानेषु द्रुतं द्रुतमुत्प्लुत्योत्तरोत्तरं वर्धमानतया गच्छन्नेवास्ति, उत्कटशुभमनोयोगेनाऽत्यन्तोज्ज्वलाऽऽत्मभावं प्राप्तवान् ज्ञानयोगी वर्तते ॥५१॥

"श्रद्धावानाज्ञया युक्तः, शस्त्राऽतीतो ह्यशस्त्रवान् ।
गतोऽदृष्टेषु निर्वेद-मनिह्नुतपराक्रमः ॥ ५२ ॥

टीकाः–एव ज्ञानयोगी, जिनेन्द्रप्रवचनवचनस्योपरि निश्चलानन्यश्रद्धासमृद्धः स्यात्, जिनाज्ञापालनेऽपि प्रकामोल्लसितयोगसम्पत्संपन्नः स्यात्, 'शस्त्रातीतः'=अशुभाऽध्यवसायरूपाऽऽत्मघातितीक्ष्णशस्त्रेभ्योऽतीतः स्यात्, अत एव दुर्गतिप्रापकबाह्याधिकरणरूपशस्त्रा-भाववान् स्यात्, 'गतोऽदृष्टेषु निर्वेदम्'=अदृष्टस्वर्गादीच्छाशून्योऽत एव सम्मुखोपनतधनादिरूपदृष्टेपु पदार्थेष्वपि महानिर्वेदं गत उदासीनःस्यात् 'अनिह्नुतपराक्रमः'=निह्नवमकृत्वा पश्चाऽऽचारपालने-ऽद्भुतपराक्रमस्फूर्तिसम्पन्नो भवेदिति ॥५२॥

'निक्षिप्तदण्डो ध्यानाऽग्निदग्धपापेन्धनव्रजः ।
प्रतिस्रोतोऽनुगत्वेन, लोकोत्तरचरित्रभृत् ॥ ५३ ॥

टीकाः-एष ज्ञानयोगी, 'निक्षिप्तदण्डः' मनोवाक्कायनिष्ठाशुभव्यापाररूपदण्डत्रयनिक्षेपणकारी स्यात्, 'ध्यानाऽग्निदग्धपापेन्धनव्रजः'=ध्याननामकाऽग्निना पापकाष्ठसमूहं दग्धं कृतवानस्ति, 'प्रतिस्रोतोऽनुगत्वेन लोकोत्तरचरित्रभृत्'=सांसारिकमोहरूपाचारनदीपूरस्य प्रवाहं प्रति सम्मुखगमनस्य शिक्षणं प्रतिपन्नोऽस्ति, यतो लोकोत्तराचाररूपचरित्रस्य स्वामी वर्त्तते ॥५३॥

'लब्धान् कामान् बहिष्कुर्वन्नकुर्व्वन् बहुरूपताम् ।
स्फारीकुर्वन् परं चक्षुरपरं च निमीलयन् ॥ ५४ ॥
पश्यन्नन्तर्गतान् भावान्, पूर्णभावमुपागतः ।
भुञ्जानोऽध्यात्मसाम्राज्यमवशिष्टं न पश्यति ॥ ५५ ॥

टीकाः-अपूर्वदशां गतोऽयं ज्ञानयोगी, सम्मुखमागत्य समुपस्थितान् 'कामान्' कान्तप्रियभोगान्, मनःसदनतोऽपि 'बहिष्कुर्व्वन्' बहिष्कारपूर्वकं पृष्ठतः कुर्व्वन्, 'अकुर्व्वन् बहुरूपताम्'=क्षणं तुष्टः, क्षणंरुष्टः क्षणं रागी क्षणं विरागीत्यादीनि बहूनि रूपाणि-वेषान्तराणि न कुर्व्वन् वर्त्ततेऽर्थादेकरूपतां न त्यजति 'स्फारीकुर्वन्

॥३३५॥

पर चक्षुरपरं च निमीलयन्' चर्मचक्षुषी निमीलयन्, आन्तरचक्षुषी विकासिते उद्घाटिते कुर्वन् भवति, 'अन्तर्गतान् भावान् पश्यन् पूर्णभावमुपागतः'=आत्मप्रदेशेषु विस्तारितान् विशुद्धान् भावान् निरीक्षमाणोऽयं ज्ञानयोगी पूर्णत्वप्राप्तिमान् भवति 'अध्यात्मसाम्राज्यं भुञ्जानोऽवशिष्टं न पश्यति'=आध्यात्मिकचक्रवर्तित्वसत्तां भुञ्जानः सन् ततोऽवशिष्टं–शेषीभूतं न पश्यति, पूर्णतां प्राप्तोऽपूर्णं किमपि शेषं नास्तीति पश्यति–पूर्णदृष्टिं धारयति, सर्वं प्राप्तव्यं मया प्राप्तमेव निश्चिनोतीति । ५४॥५५॥

—आचारांगसूत्रे ज्ञानयोगस्य माहात्म्यम्—

'श्रेष्ठो हि ज्ञानयोगोऽयमध्यात्मन्येव यज्जगौ ।
बन्धप्रमोक्षं भगवान् लोकसारे सुनिश्चितम् ॥ ५६ ॥
उपयोगैकसारत्वादाश्वसंमोहबोधतः ।
मोक्षाऽऽप्ते युज्यते चैतत्तथा चोक्तं परैरपि ॥ ५७ ॥

टीका:–अध्यात्ममार्गे त्वेष ज्ञानयोग एव श्रेष्ठः परमो मतः, यतः परमात्मना महावीरदेवेनाऽऽचारांगसूत्रे लोकसारनामके पञ्चमेऽध्ययने, ज्ञानं योगात्मकमिदं 'बन्धप्रमोक्षं'=कर्मबन्धनतोऽवश्यं मोचकमितिकथितं, तत्र परमात्मना महावीरदेवेन कथितमस्ति यत् 'उपयोगैकसारत्वात्'=एष ज्ञानयोगः केवलमान्त-

शेषयोगमयोऽस्त्यतस्तत एव 'आश्रवसम्मोहबोधतः'=झटिति आत्मनोऽखण्डबोधप्राप्तिर्भवति, ततो मोक्षपद-प्राप्तिर्भवत्यतः शिवपदप्राप्त्या सहैव ज्ञानयोगो युज्यतेऽर्थान्मोक्षेण महात्मनो योजकत्वादयं ज्ञानयोगो भवति, तथा चोक्तं परैरपि भगवद्गीतायामुक्तं तथाहि

'तपस्विभ्योऽधिको योगी, ज्ञानिभ्योप्यधिको मतः ।
कर्मिभ्यश्चाधिको योगी, तस्माद् योगी भवाऽर्जुन ॥५८॥ भ. गी ६।४८

टीका:—'तपस्विभ्यः अधिको योगी, ज्ञानिभ्यः अपि ज्ञानम् अत्र शास्त्रपाण्डित्यं तद्वद्भ्यः अपि मतो ज्ञातः अधिकः श्रेष्ठ इति कर्मिभ्यः अग्निहोत्रादिकर्म तद्वद्भ्यः अधिको योगी विशिष्टो यस्मात् तस्माद् योगी भव अर्जुन ! इतिभगवद्गीतायां शाङ्करभाष्यम् ।

'हठतः शीतोष्णादिवेदनामात्रसहिष्णुभ्यस्तपस्विभ्य एव ज्ञानयोगी, अधिको—महानस्ति, शास्त्रा-दिचर्चाकरणनिपुणैः शुष्कशब्दज्ञानिभ्योऽप्येव ज्ञानयोगी अधिको महानस्ति, सम्यग्ज्ञानं विना शुष्कक्रिया-काण्डेभ्योऽपि ज्ञानयोगी महात्माऽधिकः श्रेष्ठोऽस्ति तस्मादर्जुन ! त्वं योगी--ज्ञानयोगी भवेति ॥५६॥५७॥५८॥

—ज्ञानयोगस्य श्रेष्ठतायाः कारणं दर्श्यते—

'समापत्तिरिह व्यक्तमात्मनः परमात्मनि ।
अभेदोपासनारूपस्ततः श्रेष्ठतरो ह्ययम् ॥५९॥

टीका:—'इह'=अस्मिन् ज्ञानयोगे 'परमात्मनि आत्मनः समापत्तिर्व्यक्तं'=परमात्मना महात्मनः समापत्तिः- अभेदरूपता (एकताप्राप्तिः) व्यक्तं—स्पष्टं यथा स्यात्तथा भवति, अतोऽभेदोपासनारूपो ज्ञान-योगस्ततोऽयं हि श्रेष्ठतरः'=सर्वयोगेभ्यः सर्वथा श्रेष्ठतरः प्रगण्यते इति ॥५९।

— उपासना भागवती सर्वाभ्योऽपि गरीयसी—

'उपासना भागवती, सर्वाभ्योऽपि गरीयसी ।
महापापक्षयकरी तथा चोक्तं परैरपि ॥ ६० ॥
योगिनामपि सर्वेषां मद्गतेनाऽन्तरात्मना ।
श्रद्धावान् भजते यो मां, स मे युक्ततमो मतः ॥ ६१ ॥

टीका:—परमाऽऽत्मना सह जातैषाऽभेदोपासना, अन्याभ्यः सर्वाभ्यो भेदोपसनाभ्यो गरीयसी—गरिष्ठाऽस्ति, यत एषा भागवती-भगवदभिन्नोपासनेव 'महापापक्षयकरी'=जन्मजन्मान्तरागतभयङ्करपापकर्मजालक्षयकरणाऽलंकर्मीणा भवति, 'तथाचोक्तं परैरपि'=तथाच भगवद्गीतायामुक्तं हि—'योगिनाम्

अपि सर्वेषां रुद्राऽऽदित्यादिध्यानपराणां मध्ये मद्गतेन—मयि वासुदेवे समाहितेन अन्तरात्मना अन्तः-करणेन श्रद्धावान् श्रद्दधानः सन भजते सेवते यो मां स मे-मम युक्ततमः अतिशयेन युक्तो मतः अभिमतः । भगवद्गीतायां शाङ्करभाष्यमिति

'सर्वेषां योगिनामपि यो मद्गतेनाऽन्तरात्मना मां श्रद्धावान भजते स मे युक्ततमो मतोऽर्थाद् भक्तयोगी परमेश्वरस्याऽतिशयेन प्रियोऽस्ति· सर्वेषु योगिषु यः परमेश्वरे चित्तं नियोज्य श्रद्धासहितां परमेश्वरीयभक्तिं करोति स परमेश्वरस्य प्रियतमोऽस्ति, भक्तिं विना योगोऽपि व्यर्थ एवेति ध्वन्यते ॥६०॥६१॥

—ज्ञानयोगिन्यपि विशिष्टा भक्तिः प्रशस्यते—

'उपास्ते ज्ञानवान् देवं, यो निरञ्जनमव्ययम् ।
स तु तन्मयतां याति, ध्याननिर्धूतकल्मषः ॥ ६२ ॥

टीका:—यो ज्ञानवान्—ज्ञानयोगी, निरञ्जनं—वीतरागं अव्ययं-अविनाशिस्वरूपं देवं-देवाधिदेवं, उपास्ते-अभेदोपासना कुरुते, तेन स्वरूपेण सह मत्स्वरूपमभिन्नतयाऽऽराधयति, 'ध्याननिर्धूतकल्मषः'=तादृश-विशिष्टध्यानबलप्राबल्यतः सर्वमलिनकर्मपरमाणून् निर्धूय, 'स तु तन्मयतां याति' स निरञ्जनत्वेनाऽव्य-यत्वेन देवोपासकः वीतरागपरमात्मस्वरूपे लीनो भवति, वीतरागमयो भवतीति ॥६२॥

—सामान्ययोगिरूपज्ञानयोगिनः स्वरूपम्—

'विशेषमप्यजानानो यः कुग्रहविवर्जितः ।
सर्वज्ञं सेवते सोऽपि, सामान्ययोगमाश्रितः ॥ ६३ ॥

टीकाः—व्यक्तिरूपममुकं सर्वज्ञमजानानोऽपि यः कदाग्रहग्रहविरहतः कश्चिदप्यात्मा, कश्चिदपि सर्वज्ञं देवं निरञ्जननिराकारसर्वज्ञत्वेन ज्ञात्वा सेवमानो भवेत्, निरञ्जनत्वादिगुणान् वेत्ति गुणिनं विशिष्टव्यक्तिं न वेत्ति, तथापि सामान्यतो गुणाधारो भाव्य एव यतो गुणानामाधारः सर्वज्ञत्वेन धार्यः इति सोऽपि सामान्यतः सर्वज्ञं मन्यमानोऽपि सामान्ययोगवान योगी महात्मा कथ्यते इति ॥६३॥

—सर्वज्ञो मुख्य एक एव—

'सर्वज्ञो मुख्य एकस्तत्, प्रतिपत्तिश्च यावताम् ।
सर्वेऽपि ते तमापन्ना, मुख्यं सामान्यतो बुधाः ॥ ६४ ॥

टीकाः—वस्तुतो मुख्यः सर्वज्ञस्त्वेक एवाऽस्ति, बहवः सर्वज्ञा न सन्ति, अर्थात सामान्यतस्तु तत्तद्दर्शनानां ये भावुकात्मानो बुधाःसर्वज्ञ प्रतिपद्यन्ते सेवन्ते, ते सर्वे वस्तुतस्तु मुख्यमेकं सर्वज्ञमेव स्वीकुर्वन्ति, तत्पश्चात् कश्चिन्महादेवनाम्ना वा महावीरदेवनाम्ना तं सर्वज्ञत्वेन स्वीकुर्यात् तदुत्तरं, यदा मुख्यः सर्वज्ञ एकोऽस्ति तदा तस्य नामभेदोऽस्तु तथाऽपि ततः सर्वज्ञस्य नानात्वं न भवति, अनेकनामभिरपि सर्वज्ञंमन्यमाना वस्तुतस्तु मुख्यं सर्वज्ञमेकमेव प्रतिपद्यन्ते यतो मुख्यः-सर्वज्ञस्त्वेक एवेति ॥६४॥

-पूर्वोक्तं कथनं स्पष्टयति—

'न ज्ञायते विशेषस्तु, सर्वथाऽसर्वदर्शिभिः ।
अतो न ते तमापन्ना, विशिष्य भुवि कश्चन ॥ ६५ ॥

टीकाः-किञ्च तत्तद्दर्शनाऽनुयायिनः सर्वज्ञा न सन्ति, यद् यस्मात्कारणात् तं मुख्यं सर्वज्ञं, त्रैकालिकानन्तपर्यायविषयकज्ञानादिविशिष्टत्वेन रूपेण ते ज्ञातुं समर्था भवेयुः, एते सर्वेऽसर्वदर्शिनः-असर्वज्ञाः सन्ति, तस्मान्मुख्यं सर्वज्ञं विशेषस्वरूपेण त्वस्मिन् जगति कश्चनाऽपि प्राप्तुं न शक्नुयात् । तथा च सामान्यतो नानाविधनामभिरेव तमेकं मुख्यं सर्वज्ञमनेके बुधा सानुकात्मानः स्वीकुर्वन्ति तत्र किमपि नाश्चर्यमिति ॥६५॥

—सर्वज्ञप्रतिपत्तिरूपांशात्तुल्यता सर्वयोगिनामस्ति—

'सर्वज्ञप्रतिपत्त्यंशात्तुल्यता सर्वयोगिनाम् ।
दूरासन्नादिभेदस्तु तद्भृत्यत्वं निहन्ति न ॥ ६६ ॥

टीकाः-एवं सर्वेऽपि योगिनः (नानानामभिरपि) सर्वज्ञं तु स्वीकुर्वन्त्येव, अर्थात् सर्वयोगिनामात्मनि सर्वज्ञस्य प्रतिपत्तिरस्त्येव, अनेन सर्वज्ञप्रतिपत्तिरूपेणांऽशेन सर्वे योगिनस्तुल्या भवन्त्येव, अस्तु पश्चान्नाम्ना

मुख्यं सर्वज्ञं त्रैकालिकानन्तपर्यायविषयकज्ञानादिविशिष्टत्वेन जानाना भगवन्महावीरानुयायिनः स्युः अथवा मुख्यसर्वज्ञस्य तादृशविशिष्टस्वरूपबोधाऽपेक्षयाऽत्यन्तदूरस्थाः, महादेवादिनाम्ना सम्बोधयन्तोऽन्ये भावुकात्मानः स्युः, मुख्यसर्वज्ञतो दूरस्थत्वसमीपस्थत्वविषये न किञ्चिद्वैशिष्ट्यं वर्तते, दूरस्था वा निकटस्था वा सर्वेऽपि योगिनः सर्वज्ञस्यावश्यमुपासका एव कथ्यन्ते, यथा देशाऽपेक्षया राज्ञः समीपत्वे प्रधानादयः सन्ति, राज्ञो दूरत्वे द्वाःस्थादयः सन्त्यपि सर्वे राज्ञः सेवकाः सन्त्येव, यतः सर्वे राज्ञ आज्ञामाश्रिताः, पश्चात्तत्र समीपस्थत्वदूरस्थत्वविषयेण सेवकत्वे भेदो न पतत्येव, प्रधानोऽपि राजसेवकः, द्वाःस्थोऽपि राजसेवकः, तथाऽनया रीत्या सर्वदर्शनस्य भगवद्भक्ताः, दूरस्था वा समीपस्थाः सर्वे भक्तयोगिनः, मुख्यमेकं सर्वज्ञमाश्रयन्तः सर्वज्ञसेवका एवोच्यन्ते ॥६६॥

—मध्यस्थैः सर्वैर्बुधैरिष्टा सेवा देवताऽतिशायस्य—

'माध्यस्थ्यमवलम्ब्यैव, देवताऽतिशयस्य हि ।
सेवा सर्वैर्बुधैरिष्टा, कालाऽतीतोऽपि यज्जगौ ॥ ६७ ॥
अन्येषामप्ययं मार्गो, मुक्ताऽविद्यादिवादिनाम् ।
अभिधानादिभेदेन, तत्त्वनीत्या व्यवस्थितः ॥ ६८ ॥

टीकाः=विविधदेवानां पूजाविषये माध्यस्थ्यमवलम्ब्यैव देवतत्त्वस्यातिशयस्वरूपशुद्धदेवत्वस्यैव सेवा कर्त्तव्या. एषा सर्वैर्बुधैरिष्टैव सांख्यमताऽनुयायी कालातीतोऽपि वक्ष्यमाणैः सप्तभिः श्लोकैरेनं विषयं यज्जगौ तत्कथ्यते तथाहि=योऽस्माभिरीश्वरः कथ्यते स मुक्तादिरूपैर्भिन्नभिन्ननामभिरथवाऽनादिशुद्धादि-स्वरूपभेदं भिन्नभिन्नदार्शनिकैः प्रत्याय्यते, किञ्च यदस्माभिर्भवकारणमिष्यते, तद्-अविद्यादिभिर्भिन्नभिन्न-नामभिस्तत्तद्दर्शनवादिभिः प्रज्ञाप्यते, सर्वेषां च वादिनामीश्वरविषये तत्त्वतस्तु मार्ग एष व्यवस्थितोऽस्ति यद् देवताऽतिशय एवैकः सेव्योऽस्ति, अर्थात्, शुद्धदेवत्वस्यातिशय-प्रकर्षवानेक एव देवोऽस्ति स एव सेव्यः ॥६७॥६८॥

—ईश्वरस्याऽभिधानभेदस्य नैरर्थक्यम्—

'मुक्तो बुद्धोऽर्हन् वाऽपि, यदैश्वर्येण समन्वितः ।
तदीश्वरः स एव स्यात्, संज्ञाभेदोऽत्र केवलम् ॥६९॥

टीकाः—कालातीतः कथयति यद् ब्रह्मवादिनो यं 'मुक्तः' इति कथयन्ति, बौद्धास्तु यं 'बुद्धः' इति ब्रुवते, जैनास्तु य 'अर्हन्' इति वदन्ति, यत्तन्नामवानपि य ऐश्वर्येण समन्वितोऽस्ति, स ईश्वरनामा

॥३४३॥

पदार्थः, स एक एव, मुक्तादिनामभेदेनापि न भिन्नः, अनया रीत्याऽनेकसंज्ञया किमेकमीश्वरतत्त्वमनेकस्वरूपं भवेत् ? अर्थादेक एवेश्वरः ॥६९॥

– ईश्वरस्य स्वरूपभेदस्य वैयर्थ्यम् –

'अनादिशुद्ध' इत्यादि र्योभेदो यस्य कल्प्यते ।
तत्तत्तन्त्रानुसारेण, मन्ये सोऽपि निरर्थकः ॥७०॥
विशेषस्याऽपरिज्ञानाद् युक्तीनां जातिवादतः ।
प्रायो विरोधतश्चैव, फलाभेदाच्च भावतः ॥७१॥

टीकाः=तस्यैकस्य ब्रह्मस्वरूपेश्वरस्य भेदं कुर्वन्, शैवमतानुयायी, तं 'अनादिशुद्धः' इति कथयति, बौद्धस्त 'प्रतिक्षणं विनाशी' इति वदति, कश्चित्तं 'सर्वगतः' इति वक्ति, कश्चित्तं 'विशिष्टस्थानस्थः' इति ब्रूते, एषा सर्वा तत्तद्दर्शनाऽनुसारेणेश्वरीया स्वरूपभेदानां या कल्पनाऽस्ति साऽपि व्यर्थेति मन्येऽहमिति तथाचैवं कथने कारणमेतदस्ति यत् (१) सर्वेषां दार्शनिकानामीश्वरस्वरूपादिविषयकं यज्ज्ञानमस्ति तत्तु सामान्यमेवेश्वरीयं विशिष्टस्वरूपज्ञानन्तु न भवति (२) स्वाऽभिमतेश्वरपुष्ट्ये दीयमाना अनुमानादियुक्तयोऽसिद्ध्यादिहेतुना युक्त्याभासरूपा (जातिवादा असद्युक्तिरूपाः) भवन्ति (३) वेदान्तादिदर्शनेषु

परस्परमीश्वरस्वरूपनिर्णयसम्बन्धे विरोधो दृश्यमानो लभ्यते (४) तस्मिन् सर्वोत्कृष्टगुणवत्पुरुषे एकान्तनित्यत्वैकान्ताऽनित्यादिधर्मान् भिन्नभिन्नान् मत्वाऽपि तैः क्रियमाणाया आराधनायाः फलं तु भावतः सर्वक्लेशक्षयरूपमेकमेवाऽऽयाति, इत्येतैः सर्वैः कारणैर्वस्तुतस्तु गुणप्रकर्षवत् पुरुषस्य बहुमानमेव फलं भवति, एतैश्चतुर्भिः कारणैरेवं प्रतिभाति यत् 'प्रकृष्टगुणवत पुरुषस्यैव सेवैवोचिता, तत्र तेषामभिधानादिभेदः सर्वथा व्यर्थतामेतीति ॥७०॥७१॥

— भवस्य कारणविषये नामभेदस्य व्यर्थत्वम् —

अविद्याक्लेशकर्मादि, यतश्च भवकारणम् ।
ततः प्रधानमेवैतत् संज्ञाभेदमुपागतम् ॥७२॥

टीका:--यथेश्वरसत्कानि विविधानि नामानि कृतानि सन्ति तथा तैस्तैर्दार्शनिकै भवकारणभूतपदार्थवाचकानि विविधानि नामानि विरचितानि सन्ति (१) वेदान्तिनो भवहेतु 'अविद्ये' ति नामतः कथयन्ति (२) साङ्ख्यास्तं 'क्लेशेति शब्दतः सङ्ख्यान्ति (३) जैनास्तं 'कर्मेति संज्ञातो ज्ञापयन्ति (४) आदिपदेन बौद्धाः 'वासनं' ति पदेन वदन्ति तम् (५) शैवास्तु 'पाशे' ति वचनतश्चाचक्षते तम् , येनकेनाऽपि नाम्ना भवहेतु कथयन्तु तथाप्येकार्थेन वस्तुनो बहूनि नामानि भवन्ति-तैर्नामभिर्नानाविधैर्नाना

वस्तूनि न भवन्ति भवकारणन्त्वेकमेव यद् भवकारणं तद्वयं 'प्रधाने' ति नामधेयेन कथयामोऽतस्तद्रूप नामभेदोऽपि निरर्थकः—अभिनवार्थको नेत्यर्थः ॥७२॥

— भवकारणगतस्वरूपभेदोऽपि निरर्थकः —

'अस्याऽपि योऽपरो भेद—श्चित्रोपाधिस्तथा तथा ।
गीयतेऽतीतहेतुभ्यो, धीमतां सोऽप्यपार्थकः ॥७३॥

टीकाः—अविद्यादिनामवतामेषां भवकारणानां विविधानि स्वरूपाणि तैस्तैर्दार्शनिकैर्दर्श्यन्ते तथाहि= केचिद् भवहेतु मूर्त्तत्वेन केचिदमूर्त्तत्वेन दर्शयन्त्यत एते सर्वे चित्रा उपाधयोऽपि, प्रस्तुतेऽधिकारे एकसप्ततितमे श्लोके कथितानां चतुर्णां हेतूनामाश्रयतो विदुषां कृते सर्वथा निरर्थका एव सर्वाणि च भवकारणानि हेयतयाऽभिमतानि यतस्तेषां मूर्त्ततादिविषयिणी चिन्ता निरर्थिका यथा मुक्तबुद्धादिरूपस्य देवताविशेषस्य चिन्ता व्यर्थेति तथाऽत्रापीति ॥७३॥

— देवादिभेदानां निरूपणप्रयासोऽयथास्थानेऽस्ति —

'ततोऽस्थानप्रयासोऽयं, यत्तद्भेदनिरूपणम् ।
सामान्यमनुमानस्य, यतश्च, विषयो मतः ॥७४॥

टीका:—कालातीतः कथयति=तत्तद्दार्शनिकानां बुद्धाऽर्हदादिविशेषस्य देवताभेदस्य देवत्वेन निरूपणकृते प्रयासोऽस्थानेऽयोग्योऽस्ति देवता त्वतीन्द्रियं वस्तु वर्त्तते, तत् सिद्धयेऽनुमानं सम्भवेच्च 'य ऐश्वर्यवान् स ईश्वरः' इतीश्वरविशेष्यकसामान्याऽनुमानं सम्भवेत, ईश्वरविशेषानुमानं न सम्भवेद् यथा धूमेन वह्नि-सामान्यविषयकानुमानं भवेत, तस्य विशेषज्ञानाय तु वह्निविषयकं प्रत्यक्षज्ञानमावश्यकं स्यादिति ॥७४॥

— संक्षिप्तरुचिजिज्ञासो विंशेषाऽनवलम्बनम्—

संक्षिप्तरुचिजिज्ञासो विंशेषाऽनवलम्बनम् ।
चारिसञ्जीवनीचार–ज्ञातादत्रोपयुज्यते ॥७५॥

टीका— एवं संक्षिप्तरुचित ईश्वरतत्त्वं ज्ञातुमिच्छुर्मुमुक्षु देवविशेषाऽवलम्बनं कुर्याच्च देवसामान्यं सर्वदेवान् सर्वज्ञत्वेन रूपेण सेवेत, तदा तदपि देवविशेषाऽनवलम्बन 'चारिसञ्जीवनीचारज्ञातादत्रोपयुज्यते' चारिसञ्जीवनी चाररूपो दृष्टान्त सोपनय उच्यते तथाहि-स्वपत्नी वृषभीभूतं स्वपति सर्वा वनस्पती भक्षयति, तदन्तः पतिताऽऽवश्यकवनस्पतिरपि भक्षिता, ततश्च वृषभरूपं त्यक्त्वा पुनः पुरुषः सञ्जातः एवं रीत्या देवसामान्यं सर्वज्ञत्वेन पूजयन् योगी अमुकस्य मुख्यसर्वज्ञस्य—वीतरागसर्वज्ञस्याऽवलम्बनं न गृह्णीयात् तदपि वरं, तथाऽपि परम्पराऽपेक्षया तु तदवलम्बनं तस्य प्राप्तं भवेदेव ततस्तस्य देवविशेषस्यानवलम्बनमपि प्रान्ते तूपयुज्यत एवेति ॥७५॥

– परमात्मतत्त्वजिज्ञासाऽपि सतां न्याय्या –

'जिज्ञासाऽपि सतां न्याय्या, यत्परेऽपि वदन्त्यदः ।
जिज्ञासुरपि योगस्य, शब्दब्रह्माऽतिवर्त्तते ॥७६॥

टीका:–योगस्य साधनाऽतीव सुन्दराऽस्ति परन्तु योगं ज्ञातुमिच्छाऽपि सुन्दराऽस्ति भगवद्गीतायामप्युक्तं हि 'जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्त्तते' शब्दशास्त्रिणः पण्डिता विशेष चतुरा भवेयुस्तथाऽपि चातुर्यं शाब्दिकमात्रमेव, तेभ्योऽपि योगसाधनाया जिज्ञासुरपि श्रेष्ठतरोऽस्ति यतो योगजिज्ञासु योगदिशं प्रति काञ्चित् प्रगतिं कुर्वन्नास्ते, यदा मात्रशब्दशास्त्री-शब्दब्रह्मवादी काञ्चिदध्यात्मगतिं कर्त्तुं न प्रभवतीति योगस्य जिज्ञासुरपि शब्दब्रह्मतोऽतिवर्त्तते इति ॥७६॥

– ईश्वरोपासकानां चतुर्विधत्वं भगवद्गीताकथितं वर्ण्यते –

आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी चेति चतुर्विधाः ।
उपासकास्त्रयस्तत्र धन्या वस्तुविशेषतः ॥७७॥

टी० (१) आर्त्तः=संसारदुःखदावानलदग्धो जीवोऽथवा परमात्मतत्त्वप्राप्तये वेदनाऽऽतुरः (२) जिज्ञासुः=निष्कामः सन् परमात्मनोऽनुग्रहं प्राप्य परमात्मतत्त्वविषयकज्ञानेच्छुः (३) अर्थार्थी=अर्थस्य

धनस्याऽथवा परमात्मतत्त्वरूपस्यैकस्य साध्यस्यार्थी जीवः (४) ज्ञानी=कर्मभक्तियोगाभ्यां परमात्मानमेव परमसत्यत्वेन स्वीकृत्य तस्यैवाऽस्तित्वं जगति वर्त्तते, एतादृशज्ञानसम्पन्नो ज्ञानी चतुर्विधेष्वीश्वरोपासकेषु प्राथमिकास्त्रयो धन्याः सुकृतिनोऽतो धन्यवादार्हाः, यतस्तेषां त्रयाणामुपासकानां वस्तुलक्ष्यरूपं वस्तु परमात्माऽस्ति, अर्थादमुं वस्तुविशेषमपेक्ष्य प्राथमिकास्त्रयो धन्याः सन्ति अत्रेदं ज्ञेयं=धनादीनामर्थे परमात्मभक्तिं कुर्वतां भक्तिरूपमनुष्ठानं विषाऽनुष्ठानं भवति तथाऽप्यत्र स एव धनार्थी भक्तो धन्यत्वेन कथ्यते यद्यपि धन्यतैषा, धनार्थित्वेन नास्ति परन्तु वस्तु-विशेषतोऽस्ति, धनस्यार्थित्वेऽपि जनस्यैतस्य धनाय नाऽन्यत्र कुत्र याञ्चां कुर्वतः परमात्मनि भक्तिरनन्याऽस्ति, अर्थात्तत्रैतेन यल्लक्ष्यं गृहीतमासीत्तदेवैतस्य धन्यताया निमित्तं वर्त्तते नो धनार्थिता, यस्य परमात्मतो धनस्योपरि राग आत्यन्तिको वर्त्तते स धनाय यदि परमात्मभक्तिं कुर्यात्तदा सा भक्तिर्विषानुष्ठानरूपा कथ्येत नाऽन्यथेति ॥७७॥

– चतुर्थस्थानीयज्ञानिरूपोपासकस्य वर्णनम् –

'ज्ञानी तु शान्तविक्षेपो, नित्यभक्ति र्विशिष्यते ।
अत्यासन्नो ह्यसौ भर्त्तु-रन्तरात्मा सदाशयः ॥७८॥

टी॰ चतुर्थस्थानीयेश्वरोपासको ज्ञानी तु कीदृशोऽय ज्ञानी? इति चेदुच्यते 'शान्तविक्षेपः'=रागादिरूपविक्षेपाणामुपशान्तिविशिष्टः, पुनः कीदृशः? 'नित्यभक्तिः' निरन्तरभक्तियोगविशिष्टः, विशेषणद्वयविशिष्टो

॥३५०॥ ज्ञानी, पूर्वोक्तेभ्यस्त्रिभ्य ईश्वरोपासकेभ्योविशिष्यतेऽतिशायी भवति, एषोऽत्यन्तविशिष्टकोटिक ईश्वरोपासकोऽस्ति, यतो देहादिबाह्यपदार्थेषु साक्षित्वेन स्थितः, 'अन्तरात्मा'=सम्यग्दर्शनादिगुणसम्पन्नः, सदाशयः'=प्रशस्तमना भूत्वा 'भत्तुरत्यासन्नः'=ब्रह्मस्वरूपस्य परमाऽऽत्मनोऽत्यन्तसमीपस्थो भवतीति ॥७८॥

– अज्ञश्चाश्रद्दधानश्च संशयाऽऽत्मा विनश्यति –

कर्मयोगविशुद्धस्तज्ज्ञाने युञ्जीत मानसम् ।
अज्ञश्चाऽश्रद्दधानश्च संशयाऽऽत्मा विनश्यति ॥७९॥

टी० तत्–तस्मात् कर्मयोगतो विशुद्धो महात्मा, ज्ञाने–ज्ञानयोगे मानसं–चित्तं युञ्जीत-निवेशयेत्, यो ज्ञानयोगी भवति स एव परमां शान्तिमधिगच्छति यो ज्ञानी नाऽस्ति, स च धर्मतत्त्वमश्रद्दधानः संशयाऽऽत्मा विनश्यति–विनाशमश्नुते 'अज्ञश्चाऽश्रद्दधानः च संशयाऽऽमा च विनश्यति 'अज्ञाश्रद्दधानौ यद्यपि विनश्यतः तथापि न तथा यथा संशयाऽऽत्मा, संशयात्मा तु पापिष्ठः सर्वेषां' शाङ्करभाष्ये इदम् ॥७९॥

— ध्यानयोगिनः स्वरूपं दर्शयति —

'निर्भयः स्थिरनासाग्र-दत्तदृष्टिर्व्रते स्थितः । ॥३५०॥
सुखासनः प्रसन्नाऽऽस्यो दिशश्चानवलोकयन् ॥८०॥

देहमध्यशिरोग्रीवमवक्रं धारयन् बुधः ।
दन्तैरसंस्पृशन् दन्तान्, सुश्लिष्टाधरपल्लवः ॥८१॥
आर्त्तरौद्रे परित्यज्य, धर्मे शुक्ले च दत्तधीः ।
अप्रमत्तो रतो ध्याने, ध्यानयोगी भवेन्मुनिः ॥८२॥

टी० कर्मयोग संसाध्य ज्ञानयोगी यो जातः स महात्मा, यदा ध्यानयोगं प्राप्नुयात्तदा स निर्भयो भवेत्, किञ्च नासिकाया अग्रभागस्योपरि दत्तस्थिरदृष्टिको भवेत्, व्रते स्थितो भवेत् सुखासनः स्यात्, प्रसन्नवदनो भवेत्, दिशश्चानवलोकयन्, (कटिरूपं) देहमध्यं शिरश्च ग्रीवा च=देहमध्यशिरोग्रीवं, अवक्रं—सरलं धारयन् बुधः, दन्तैर्दन्तानसंस्पृशन्, सुश्लिष्टाधरपल्लवः सन्, आर्त्तरौद्रदुर्ध्याने परित्यज्य धर्मे च शुक्ले ध्याने दत्तधीः—विनिविष्टबुद्धिकः, अप्रमत्तो—प्रमादपराङ्मुखः ध्याने रतः—सदापरायणः, मुनिर्ज्ञानयोगी भवेत् ॥८०॥८१॥८२॥

—: सक्रमं कर्मादियोगान् प्रपद्यते योगी :—

'कर्मयोगं समभ्यस्य, ज्ञानयोगसमाहितः ।
ध्यानयोगं समारुह्य, मुक्तियोगं प्रपद्यते ॥८३॥

टीकाः- सम्यग् रीत्या कर्मयोगं समभ्यस्य-पुनः पुनः प्रवृत्तौ मुक्त्वा कर्मयोगस्य सिद्ध्यनन्तरं, ज्ञानयोगे सम्यक् प्राप्तसमाधिर्महात्मा, ततो ध्यानयोगं समारुह्य-ध्यानयोगे समारूढो भूत्वा मुक्तियोगं=मुक्त्या सह साद्यनन्तभङ्गरूपेण सम्बन्धं प्रपद्यते, प्रकर्षेण स्वीकरोति, एष कर्मयोगोऽभ्यासदशारूपेण, ज्ञानयोगः समाधिदशारूपेण, ध्यानयोगः क्षपकश्रेणीगतसाधनारूपेण भूत्वाऽन्ततो सिद्धिप्राप्तिरूपो मुक्तियोगो जायते इति ॥८३॥

इत्याचार्य श्रीमद् विजयलब्धिसूरीश्वरपट्टधराचार्य श्रीमद् विजयभुवनतिलकसूरीश्वरपट्टधर-भद्रंकर सूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्याया टीकायां योगस्वरूपनिरूपणनामकः पञ्चदशोऽधिकार समाप्त ॥५७७॥

## - अथ ध्यानस्वरूपनामक षोडशोऽधिकार आरभ्यते -

### ध्यानस्य सभेद लक्षणम्

'स्थिरमध्यवसानं यत्, तद् ध्यानं चित्तमस्थिरम् ।
भावना चाऽप्यनुप्रेक्षा चिन्ता वा तत् त्रिधा मतम् ॥१॥

टीकाः-यच्चित्तस्य स्थिरमध्यवसानं तद् ध्यानं लक्ष्यते, यदस्थिरं चित्तं तद् भावनाऽनुप्रेक्षाचिन्ता-भेदेन त्रिधा मतमर्थाद् (१) भावना=ध्यानविषयकाऽभ्यासक्रिया (२) अनुप्रेक्षा=स्मृतिध्यानाद् भ्रष्टस्य चित्तस्य तत्र प्रतिनिवर्त्तनम् (३) उक्तप्रकारद्वयरहितं चिन्तनमिति ॥१॥

॥३५२॥

– ध्यानस्य कालस्थितिः –

मुहूर्त्तान्तर्भवेत् ध्यानमेकार्थे मनसः स्थितिः ।
बह्वर्थसङ्क्रमे दीर्घाऽप्यच्छिन्ना ध्यानसन्ततिः ॥२॥

टीका–एकस्मिन्नर्थे-विषयेऽन्तमुहूर्तं यावन्मनसश्चित्तस्य स्थितिर्ध्यानमुच्यते, बह्वर्थसङ्क्रमे=नाना-विधेषु विषयेषु सङ्क्रामन्ती चित्तस्य दीर्घस्थितिका याऽविच्छिन्नध्यानपरम्परा सा ध्यानसन्ततिः कथ्यते॥२॥

– चतुर्विधेषु ध्यानेष्वाद्यद्वयमन्तिमद्वयं च भवस्य च मोक्षस्य कारणम् –

'आर्त्तं रौद्रं च धर्मं च शुक्लं चेति चतुर्विधम् ।
तत् स्याद् भेदाविह द्वौ द्वौ कारणं भवमोक्षयोः ॥३॥

टीकाः–आर्तं रौद्रं च धर्मं च शुक्लं च चतुर्विधं ध्यानं, चतुर्षु ध्यानेषु मध्ये आद्यद्वयमार्त्तं रौद्रं च ध्यानं भवस्य कारणं, अन्तिमद्वयं च धर्मं च शुक्लं ध्यानं मोक्षस्य कारणम् ॥३॥

– चतुष्प्रकारकस्यार्त्तध्यानस्य वर्णनम् –

'शब्दादीनामनिष्टानां वियोगासम्प्रयोगयोः ।
चिन्तनं वेदनायाश्च, व्याकुलत्वमुपेयुषः ॥४॥

इष्टानां प्रणिधानं च, सम्प्रयोगावियोगयोः ।
निदानचिन्तनं पापमार्त्तमित्थं चतुर्विधम् ॥५॥

टीका (१) अनिष्टसंयोगवियोगचिन्ता=(I) अनिष्टप्राप्तशब्दादिविषयकवियोगचिन्ता (II) अनिष्टाप्राप्तशब्दादिविषयकसंयोगो मा भूदिति चिन्ता वर्त्तमानकालविषयिणी प्रथमा, द्वितीया भविष्यत्कालविषयिणी. योऽनिष्टविषयस्य वियोगो जातः, किञ्च यस्य संयोगो भूतकाले नाऽऽसीत्, तद्विषये 'एतद्वरं जात' मेवं विचारणं तदतीतकालविषयिणी चिन्ता, प्रस्तुतार्त्तध्यानप्रथमभेदस्य त्रयो विभागाः, (२) रोगचिन्ता=रोगादिजन्यव्याकुलतायां वेदनायाश्चिन्तनम् यथा वेदनैषा कदा शमिष्यतीति, वेदनायां शान्तायां पुनर्भवनाभावस्य चिन्ता, वेदनोपशमे 'वरमेतज्जातं' इति चिन्ता, (३) इष्टसंयोगवियोगचिन्ता=अप्राप्तेष्टविषयाणां संयोगो भवत्विति चिन्ता, प्राप्तेष्टविषयाणां वियोगो मा भूदिति चिन्ता, (४) निदानचिन्ता=तपः संयमादेः फलरूपेणाऽज्ञानादियोगतः स्वर्गादेः समृद्धेः प्रार्थना, एतस्यां चतुष्प्रकारायां चिन्तायामाद्ये द्वे चिन्ते, द्वेषमालिन्यजन्ये, तृतीया चिन्ता रागमालिन्यजा, चतुर्थी चिन्ता मोहमालिन्यजन्येति ॥४।५॥

— आर्त्तध्यानेऽप्यशुभलेश्यासम्भवः —

कापोतनीलकृष्णानां लेश्यानामत्र सम्भवः ।

अनतिक्लिष्टभावानां कर्मणां परिणामतः ॥६॥

टी० रौद्रध्यानिवदार्त्तध्यानवति कापोतनीलकृष्णानामशुभलेश्यानां सम्भवः, तथापि ता लेश्या रौद्रध्यानिवदतिसंक्लिष्टपरिणामवत्यो न भवन्ति, यतस्ता अनतिक्लिष्टभावरूपरसवतां कर्मणां परिणामस्वरूपिण्यो भवन्ति ॥६॥

— आर्त्तध्यानस्य लिङ्गानि –

'क्रन्दनं रुदनं प्रोच्चैः, शोचनं परिदेवनम् ।
ताडनं लुञ्चनं चेति लिङ्गान्यस्य विदुर्बुधाः ॥७॥

टी० यत्राऽऽर्त्तध्यानं तत्र प्रोच्चैः क्रन्दनं रुदनं च शोचनं, परिदेवनं–विलापः, मस्तकताडनं, मस्तककेशाना लुञ्चनं–कर्षणं, वक्षस्ताडनमित्यादीनि, अस्य=आर्त्तध्यानस्य लिङ्गानि–ज्ञापकचिह्नानि विदुर्बुधाः–पण्डिताः ज्ञापयन्ति स्मेति ॥७॥

— अन्यान्यपि कार्यभूतानि लिङ्गानि कथ्यन्ते —

'मोघं निन्दन् निजं कृत्यं, प्रशंसन् परसम्पदः ।
विस्मितः प्रार्थयन्नेताः प्रसक्तश्चैतदर्जने ॥८॥

टी० शिल्पवाणिज्यादिसम्बन्धि निजं कृत्यं–कार्यं मोघं सत् निन्दन्, परेषां वोत्कृष्टाः सम्पदः–विभूतीः प्रशंसन्, विस्मितः सन्नेताः–परसम्पत्तीः प्रार्थयन्नभिलषन्, 'एतदर्जने प्रसक्तः'=परसम्पदामर्जने प्रकर्षेण परायण इति कार्यलिङ्गानीति ॥८॥

— आर्त्तध्यानस्य हेतवः —

'प्रमत्तश्चेन्द्रियार्थेषु गृद्धो धर्मपराङ्मुखः ।
जिनोक्तमपुरस्कुर्वन्नार्त्तध्याने प्रवर्त्तते ॥९॥

टी० इन्द्रियाणामर्थेषु–विषयेषु प्रमत्तः–प्रकर्षेण मदान्वितः, अत एव गृद्धः=उत्कृष्टत्वेन लुब्धः, 'धर्मपराङ्मुखः'=कल्याणकारिधर्मतः पराङ्मुखः–विमुखः, 'जिनोक्तमपुरस्कुर्वन्' जिनशासनरूपंजिनवचनमग्रतो नहि कुर्वन्–जिनवचनमनपेक्ष्य स्वमतिकल्पनां पुरतः कुर्वन्नार्त्तध्याने प्रवर्त्तमानो भवतीति, अर्थादार्त्तध्यानतो दूरतः स्थातुमिच्छता तस्येमानि विशेषकारणानि हर्त्तव्यानीति ॥९॥

— आर्त्तध्यानं तिर्यग्गतिप्रदत्वात्सर्वप्रमादमूलत्वात्त्याज्यम् —

'प्रमत्तान्तगुणस्थाना–नुगतं तन्महात्मना ।
सर्वप्रमादमूलत्वात्त्याज्यं तिर्यग्गतिप्रदम् ॥१०॥

टी० प्रमत्तनामकषष्ठगुणस्थानकपर्यन्तव्याप्तिमत्, सर्वेषां प्रमादानां मूलत्वात् तिर्यग्गतिं प्रददात्येवं शीलं, तदार्त्तनामक ध्यानं महात्मना—गर्वविरतिवरेण त्याज्यमिति ॥१०॥

— चतुर्भेदं रौद्रध्यान वर्ण्यते —

'निर्दयं वधबन्धादि-चिन्तनं निबिडक्रुधा ।
पिशुनाऽसभ्यमिथ्यावाक् प्रणिधानं च मायया ॥११॥
चौर्यधीर्निरपेक्षस्य तीव्रक्रोधाऽऽकुलस्य च ।
सर्वाऽभिशङ्काकलुषं चित्तं च धनरक्षणे ॥१२॥

टी० (१) हिंसाऽनुबन्धिरौद्रध्यान='निबिडक्रुधा'=गाढतमक्रोधेन, 'निर्दयं'=दयारहितं यथा स्यात्तथा, पश्वादीनां वधबन्धनमारणादिविषयिणी चिन्ताऽर्थात् तस्य सर्वस्य कदाचिदकरणेऽपि तादृशकरणे दृढः सङ्कल्पः, एतादृशाऽध्यवसायविशिष्टो जीवोऽतिक्रोधी भवेत, दुष्टविपाकान् प्राप्नुवन्नस्ति (२) मृषाऽनुबन्धिरौद्रध्यानम्='पिशुनाऽसभ्यमिथ्यावाक् प्रणिधानं च मायया'=पैशून्यविशिष्टोऽसभ्यताविशिष्टोऽसत्यवचनविषयकोऽध्यवसायः 'जहि' 'मारय' 'कृन्तेत्यादिवचनोच्चारणम्, एतादृश आत्माऽतिमायावी, गूढपापवान, तथाऽऽत्मश्लाघी च परनिन्दको भवेदिति० (३) स्तेयानुबन्धिरौद्रध्यानं=पारलौकिकाऽपायतः सर्वथा निरपेक्षस्य प्रचण्डक्रोधाऽग्निना व्याकुलस्य, समये जीवघातकरणेऽपि समग्र-

तत्परतासम्पन्नमनसो मालिन्येन सह चौर्यकरणविषयकोऽध्यवसायः (४) परिग्रहानुबन्धिरौद्रध्यानम्= सर्वस्य स्वजनादेरुपरि 'किं ते मम धनं हरिष्यन्ती' ति स्वरूपया शङ्कया तेषां सर्वेषां हिंसाकरणैककलुषितचित्ते धनरक्षणविषयकचिन्तेति ॥११ ॥१२॥

- रौद्रध्यानस्योपसहारः -

'एतत् सदोषकरण—कारणाऽनुमतिस्थिति ।
देशविरतिपर्यन्तं, रौद्रध्यानं चतुर्विधम् ॥१३॥

टी० एतद् रौद्रध्यानं सदोपस्य—दोषयुक्तहिंसाऽऽदिकार्यस्य करणेन, कारणेनाऽनुमतिद्वारा, तिष्ठति-जायते. पूर्वोक्तं चतुर्विधं—चतुष्प्रकारं रौद्रध्यानं, देशविरतिनामकं पञ्चमगुणस्थानकं यावद् विद्यते इति ॥१३॥

- रौद्रध्यानेऽशुभलेश्यासम्भवः -

कापोतनीलकृष्णानां लेश्यानामत्र सम्भवः ।
अतिसंक्लिष्टरूपाणां कर्मणां परिणामतः ॥१४॥

टी० अत्र=रौद्रध्यानेऽस्मिन्, तद्वति वा, अत्यन्तसंक्लेशविशिष्टरसवतां कर्मणां परिणामतो लभ्यतीव्रमन्तीनां कापोतनीलकृष्णाऽन्यतमलेश्यानां सम्भव इति ॥१४॥

– रौद्रध्यानस्य कार्यभूतानि लिङ्गानि –

'उत्सन्नबहुदोषत्वं नानामारणदोषता ।
हिंसाऽऽदिषु प्रवृत्तिश्च, कृत्वाऽघं स्मयमानता ॥१५॥
निर्दयत्वाऽननुशयौ बहुमानः परापदि ।
लिङ्गान्यत्रेत्यदो धीरै–स्त्याज्यं नरकदुःखदम् ॥१६॥

टी० (१) हिंसाद्यनेकदोषेष्वन्यतमदोषस्य सेवनाऽनन्तरं पुनः पुनः तद्दोषसेवनम् (२) हिंसाद्यनेकपापस्थानेष्वनेकशः प्रवर्तनम् , (३) हिंसाऽऽदेकशायभूतत्वकूच्छेदनाद्यनेकदोषेषु प्रवृत्तिः, (४) सम्मुखस्थो जनो यावन्न म्रियेत तावत्तस्य शस्त्रादिना मारणम् (५) अघं-पापं कृत्वा स्मयमानता=हास्यमदाभिमानादिप्रकटनम् (६) परान् प्रति दयाशून्यता (७) कृतपापविषयकपश्चात्तापरहितत्वम् (८) परगतविपत्तौ मत्या भृशमान्तरानंदतरलता, अत्रेत्येतानि सर्वाणि रौद्रध्यानस्य कार्यलिङ्गानि ज्ञेयानि, तस्मान्नरकदुःखप्रदमेतद् रौद्रध्यानं धीरैः—धैर्यसम्पन्नपुरुषैः सदा त्याज्यमेवेति ॥१५॥१६॥

– अशुभध्यानस्य दुरन्तता शुभध्यानस्य च योग्यता –

'अप्रशस्ते इमे ध्याने दुरन्ते चिरसंस्तुते ।

प्रशस्तं तु कृताऽभ्यासो, ध्यानमारोढुमर्हति ॥१७॥

टी० आर्त्तरौद्रनामके द्वे ध्याने अप्रशस्ते चिरपरिचयवशाद्दुरन्ते दुःखेनान्तताविशिष्टे–दुष्प्रणाशे स्तः, येन भावनादिभिश्चित्तं भावितं–पुनः पुनः शिक्षितमत एव कृतोऽभ्यासो येन स कृताभ्यासः प्रशस्तं ध्यानं धर्मशुक्लाऽन्यतरद् ध्यानमारोढुमारोहणं कर्त्तुं मर्हति–योग्यो भवतीति ॥१७॥

— प्रशस्तध्यानयोग्यतायै चित्तस्य द्वादशभिर्भावनादिवस्तुभिः शिक्षणम् —

भावना देशकालौ च, स्वासनाऽऽलम्बनक्रमान् ।
ध्यातव्यधात्रनुप्रेक्षा, लेश्या लिङ्गफलानि च ॥१८॥

टी० चित्तस्य द्वादश शिक्षाः= (१) ज्ञानादिरूपाश्चतुर्विधा भावनाः, (२) धर्मध्यानोचितो देशः (३) धर्मादिध्यानाद्युचितः कालः (४) धर्मादिध्यानोचितं स्वासनम् (५) धर्मादिध्याने वाचनादेरालम्बनम् (५) मनोनिरोधादेः क्रमः, (७) आज्ञाविचयादिरूपेण ध्यातव्यम् (८) अप्रमादादिगुणयुतो ध्याता (९) अनुप्रेक्षाया अनित्यत्वादिभावनाया आलोचनम् (१०) शुभलेश्या (११) श्रद्धादिलिङ्गानि (१२) स्वर्गाऽपवर्गादिरूपं फलमित्यादिद्वादश वस्तूनि नाममात्रेण निर्दिष्टानि सन्तीति ॥१८॥

– भावनारूपं चित्तस्य प्राक् शिक्षणम् –

'ज्ञात्वा धर्म्यं ततो ध्यायेच्चतस्रस्तत्र भावनाः ।

॥३६०॥

ज्ञानदर्शनचारित्रवैराग्याऽऽख्याः प्रकीर्तिताः ॥१९॥

टी० ततः-द्वादशभावनादिवस्तुभिः चित्तस्य शिक्षणाऽनन्तरं धर्मादनपेतं धर्म्यं धर्मध्यानं ज्ञात्वा ध्यायेत्-ज्ञानानन्तर तदेव ज्ञानमेव स्थिरं सद् ध्यानं भवतीति सूचितम्, 'तत्र'=धर्मध्याने, 'चतस्रो ज्ञानदर्शनचारित्रवैराग्याख्या भावना प्रकीर्तिता':=ज्ञाननामकभावनादर्शननामकभावनाचारित्र-नामक भावनावैराग्यनामकभावना एवं चतुःसङ्ख्या अनुप्रेक्षाः प्रकीर्तिताः ॥१९॥

– पूर्वोक्तानां चतसृणां भावनानां क्रमशः फलानि –

'निश्चलत्वमसंमोहो, निर्जरा पूर्वकर्मणाम् ।
सङ्गाऽऽशंसाभयोच्छेदः, फलान्यासां यथाक्रमम् ॥२०॥

टी० (१) ज्ञानभावनाफलम्-निश्चलत्वम्=सम्यक् श्रुतज्ञानमाराधयन्नात्मा, अशुभयोगतो मनो निरुद्ध्य, शुभे चित्तस्यावस्थापनकरणरूपां विशिष्टभावनां स्पृशत्येव, सूत्रार्थौ शोधयति, भवनिर्वेदं प्राप्नोत्यतो ध्यातुश्चित्तं निश्चलं भवत्येव (२) दर्शनभावनायाः फलमसंमोहः=दर्शनभावनाया अभ्यासात् शङ्कादिदूषणहीनः सन्, प्रशमस्थैर्यादिगुणविशिष्ट आत्मा, तत्त्वविषयकभ्रान्तिशून्यो भवति (३) चारित्र-भावनायाः फलं पूर्वकालीनकर्मनिर्जरा=एतस्या भावनायाः परिपाकावशानां कर्मणामग्रहणं पुराण-

कर्मणो निर्जरणं च शुभानुबन्धिकर्मग्रहणमनायासेन प्राप्यते (४) सङ्गाशंसाभयोच्छेदरूपं वैराग्य भावनायाः फलम् , लोकस्वभावं सम्यग् जानन्नात्मा, वैराग्यभावनाया पुनः पुनरावृत्त्या निःसङ्गो भाति जीवितमरणाद्याशंसाविहीनो भवति, इहलोकादिभयसप्तकान्मुक्तो भवतीति ॥ २० ॥

भावनाजन्यचित्तस्थैर्यद्वारा ध्यानस्य योग्यो भवति–

'स्थिरचित्तः किलैताभिर्याति ध्यानस्य योग्यताम् ।
योग्यतैव हि नाऽन्यस्य, तथा चोक्तं परैरपि ॥ २१ ॥

टी० 'किलैताभिः'=पूर्वोक्तज्ञानादिकचतुर्विधभावनाभिः स्थिरचित्त आत्मा, ध्यानस्य–शुभध्यानस्य योग्यतां–पात्रतां याति-गच्छति 'अन्यस्य हि योग्यतैव न'=भावनाभिरस्पृष्टस्याऽस्थिरचित्तस्य योग्यतैव नाऽऽयाति'तथा चोक्तं परैरपि'=भगवद्गीतायामप्येषैव वार्त्ता कथिताऽस्ति वक्ष्यमाणश्लोकत्रयेणेति ॥२१॥

भगवद्गीतोक्ताश्लोकत्रयी–

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम् ।
तस्याऽहं निग्रहं मन्ये, वायोरिव सुदुष्करम् ॥ २२ ॥

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥ २३ ॥
असंयताऽऽत्मना योगो दुष्प्राप इति मे मतिः ।
वश्याऽऽत्मना तु यतता, शक्योऽवाप्तुमुपायतः ॥ २४ ॥

टी० 'चञ्चलं हि मनः कृष्ण इति कृषतेः विलेखनार्थस्य रूपं भक्तजनपापादिदोषकर्षणात् कृष्ण ! न केवलम् अत्यर्थं चञ्चलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपति परवशीकरोति । किञ्च बलवद् न केनचिद् नियन्तुं शक्यम् । किञ्च दृढं तन्तुनागवद् अच्छेद्यम् । तस्य एवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोः इव । यथा वायोः दुष्करो निग्रहः ततः अपि मनसो दुष्करं मन्ये इति अभिप्रायः ॥६ । ३४ ॥

'असंशयं न अस्ति संशयो मनो दुर्निग्रहं चलम् इत्यत्र हे महाबाहो । किन्तु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित् समानप्रत्ययाऽऽवृत्तिः चित्तस्य । वैराग्यं नाम दृष्टाऽदृष्टेष्टभोगेषु दोषदर्शनाऽभ्यासाद् वैतृष्ण्यं तेन च वैराग्येण गृह्यते निगृह्यते निरुध्यते इत्यर्थः ॥ ६ ।३५ ॥

असंयताऽऽत्मना अभ्यासवैराग्याभ्याम् असंयत आत्मा अन्तःकरणं यस्य सः अयम्, असंयताऽऽत्मना, योगो दुष्प्रापो दुःखेन प्राप्यते इति मे मतिः । यः तु पुनः वश्यात्मा, अभ्यासवैराग्याभ्यां वश्य- ॥३६४॥

त्वम् आपादित आत्मा मनो यस्य सः अयं वश्याऽऽत्मा, तेन वश्यात्मना तु यतता भूयः अपि प्रयत्नं कुर्वता शक्यः अवाप्तु योग उपायतो यथोक्ताद् उपायात् ॥ ६॥३६ ॥ इति शाङ्करभाष्यम् 'अर्जुन उवाच हे कृष्ण ! हि मनश्चञ्चलमत्यन्तचपलम् , प्रमाथि=आत्मानं प्रकर्षेण मथनातीत्येवं शीलं, दृढं दृढता-सम्पन्नं पूर्णहठत्वापन्नं, बलवत्=घोरसामर्थ्यविशिष्टं वर्त्ततेऽतोऽहं तस्य-मनसो निग्रहं वशयोग्यत्वं वायोरिव निग्रह सुदुष्करं मन्ये ।

हे महाबाहो ! असंशयं-संशयरहितं यथा स्यात्तथा, चलं मनो दुर्निग्रहं-दुःखेन निग्रहीतुं शक्यं वर्त्तते, तु परन्तु हे कौन्तेय कुन्तीपुत्र ! अभ्यासेन वैराग्येण गृह्यते-निग्रहविषयीक्रियते हे अर्जुन ! असंयतात्मना अस्ववशीकृतचित्तेन, साम्यबुद्धिरूपो योगः सुदुष्प्राप इति मे-मम मतिरस्ति परन्तु स्ववशीकृतचित्तेन, योगप्रयत्नशीलेन भावनाद्युपायतो योगः सुलभो भवतीति । २२ ॥ २३ ॥ २४ ॥

भावनाभाविताऽऽत्मनि धर्मध्यानयोग्यमन आदि सर्वं घटत एव ।

**सदृशप्रत्ययाऽऽवृत्त्या, वैतृष्ण्याद् बहिरर्थतः ।**
**एतच्च युज्यते सर्वं, भावनाभाविताऽऽत्मनि ॥ २५ ॥**

टी० 'सदृशप्रत्ययाऽऽवृत्त्या'='अहमित्यादिसमानज्ञानरूपप्रतीतेः पौनःपुन्येनाऽभ्यासतः वैतृष्ण्याद् बहिरर्थतः' चैतन्यशून्यबाह्यपदार्थ-विषयविषयकतृष्णाया अत्यन्ताभावतः, पूर्वोक्तभावनाभिर्भावित आत्मनि

'एतच्च सर्वं'=ज्ञानादिभावनाऽभ्यासवैराग्यादिद्वारा धर्मध्यानयोग्यचित्तादि सर्वं युज्यत एव ॥२५॥

धर्मध्यानस्य योग्यो देशः-

'स्त्रीपशुक्लीबदुःशील-वर्जितं स्थानमागमे ।
सदा यतीनामाज्ञप्तं ध्यानकाले विशेषतः ॥२६॥
स्थिरयोगस्य तु ग्रामेऽविशेषः कानने वने ।
तेन यत्र समाधानं स देशो ध्यायतो मतः ॥२७॥

टी० विजातीयस्त्रीभिः पशुभिर्नपुंसकै दुःशीलैश्च वर्जितं स्थानमेव यतीनां-साधूनां ध्यानस्य काले सदा विशेषत आगमे जिनैराज्ञप्तं-आज्ञाविषयीकृतं, धर्मशुक्लरूपध्यानस्य प्रारम्भिकदशाकाले, परन्तु यो महात्मा योगे स्थिरचित्तः सञ्जातः, तस्य तु सजने विजने वने वोपवने विशेषो न भवति, अर्थाद् यस्य यत्र कुत्रचिदपि चित्तस्य समाधिर्वर्त्तते, तस्य कश्चिदपि देशो ध्यातु र्योग्यो मतः ॥२६॥२७॥

-धर्मध्यानस्य विधातुरिष्टः कालः-

'यत्र योगसमाधानं कालोऽपीष्टः स एव हि ।
दिनरात्रि क्षणादीनां ध्यानिनो नियमस्तु न ॥२८॥

टी० यस्मिन् काले योगविषयकः समाधिरखण्डो भवति स धर्मध्यानस्येष्टः कालो ज्ञेयः, ध्यानकृतु'र्तुदिनरात्रिक्षणादीनां न नियम', अर्थात् कालबन्धनं ध्यानिनां न सम्भवतीती ॥२८॥

—जिता या काप्यवस्था ध्यानोपघातिनो न भवति—

येवाऽवस्था जिता जातु, न स्याद्ध्यानोपघातिनी ।
तया ध्यायेन्निषण्णोवा, स्थितो वा शयितोऽथवा ॥२९॥

टी० याऽऽसनमुद्राद्यवस्थानरूपाऽवस्था जिता—स्ववशीकृता यावत् सिद्धा, तदा जातु—कदाचिदपि 'ध्यानोपघातिनी=ध्यानविक्षेपिणी न स्यात्, तदनन्तरं तयाऽवस्थया, वीरासनादौ निषण्णः कायोत्सर्गे स्थितो वोर्ध्वं स्थितो अथवा दण्डवच्छयितः सुप्तः सन् ध्यायेत्=ध्यानमाचरेत् ॥२९॥

—ध्यानाय देशकालाऽवस्थासु नियमो न किन्तु नियता योगसुस्थता—

'सर्वासु मुनयो देशकालावस्थासु केवलम् ।
प्राप्तस्तन्नियमो नाऽऽसां, नियता योगसुस्थता ॥३०॥

टी० 'सर्वासु देशकालाऽवस्थासु अर्थात् सर्वस्मिन् काले सर्वस्मिन् देशे सर्वस्यां मुद्राऽऽसनाद्यवस्थायां मुनयोऽतीताऽनन्तकालावच्छेदेन केवलज्ञानं प्राप्ताः—प्राप्तवन्तोऽतो ध्यानाय देशकालवस्थानां

बन्धनं न भवितुमर्हति, अत्रैतावानेव नियमोऽस्ति यत् प्रत्येकयोगिनां स्वयोगे सुस्थता—समाधिः, अवश्यमावश्यकी येन व्यक्तिविशेषेण यद्देशाद्याश्रित्य योगे सुस्थता सम्प्राप्यते तस्य व्यक्तिविशेषस्य तद्देशादेर्नियमोऽस्त्येवेति वाच्यम् ॥३०॥

—धर्मध्यानाय योगयोऽऽलम्बनानि—

'वाचना चैव पृच्छा च, परावृत्त्यनुचिन्तने ।
क्रिया चाऽऽलम्बनानीह, सद्धर्माऽऽवश्यकानि च ॥३१॥

टी० (१) वाचनारूपाऽऽलम्बनम्=सूत्रार्थोभयदानरूपा वाचना (२) पृच्छारूपाऽऽलम्बनम्=सति संशये तदपनोदाय प्रच्छनम् (३) परावृत्तिरूपाऽऽलम्बनम्=पठितस्याऽवि स्मरणाय च कर्मनिर्जरणाय पुनः पुनः परावर्त्तनम् (४) अनुचिन्तनरूपाऽऽलम्बनम्=पूर्वकृतपाठस्याऽविस्मरणाय सूत्रार्थोभयस्मरणात्तु चिन्तनरूपानुप्रेक्षणम् (५) प्रत्युत्प्रेक्षणादिप्रतिलेखनादिरूपक्रियालम्बनम्=प्रतिलेखनादिरूपा क्रिया च सामायिकादिसद्धर्मा-वश्यकानि, इह—धर्मध्याने, आलम्बनानि ज्ञेयानि, वाचनादीनि चत्वार्यालम्बनानि श्रुतधर्माऽन्तर्गतानि, प्रत्युत्प्रेक्षणादिक्रियाऽऽत्मकं सामायिकादिसद्धर्मावश्यकात्मकं च चारित्रधर्माऽन्तर्गतमालम्बनम् ॥३१॥

—सूत्राद्यालम्बनाऽऽश्रितः सद्ध्यानमारोहति—

'आरोहति दृढ–द्रव्या–लम्बनो विषमं पदम् ।

तथाऽऽरोहति सद्ध्यानं, सूत्राद्याऽऽलम्बनाऽऽश्रितः ॥३२॥

टी० यथा सुदृढरज्ज्वादिरूपद्रव्याऽऽलम्बनवान्, विषम पदमारोहति तथा सूत्रादिवाचनाऽऽदिरूपपूर्वोक्ताऽऽलम्बनाश्रितः पुरुषो धर्म-शुक्लरूपं सद्ध्यानमारोहतीति ॥३२॥

–आलम्बनादरजन्यविघ्नविध्वंसद्वारा ध्यानाऽऽरोहणाऽखण्डितया–

आलम्बनादरोद्भूत–प्रत्यूहक्षययोगतः ।
ध्यानाद्यारोहणभ्रंशो, योगिनां नोपजायते ॥३३॥

टी० पूर्वोक्तसूत्रवाचनादिरूपाऽऽलम्बनानि प्रति भक्तिबहुमानरूपादरेण विशुद्धभावेन 'उद्भूत-प्रत्यूहक्षययोगतः'=उत्पन्नविघ्नविध्वंसयोगतः, ध्यानादियोगमारोहतां महात्मनां ततोऽधःपातो नोपजायते इति ॥३३॥

–जिने मनोनिरोधादिको ध्यानप्रतिपत्तिक्रमो न शेषेषु–

'मनोरोधाऽदिको ध्यानप्रतिपत्तिक्रमो जिने ।
शेषेषु तु यथायोगं, समाधानं प्रकीर्तितम् ॥३४॥

टीका० मुक्तिगमनकालेऽन्तिमाऽन्तर्मुहूर्ते सयोगिकेवली भगवान् प्राग् बादरकाययोगेन बादरवचन-

योगादिक्रमेण योगनिरोधं करोति यावदन्तिमशुक्लध्यानस्य चतुर्थभेदं चतुर्दशे गुणस्थाने प्राप्नोति, एष ध्यानप्रतिपत्तिक्रमो जिने-केवलिनि बोध्यः, अन्येषां जीवानां विषये तु तद्ध्यानप्रतिपत्तिक्रमो नाऽस्ति, यस्य यत्क्रमेण मन आदेर्निरोधद्वारा योगे स्थैर्यं भवेत्, स तस्य ध्यानप्रतिपत्तिक्रमो विज्ञेय इति ॥३४॥

धर्मध्यानगतमनसां ध्यानयोग्यं चतुष्प्रकारं ध्यातव्यम्-

आज्ञाऽपायविपाकानां संस्थानस्य च चिन्तनात् ।
धर्मध्यानोपयुक्तानां, ध्यातव्यं स्याच्चतुर्विधम् ॥ ३५ ॥

टीका-ध्यातव्यद्वारम्=धर्मध्यानोपयुक्तेन महात्मना (१) देवाधिदेवस्याज्ञा पुनः पुनर्मननीया (२) रागादिरूपा अपाया विचारपथं नेयाः (३) कर्मणां विचित्रो विपाको भावनीयः (४) लोकसंस्थानस्वरूपं मानसे स्मरणीयम् ॥ ३५ ॥

आज्ञाविचयनामकः प्रथमो धर्मध्यानप्रकारः-

'नयभङ्गप्रमाणाऽऽढ्यां, हेतूदाहरणाऽन्विताम् ।
आज्ञां ध्यायेज्जिनेन्द्राणामप्रामाण्याऽकलङ्किताम् ॥३६॥

टीका-सप्तभिर्नयैः सप्तभिर्भङ्गैः प्रत्यक्षपरोक्षरूपेण प्रमाणद्वयेनाऽऽढ्यां, हेतुभिश्चोदाहरणैरन्विताम्,

'अप्रामाण्याऽकलङ्किताम्=पूर्णतया प्रामाण्यसमन्वितां 'जिनेन्द्राणामाज्ञां ध्यायेत्'=समग्र सर्वमङ्गलकल्याण-कारणं जिनशासनं ध्यानविषयीकुर्यादिति ॥ ३६ ॥

अपायविचयनामको द्वितीयो धर्मध्यानभेदः-

'रागद्वेषकषायादि-पीडितानां जन्तुष्मताम् ।
ऐहिकामुष्मिकाँस्ताँस्तान् नानाऽपायान् विचिन्तयेत् ॥३७॥

टीका-रागेण द्वेषेण कषायादिभिः पीडितैः जन्मिभिरनुभूयमानान् ऐहिकान्-इहलौकिकान् , आमुष्मिकान् पारलौकिकान् , तांस्तान्=सर्वान् तत्तत्त्रासादिकान् , नानाऽपायान्=अनेकविधहानिमहाहानिरूपानपायान् विचिन्तयेदिति ॥ ३७ ॥

विपाकविचयनामकस्तृतीयो धर्मध्यानभेदः-

ध्यायेत्कर्मविपाकं च, तं तं योगाऽनुभावजम् ।
प्रकृत्यादिचतुर्भेदं शुभाऽशुभविभागतः ॥ ३८ ॥

टीका-मनोयोगादिरूपयोगस्यानुभावेन-प्रभावेण जातं, प्रकृतिस्थितिरसप्रदेशाऽऽख्यचतुर्भेदभिन्नं यत्कर्म, तस्य स्वर्गनरकादिरूपः 'शुभाऽशुभविभागतः'=अयं स्वर्गादिरूपः शुभो विपाकः-सुखद उदयः, एष

नरकनिगोदादिरूपोऽशुभो विपाको दुःखद उदय इति विभज्य तं तं कर्मविपाकं ध्यायेत्–चिन्तनविषयी-कुर्यादिति ॥ ३८ ॥

–श्लोकानां त्रिचत्वारिंशत्या संस्थानविचयनामकचतुर्थभेदभिन्नस्य धर्मध्यानस्य वर्णनम्–

'उत्पादस्थितिभङ्गादिपर्यायैर्लक्षणैः पृथक् ।
भेदैर्नामादिभिर्लोकसंस्थानं चिन्तयेद्भृतम् ॥ ३९ ॥

टीका–उत्पादस्थिति-भङ्ग(विनाश) प्रभृतिपर्यायैर्लक्षणरूपै र्भृतम् , नामादिभिर्भेदैः पृथक्'=नामलोक-स्थापनालोक-द्रव्यलोक-भावलोकैः पृथक्-भिन्नं लोकसंस्थानं चिन्तयेदिति ॥ ३९ ॥

–लोकस्थजीवद्रव्यस्य चिन्तनम्–

'चिन्तयेत्तत्र कर्त्तारं भोक्तारं निजकर्मणाम् ।
अरूपमव्ययं जीवमुपयोगस्वलक्षणम् ॥ ४० ॥

टीका–तत्र लोके निजकर्मणां कर्तारं, भोक्तारं–कर्मफलस्य भोक्तारं, अरूपं=रूपरसगन्धस्पर्शादिरूप-पुद्गलरूपरहितम् , अव्ययं=स्वस्वरूपादच्युतम् , उपयोगस्वलक्षणम्'=ज्ञानदर्शनरूपोपयोगनामकस्वकीय-लक्षणवन्तं जीवं-जीवत्वविशिष्टं चिन्तयेद्-भावयेदिति ॥ ४० ॥

—पञ्चभिःश्लोकैः संसारसागरस्य दुस्तरत्वेन वर्णनम्—

'तत्कर्मजनितं जन्म-जरामरणवारिणा ।
पूर्णं मोहमहावर्त्तकामौर्वानलभीषणम् ॥ ४१ ॥
आशामहाऽनिलापूर्ण-कषायकलशोच्छलत् ।
असद्विकल्पकल्लोल-चक्रं दधतमुद्धतम् ॥ ४२ ॥
हृदि स्रोतसिकावेलासम्पातदुरतिक्रमम् ।
प्रार्थनावीचिसंतानं, दुष्पूरविषयोदरम् ॥ ४३ ॥
अज्ञानदुर्दिनं व्यापद्-विद्युत्पातोद्भवद्भयम् ।
कदाग्रहकुवातेन, हृदयोत्कम्पकारिणं ॥ ४४ ॥
विविधव्याधिसम्बन्ध–मत्स्यकच्छपसंकुलम् ।
चिन्तयेच्च भवाऽम्भोधिं चलद्दोषाऽद्रिदुर्गमम् ॥ ४५ ॥

टीका—भवाऽम्भोधिं चिन्तयेत्=संसारसागरं (विशेष्यपदं) चिन्तयेत् , कीο सο ? (१) तत्कर्मजनितम्=

तत्तज्जीवस्य तत्तत्कर्महेतुनोत्पन्नम् पु० की० भ० ? (२) जन्मजरामरणवारिणा पूर्णम्=जन्मजरामरणरूप-दुःखाऽवस्थारूपजलेन सर्वतो भृतम् , पु० की० भ० ? (३) मोहमहावर्तकामौर्वाऽनलभीषणम्=मोहनामक-महावर्त्तेन च कामनामकवडवानलेन भयाऽऽवहम् , पु० की० भ० ? (४) आशामहानिलाऽऽपूर्णकषाय-कलशोच्छलदमद्विकल्पकल्लोलचक्रं दधतमुद्धतम्=आशानामकप्रचण्डपवनेनाऽऽसमन्तात् पूर्ण-भरितकषाय-नामकपातालकलशेभ्य उच्छलद्दुष्टविकल्पनामककल्लोलचक्रं दधतमत एवोद्धतमुन्मत्तम् , पु० की० भ० ? (५) हृदि स्रोतसिकावेलासम्पातदुर्गतिक्रमम्=मनसि जातेन्द्रियनामनारूपस्रोतसिका (दोष-अतिचार-स्खलना रूपस्रोतसिका) नामकजलवृद्धिसम्पातेन दुर्ल्लङ्घनीयम् , पु० की० भ ? (६) प्रार्थनावीचिसन्तानम्'=विषयसुखादिविषयकयाचनादिलहरीपरम्परोन्नतम् पु० की० भ० (७) 'दुष्पूरविषयोदरम्'=दुखेन पूरणीय-विषयनामकोदरमध्यभागवन्तम् , पु० की भ० (८-६) अज्ञानदुर्दिनं व्यापद्विद्युत्पातोद्भवद्भयम्' अज्ञाननामकमेघजनितान्धकारविशिष्टमत एव विविधविपत्तिनामकविद्युतां पतनेन जायमानभयवन्तम् , पु० की० भ० ? (१०) कदाग्रहकुवातेन हृदयोत्कम्पकारिणम्'=कदाग्रहनामककुत्सितपवनेन हृदयस्यो-त्कम्पनकारिणम् पु० की० भ० (११) 'विविधव्याधिसम्बन्धमत्स्यकच्छपसङ्कुलम्=नानाविधरोगसम्बन्ध-नामकैर्मत्स्यैः कच्छपैश्च संव्याप्तम् , पु० की० भ० ? (१२) चलद्दोषाद्रिदुर्गमम्'=जङ्गमदोषनामकैः पर्व-तैर्हेतुभिर्दुर्गमम्-दुष्प्रवेशम् - भवाम्भोधि चिन्तनमार्गं नयेदिति ॥४१॥४२॥४३॥४४॥४५॥

-पञ्चभिः श्लोकैः संसारसागरसन्तरणोपायो दर्श्यते-

'तस्य सन्तरणोपायं सम्यक्त्वदृढबन्धनम् ।
बहुशीलाऽङ्गफलकं ज्ञाननिर्यामकाऽन्वितम् ॥ ४६ ॥
संवरास्ताश्रवच्छिद्रं, गुप्तिगुप्तं समन्ततः ।
आचारमण्डपोद्दीप्ता-पवादोत्सर्गभूद्वयम् ॥ ४७ ॥
असङ्ख्यैर्दुर्धरैर्योधै दुष्प्रधृष्यं सदाशयैः ।
सद्योगकूपस्तम्भाग्र-न्यस्ताऽध्यात्मसितांशुकम् ॥ ४८ ॥
तपोऽनुकूलपवनोद्भूतसंवेगवेगतः ।
वैराग्यमार्गपतितं, चारित्रवहनं श्रिताः ॥ ४९ ॥
सद्भावनाख्यमंजूषा-न्यस्तसच्चित्तरत्नतः ।
यथाऽविघ्नेन गच्छन्ति, निर्वाणनगरं बुधाः ॥ ५० ॥

टी० 'तस्य'=संसारसागरस्य सन्तरणोपायभूतं चारित्रनामकवहनं श्रिता इति विशेष्यपदम् , पुनः कीदृशं

॥३७४॥

चारित्रवहनं ? (१) सम्यक्त्वदृढबन्धनम्'=शुद्धसम्यक्त्वनामकरज्ज्वादिदृढबन्धनविशिष्टम् , पु० की० चा० व० ? बहुशीलाङ्गफलकम्'=अष्टादशसहस्रशीलाङ्गनामकफलकविशिष्टम् , पु० की० चा० व० ? ज्ञाननिर्यामकाऽन्वितम्'=ज्ञाननामकेन निर्यामकेन-नाविकेन संयुतम् , पु० की० चा० व० ? संवराऽस्ताश्रवच्छिद्रम्'=सप्तपञ्चाशद्भेदभिन्नेन संवरेण सम्पूर्णपूर्णाश्रवनामकच्छिद्रविशिष्टम् , पु० की० चा० व० ? गुप्तिगुप्तं समन्ततः' समन्तान्मनोगुप्त्यादिगुप्तिभिर्गुप्तम्-रक्षितम् , पु० की० चा० व० ? आचारमण्डपोद्दीप्तापवादोत्सर्गभूद्वयम्'=ज्ञानाचारादिपञ्चा चारनामकमण्डपेनोद्दीप्त-देदीप्यमानोत्सर्गापवादनामकभूमिकाद्वयम् , पु० की० चा० व० ? अमङ्ख्यैर्दुर्धरैर्योधैः मदाशयैर्दुष्प्रधृष्यम्'=शुभाऽध्यवसायनामकैरसङ्ख्यैर्दुर्धरैर्योधैर्हेतुभिः,, रागादिरिपुगणैरपराजेयम् , पु० की० चा० व० ? सद्योगकूपस्तम्भाऽग्रन्यस्ताऽध्यात्मसितांशुकम्' = शुभयोगनामककूपस्तम्भस्याऽग्रभागे न्यस्त—ज्ञानक्रियाऽऽत्मकाऽध्यात्म—नामकसितांशुकम् , पु० की. चा० व० ? 'तपोऽनुकूलपवनोद्भूतसंवेगवेगतो वैराग्यमार्गपतित' = तपोनामकानुकूलपवनतो जातसंवेग ( मोक्षाऽभिलाष ) नामकवेगतः, वैराग्यमार्गे पतितं—चटितं, एतादृशचारित्रनामकं प्रवहणं श्रिताः—तदाश्रयेण स्थिता बुधाः पण्डिताः, 'सद्भावनाऽऽख्यमञ्जूषान्यस्तसच्चित्तरत्नतः' = समीचीनभावनानामिकायां मञ्जूषायां स्थापितं यत् सच्चित्त—सदाशयनामकं रत्नं तस्मात् , अविघ्नेन—विघ्नस्याऽत्यन्ताऽभावपूर्वकं, अग्रे वक्ष्यमाणैः श्लोकैर्यथा निर्वाणनगरं गच्छन्ति तथा महात्मभि र्विचिन्त-

नीयमिति प्रस्तोष्यमाणैकादशश्लोकगणेन सह सम्बन्धो योज्यः ॥४६॥४७।४८।४९।५०॥

— अथैकादशभिःश्लोकैः मोहराजस्याऽऽक्रमणपराजययोर्वर्णनम् —

'यथा च मोहपल्लीशे, लब्धव्यतिकरे सति ।
संसारनाटकोच्छेदा-शङ्कापङ्काऽऽविले मुहुः ॥५१॥
सज्जीकृतस्वीयभटे, नावं दुर्बुद्धिनामिकाम् ।
श्रिते दुर्नीतिनौवृन्दा——रूढशेषभटाऽन्विते ॥५२॥
आगच्छत्यथ धर्मेश—भटौघे रणमण्डपम् ।
तत्त्वचिन्ताऽऽदि—नागच—सज्जीभूते समाश्रिते ॥५३॥
मिथो लग्ने रणाऽऽवेशे, सम्यग् दर्शनमन्त्रिणा ।
मिथ्यात्वमन्त्री विषमा प्राप्यते चरमां दशाम् ॥५४॥
लीलयैव निरुद्ध्यन्ते कषायचरटा अपि ।
प्रशमादिमहायोधैः शीलेन स्मरतस्करः ॥५५॥

॥३७६॥

हास्यादिषट्कलुण्टाक-वृन्दं वैराग्यसेनया ।
निद्रादयश्च ताड्यन्ते, श्रुतोद्योगादिभिर्भटैः ॥५६॥
भटाभ्यां धर्मशुक्लाभ्या—मार्त्तरौद्राऽभिधौ भटौ ।
निग्रहेणेन्द्रियाणां च जीयते द्रागसंयमः ॥५७॥
क्षयोपशमतश्चक्षु-र्दर्शनाऽऽवरणादयः ।
नश्यन्त्यसातसैन्यं च पुण्योदयपराक्रमात् ॥५८॥
सह द्वेषगजेन्द्रेण, रागकेसरिणा तथा ।
सुतेन मोहभूपोऽपि, धर्मभूपेन हन्यते ॥५९॥
ततः प्राप्तमहानन्दा, धर्मभूपप्रसादतः ।
यथा कृतार्था जायन्ते, साधवो व्यवहारिणः ॥६०॥
विचिन्तयेत्तथा सर्वं, धर्मध्याननिविष्टधीः ।
ईदृगन्यदपि न्यस्तमर्थजातं यदागमे ॥६१॥

टी० 'चारित्रवहनं श्रिता बुधा निर्वाणनगरं गच्छन्तीति लब्धव्यतिकरे-सम्प्राप्तवृत्तान्ते मति 'मुहुः संसारनाटकोच्छेदाशङ्कापङ्काऽऽविले मोहपल्लीशे मति'=पुनःपुनः संसारनामक-नाटकस्योच्छेदस्याशङ्का-चिन्तानामकपङ्केन मलिने मोहनामकपल्लीपतौ मति, पु०की०मो०प. १ सज्जीकृतस्वीयभटे दुर्बुद्धिनामिकां नावं श्रिते, 'दुर्नीतिनौवृन्दारूढ-शेषभटाऽन्विते'=स्वीयभटानां सज्जीकरणानन्तरं दुष्टलेश्यानामकनावं श्रिते, दुष्टनीतिनामक-नौसमूहारूढशेषसुभटैरन्विते मोहपल्लीपतौ, आगच्छति सति, अथेत्यनन्तर-मितो 'धर्मेशभटौघे 'तत्त्वचिन्तादिनाराच-सज्जीभूते रणमण्डपं समाश्रिते'=तत्त्वचिन्ताऽऽदि-नामकसुतीक्ष्णबाणावलीभिः सज्जीभूते धर्ममहाराजस्य भटानामोघे-समुदाये युद्धमण्डपं समाश्रिते सति 'मिथो लग्ने रणाऽऽवेशे'=परस्परं रणस्य रङ्गे लग्ने सति, सम्यग्दर्शननामकमन्त्रिणा, मिथ्यात्वनामको मन्त्री, विषमां चरमां दशां प्राप्यते-गम्यते प्रापितश्च क्रियते, 'लीलयैव प्रशमादिमहायोधैः कषायचरटा अपि निरुद्ध्यन्ते शीलेन स्मरतस्करः'=क्रीडामात्रेण कषायनामकाश्चरटाः—चोराः प्रशमविनयार्जवमार्दवनामकैर्महायोधै निरुद्ध्यन्ते, शीलनामकेन महायोधेन कामनामकोऽपि तस्करो निरुद्ध्यते, तथा वैराग्यनामकसेनया हास्यादिषट्क लुण्टाकवृन्दं निरुद्ध्यते, श्रुतविषयकोद्योगादि-नामकैर्भटै निद्रादयस्ताड्यन्ते, धर्मशुक्लनामकशुभध्यानभटाभ्यामार्त्तरौद्रनामकौ भटौ जीयेते 'इन्द्रियाणां निग्रहेण च झटिति जीयतेऽसंयमो भटः, क्षयोपशमनामकभावभटतश्चक्षुर्दर्शनाऽऽवरणादयो नश्यन्ति, असातवेदनीयनामकं सैन्यं च. पुण्योदयस्य पराक्रमान्नश्यति, द्वेषगजेन्द्रेण सुतेन तथा रागकेसरिणा सुतेन सह मोहभूपोऽपि धर्मभूपेन

हन्यते हननविषयीक्रियते, ततो धर्ममहाराजस्य प्रसादतः—कृपया, संसारमहोदधेः पारं गन्तुं चारित्रवहनं श्रिताः सर्वे व्यवहारिणः प्राप्तमहानन्दाः सञ्जाताः, यथा धर्मराजस्य प्रसादतः सर्वे साधवो व्यवहारिणः कृतार्थाः—कृतकृत्या अमृतपदारूढा जायन्ते, तथा 'धर्मध्याननिविष्टधीः'=धर्मध्यानैकस्थापितबुद्धिः, महात्मा सर्वं विचिन्तयेत् । एतावन्मात्रमपि न परन्तु ईदृगन्यदपि, अप्रमत्तताऽऽदिभावस्य कथनं, यन्नाग-दत्तकथाद्वारा 'यदागमे'=आवश्यकसूत्रादिरूपे जिनागमे न्यस्तमर्थजातं तदपि धर्मध्यानध्यायिना महात्मनो-हनीयमित्यत्र ध्यातव्यनामकं सप्तमं द्वारं समाप्तम् ॥५१।५२।५३।५४।५५।५६।५७।५८।५९।६०।६१॥

अथाष्टमं ध्यातृद्वारं कथ्यते—

'मनसश्चेन्द्रियाणां च जयाद्यो निर्विकारधीः ।
धर्मध्यानस्य स ध्याता, शान्तो दान्तः प्रकीर्तितः ॥ ६२॥

टी० 'मनसश्चेन्द्रियाणां जयाद्'=चित्तस्य चेन्द्रियाणां संयमनरूपजयद्वारा 'यो निर्विकारधीः'=विकारशून्यबुद्धिसमृद्धिमान् 'शान्तो दान्तः' स धर्मध्यानस्य ध्याता, शमदमगुणसम्पन्नो-धर्मध्यानस्य ध्यातृरूपोऽधिकारीति कथ्यते ॥ ६२ ॥

पराऽभिमतस्थितप्रज्ञस्य लक्षणं धर्मध्यानध्यातरि घटते इति वर्णनम्—

परैरपि यदिष्टं च, स्थितप्रज्ञस्य लक्षणम् ।
घटते ह्यत्र तत्सर्वं, तथाचेदं व्यवस्थितम् ॥ ६३ ॥
प्रजहाति यदा कामान्, सर्वान् पार्थ ! मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः, स्थितप्रज्ञस्तदोच्यते ॥ ६४ ॥

टी० परैर्दर्शनाऽन्तरीयैरपि यत् स्थितप्रज्ञस्याऽऽत्मनो लक्षणमिष्टं तत्सर्वमत्र-धर्मध्यानकर्तर्यात्मनि-घटतेऽर्थाद्धर्मध्यानी स्थितप्रज्ञ उच्यते तथा चेदं भगवद्गीतायां व्यवस्थितं तद्दर्श्यते ।

प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ ! मनोगतान मनसि प्रवृष्टान हृदि प्रविष्टान् । सर्वकामपरित्यागे पुष्टि-कारणाऽभावात्, शरीरधारण-निमित्तशेषे सति उन्मत्तप्रमत्तस्य इव प्रवृत्तिः प्राप्ता इति अत उच्यते-आत्मनि एव प्रत्यगात्मस्वरूपे एव आत्मना स्वेन एव बाह्यलाभनिरपेक्षः तुष्टः परमाथदर्शनाऽमृतरसलाभेन, अन्यस्माद् अलंप्रत्ययवान् स्थित-प्रज्ञः स्थिता प्रतिष्ठिता आत्माऽनात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वान तदा उच्यते । त्यक्तपुत्र-वित्तलोक एव संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः ।

इति शाङ्करभाष्यम्

पार्थ ! हे अर्जुन ! मनोगतान्–मनसि जातान स्थितान सर्वान कामान्–मनोऽभीष्टभोगमनोरथान, यदा प्रजहाति–अपुनर्भवत्वेन रूपेण जहाति–प्रत्यजति, आत्मन्येव–स्वात्मद्रव्ये, आत्मना–स्वभावरूपाऽऽऽत्मना, तुष्टः–प्रसन्नः, तदा स्थितप्रज्ञ उच्यते ॥ ६३ ॥ ६४ ॥

पुनरपि भगवद्गीतोक्तश्लोकत्रयी कथ्यते–

'दुःखेष्वनुद्विग्नमनाः, सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ६५ ॥
यः सर्वत्राऽनभिस्नेह–स्तत्तत् प्राप्य शुभाऽशुभम् ।
नाऽभिनन्दति न द्वेष्टि, तस्य प्रज्ञा प्रतिष्ठिता ॥ ६६ ॥
यदा संहरते चाऽयं, कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्य स्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६७ ॥

टी० दुःखेषु–कार्यकारणरूपदुःखेषूपस्थितेषु अनुद्विग्नं मनो यस्य सोऽनुद्विग्नमना अर्थाद् दुःखस्य कारणानि प्राप्य न दीनो, मनोऽपेक्ष्य, सुखेषु=कार्यकारणरूपेषु सुखेषु विगतस्पृहः=स्पृहारहितः, अर्थात् सुखसुखसाधनानि प्रति निःस्पृहः–अलीनमनाः, 'वीतरागभयक्रोधः'=रागेण भयेन, क्रोधेन शून्यः चित्त-

दोषरूपरागभयक्रोधरहितो मुनिः स्थितप्रज्ञ उच्यते ॥ ६५ ॥

'तत्तत्प्राप्य शुभाऽशुभम्'=इष्टाऽनिष्टवस्तुमात्रं प्राप्य यः सर्वत्र शुभाऽशुभाऽऽत्मके वस्तुन्यनभिस्नेहः-वीतराग उदासीनः समः सन् नाभिनन्दति=न रक्तो भवति, न द्वेष्टि=न द्विष्टो भवत्यतस्तस्य=समताऽलङ्कृतस्य प्रज्ञा, प्रतिष्ठिता=प्रतिष्ठा प्राप्ता, स्थिरता प्राप्ता कथ्यते ॥ ६६ ॥

'कूर्मोऽङ्गानीव सर्वशः' यथा कूर्मोऽङ्गान्युपाङ्गानि सर्वतः संहरते—सङ्कोचयति तथा चायं मुनिः, इन्द्रियविषयेभ्य इन्द्रियाणि संहरते—प्रत्याहरति स मुनिः स्थितप्रज्ञ उच्यते ॥६७॥

'शाङ्करभाष्यमत्र=दुःखेषु आध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सः अयम् अनुद्विग्नमनाः । सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य न अग्निः इव इन्धनाद्याधाने अनुवर्धते स विगतस्पृहः । वीतरागभयक्रोधो रागः च भयं च क्रोधः वीता विगता यस्मात्स वीतरागभयक्रोधः, स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदा उच्यते (२।५६) 'यो मुनिः सर्वत्र देहजीवितादिषु अपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाऽशुभं तत्तत् शुभं अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न रुष्यति अशुभं च प्राप्य न द्वेष्टि इत्यर्थः । तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥२।५७॥

'यदा संहरते सम्यग् उपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मः अङ्गानि इव सर्वशो यथा

कूर्मो भयात् स्वानि अङ्गानि उपसंहरति सर्वत एवं ज्ञाननिष्ठ इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते । तस्य प्रज्ञा प्रतिष्ठिता इति उक्तार्थवाक्यम् (२।५८)

**–सिद्धस्य हि स्वभावो यः सैव साधकयोग्यता–**

'शान्तो दान्तो भवेदीदृगाऽऽत्मारामतया स्थितः ।
सिद्धस्य हि स्वभावो यः, सैव साधकयोग्यता ॥६८॥

टी० एवं य आत्मा शान्तो भवेत्, दान्तो भवेत्, अनया रीत्या चाऽऽत्मारामतया स्थितो भवेत्, स एवाऽऽत्मा, धर्मध्यानध्याता भवितुं योग्योऽस्ति, यतोऽप्रमत्तमप्रमादिगुणस्थानस्थितस्य सिद्धयोगिनो यः स्वभावोऽस्ति स एवैतस्य साधकस्य योग्यता ( बीजरूपता ) ज्ञेयाऽर्थात्, सिद्धयोगिनि या गुणानां पूर्णता भवेत्, तेषामेव गुणानामंशानां–अंशरूपगुणानामस्तित्वरूपयोग्यता साधके सम्भावनीयेति ॥६८॥

**–शुक्लध्यानस्य को ध्याता ?–**

'ध्याताऽयमेव शुक्लस्या–प्रमत्तः पादयोर्द्वयोः ।
पूर्वविद् योग्ययोगी च, केवली परयोस्तयोः ॥६९॥

टी० यो धर्मध्यानस्य योग्यो ध्याता कथितः सोऽयमेव शुक्लध्यानस्य चतुर्षु पादेषु मध्ये पादयोर्द्वयोः पूर्वयोरप्रमत्त आत्मा ध्याताऽधिकारी भवेत्तदा स पूर्वधरो महात्मैव ज्ञेयः, शुक्लध्यानस्य तृतीयपादध्याता योगी केवली भवति, चतुर्थपादध्याताऽयोगी केवली भवतीति ॥६९॥

–नवमद्वारभूता धर्मध्यानिनामनुप्रेक्षाः–

'अनित्यत्वाद्यनुप्रेक्षा, ध्यानस्योपरमेऽपि हि ।
भावयेन्नित्यमभ्रान्तः, प्राणा ध्यानस्य ताः खलु ॥७०॥

टी० 'ध्यानस्योपरमे हि'–अस्माद् ध्यानयोगान्निवृत्तिः स्यात्तदा अभ्रान्तः सदाऽप्रमादनाक्रान्त-आत्मा, अनित्यत्वादिरूपा अनुप्रेक्षा भावना भावयेद्यतः 'ध्यानस्य ताः खलु प्राणाः'=भावना ध्यानस्य प्राणा उच्यन्तेः त्रुटितामपि ध्यानधारामनुसन्धातुं भावनाः प्रभवन्तीति ॥७०॥

–धर्मध्यानिनां लेश्या दशमद्वारभूताः—

'तीव्रादिभेदभाजः स्युर्लेश्यास्तिस्र इहोत्तराः ।
लिङ्गान्यत्राऽऽगमश्रद्धा विनयः सद्गुणस्तुतिः ॥७१॥

टी० 'तीव्रादिभेदभाजः स्युर्लेश्यास्तिस्र इहोत्तराः'=धर्मध्यानिनां मुनीनां परिणामाऽपेक्षया तीव्र-तीव्रतर-तीव्रतमप्रकारभिन्ना स्तेजःपद्मशुक्लाऽऽख्यास्तिस्रो लेश्या भवन्ति अत्र धर्मध्यानप्रसङ्गे धर्मध्यानि-

नामेकादश (११) द्वारभूतानि त्रीणि लिङ्गानि सन्ति तद्यथा (१) आगमश्रद्धा=सर्वज्ञप्रणीतागमप्ररूपित-द्रव्यषट्क—पञ्चास्तिकायनवतत्त्वादिसर्वतत्त्वपदार्थेषु निरुपमाऽप्रतिहतश्रद्धा० (२) सुदेवसुगुर्वादिपूज्यमात्रं प्रति अभ्युत्थानादिनाऽऽदरबहुमानादिकरणस्वभावो 'विनयः' (३) सद्गुणस्तुतिः=सुदेवादिपूज्यानां सद्-सम्यग् ( विद्यमान ) गुणानां स्तवनरूपा स्तुतिः एतानि त्रीणि धर्मध्यानिनां कार्यलिङ्गानि ज्ञेयानि, यस्मिन धर्मध्यानमस्ति तस्मिन लिङ्गत्रयं दृश्यते ॥७१॥

—द्वादशद्वारभूतं धर्मध्यानस्य फलं कथ्यते—

'शीलसंयमयुक्तस्य, ध्यायतो धर्म्यमुत्तमम् ।
स्वर्गप्राप्तिं फलं प्राहुः, प्रौढपुण्यानुबन्धिनीम् ॥७२॥

टी० शीलेन संयमेन च युक्तो महात्मैतादृशं धर्म्यध्यानं यो ध्यायति तस्य 'प्रौढपुण्याऽनुबन्धिनीं स्वर्गप्राप्तिं फलं प्राहुः'=अन्ततो गत्वा शिवसम्पत्कारकपुण्यानुबन्धिपुण्यजन्यस्वर्गप्राप्तिरूपं फलं कथयन्ति-महर्षयः ॥७२॥

—अथ शुक्लध्याननिरूपणम्—

'ध्यायेच्छुक्लमथ क्षान्ति-मृदुत्वार्जवमुक्तिभिः ।
छद्मस्थोऽणौ मनो धृत्वा, व्यपनीय मनो जिनः ॥७३॥

टी० श्रीमान् ग्रन्थकारः शुक्लध्याननामके विषये पूर्वोक्तद्वादशद्वाराणि निरूपयति तत्र द्वादशद्वारेषु पूर्वाणि चत्वारि द्वाराणि धर्मध्यानतुल्यान्येव तस्मात्तान्यकथयन् पञ्चमाद्यालम्बनादिद्वाराण्यवतारयति (५) पञ्चममालम्बनद्वारम्=जिनेन्द्राणां मते प्रधानभूतान् क्षमा-मार्दवार्जवनिर्लोभतादिगुणानालम्ब्य छद्मस्थो ध्याता शुक्लध्यानशिखरमारोहति, (६) षष्ठ क्रमाऽऽख्यं द्वारम्=छद्मस्थस्याऽऽत्मन पूर्वं मनस्तु त्रीणि भुवनानि विषयीकृत्याऽपि ततः क्रमतस्तन्मनसो विषयान् संक्षिपन् २ आत्मा, परमाणौ मन आनीय मुञ्चति, एव रीत्या शुक्लध्यानं ध्यायति, यदा जिनो–केवली मनोयोगं निरुद्ध्य शुक्ल ध्यानं ध्यायेत्, छद्मस्थस्य शुक्लध्यानं सप्तमादिगुणस्थानवर्तिनो भवेत्, यदा जिनस्य शुक्लध्यानं त्रयोदशगुणस्थानस्याऽन्तपर्यन्तम्, तथा चतुर्दशगुणस्थाने भवेत् ॥७३॥

— सप्तम ध्यातव्यद्वारं तथाऽष्टमं ध्यातृद्वारम्—

'सवितर्कं सविचारं, सपृथक्त्वं तदाऽऽदिमम् ।
नानानयाऽऽश्रितं तत्र, वितर्कः पूर्वगं श्रुतम् ॥७४॥
अर्थव्यञ्जनयोगानां, विचारोऽन्योऽन्यसङ्क्रमः ।
पृथक्त्वं द्रव्यपर्याय–गुणाऽन्तरगतिः पुनः ॥७५॥

त्रियोगयोगिनः साधो—र्वितर्काद्यन्वितं ह्यदः ।
ईषच्चलत्तरङ्गाऽब्धेः, क्षोभाऽभावदशानिभम् ॥७६॥

टी० शुक्लध्यानस्य चत्वारः पादा ध्यातव्यास्तेषां चतुर्णां पादानां नामानि यथा (१) सवितर्कं सविचारं सपृथक्त्वम्, (२) सवितर्कं सविचारमेकत्वम् (३) सूक्ष्मक्रियाऽनिवृत्ति, (४) समुच्छिन्नक्रियम-प्रतिपाति तत्र सवितर्कसविचार-सपृथक्त्वरूपप्रथमपादस्य वर्णनम्=तत्र वितर्कः=अनेकनयाऽऽश्रितं पूर्वाऽनुसारि श्रुतं वितर्क उच्यते, विचारः=‘अर्थव्यञ्जनयोगानामन्योऽन्यसङ्क्रमः’=अर्थतः शब्दे, शब्दतो द्रव्ये, मनोयोगतो वचनयोगे वा काययोगेऽथवा वचनयोगतो मनआदियोगे, एवं मिथो जायमानः सङ्क्रमो विचार उच्यते, पृथक्त्वमद्रव्यपर्यायगुणान्तरगतिः, पृथक्त्वमर्थाद् द्रव्यतो द्रव्यान्तरे गमनं, पर्यायतोऽथ पर्यायान्तरे गमनम्, गुणतो गुणान्तरे गमनम् पृथक्त्वमुच्यते, शुक्लध्यानस्य प्रथमे पादे वितर्कविचारपृथक्त्वरूपास्त्रयो विषया गोचरीक्रियन्तेऽतस्तद्ध्यानं सवितर्कं सविचारं सपृथक्त्वमुच्यते, मनोवचःकाययोगरूपयोगत्रयव्यापारवतो मुने र्वितर्कविचारपृथक्त्वाऽन्वितं हि ध्यानमिदं ( मन-इदमेकाग्रतायुतं ) ‘ईषच्चलत्तरङ्गाब्धेः क्षोभाऽभावदशानिभम्’=किञ्चित् किञ्चिच्चलत्तरङ्गवतोऽपांपतेर्या क्षोभशून्या दशा, तत्समानं ध्यानं वा मनो भवतीति ॥७४॥७५॥७६॥

—शुक्लध्यानस्य द्वितीयपादरूपस्य सवितर्कसविचारैकत्वस्य वर्णनम्—

'एकत्वेन वितर्केण, विचारेण च संयुतम् ।
निर्वातस्थप्रदीपाऽऽभं, द्वितीयं त्वेकपर्ययम् ॥७७॥

टी० अत्र वितर्कविचारौ पूर्ववद् भाव्यौ परन्तु द्रव्यपर्यायगुणाऽन्तरगतिरूपं पृथक्त्वं न, एकत्वेन संयुतं वितर्केण संयुतं, विचारेण संयुत ध्यानं सवितर्कं सविचारमेकत्वं, द्वितीयं शुक्लध्यानमेकपर्यायवत् सत , 'निर्वातस्थप्रदीपाऽऽभ'=पवनरहितस्थानस्थदीपकतुल्यं निश्चलं ज्ञेयमिति ॥७७॥

-शुक्लध्यानस्य तृतीयपादरूपं सूक्ष्मक्रियाऽनिवृत्ति ध्यानम्-

'सूक्ष्मक्रियाऽनिवृत्त्याख्यं, तृतीयं तु जिनस्य तत् ।
अर्द्धरुद्धाऽङ्गयोगस्य, रुद्धयोगद्वयस्य च ॥७८॥

टी० 'रुद्धयोगद्वयस्य'=रुद्धं सूक्ष्मवचनमनोयोगाऽऽत्मकयोगद्वय येन स तस्य, 'अर्द्धरुद्धाऽङ्गयोगस्य च'=सूक्ष्मबादरभेदद्वयवत्काययोगमध्यादर्द्धरूपकाययोगो रुद्धो येन सोऽर्द्धरुद्धाऽङ्गयोगस्तस्याऽर्द्धरुद्धाऽङ्गयोगस्य च जिनस्य, अर्थाद् यत्रोच्छ्वासादिरूपायाः सूक्ष्मकाययोगस्य क्रियाया अनिवृत्तिः ( सत्ता ) अस्ति, अतः सूक्ष्मक्रियाऽनिवृत्तिनामक ध्यानं तृतीयं त्रयोदशगुणस्थानस्याऽन्तिमाऽन्तर्मुहूर्तस्थस्य केवलिनो भगवतो भवतीति ॥७८॥

— शुक्लध्यानस्य चतुर्थपादरूपं समुच्छिन्नक्रियाऽप्रतिपातिध्यानम् —

'तुरीयं तु समुच्छिन्न-क्रियमप्रतिपाति तत् ।
शैलवन्निष्प्रकम्पस्य, शैलेश्यां विश्ववेदिनः ॥७९॥

टी० 'समुच्छिन्नक्रियम्=समुच्छिन्ना–निवृत्ता, उच्छ्वासादिरूपा सूक्ष्मकायिकक्रिया यस्माद् ध्यानात् तत् 'समुच्छिन्नक्रियम् अप्रतिपाति'=सिद्धावस्थाप्राप्तिपर्यन्तं प्रतिपतनाऽभावादप्रतिपाति, शुक्लध्यानस्य चतुर्थपादरूपं तद्ध्यानं शैलेश्यवस्थायां शैलवन्निष्प्रकम्पस्य विश्ववेदिनः–चतुर्दशगुणस्थानस्थस्याऽयोगिनः केवलिनो भगवतो भवतीति ॥७९॥

— प्रथमपादद्वयस्य चाऽन्तिमपादद्वयस्य किं फलम् ?—

'एतच्चतुर्विधं शुक्लध्यानमत्र द्वयोः फलम् ।
आद्ययोः सुरलोकाप्ति-रन्त्ययोस्तु महोदयः ॥८०॥

टी० चतुर्विधं=प्रकारचतुष्टयाऽवच्छिन्नमेतच्छुक्लध्यानमस्ति 'अत्र'=चतुर्विधशुक्लध्याने द्वयोराद्ययोः सवितर्कसविचारमपृथक्त्वमवितर्कमविचारैकत्वयोः, छद्मस्थस्य फलं सुरलोकाप्तिः–देवलोकप्राप्तिः, 'अन्त्ययोर्द्वयोस्तु'=सूक्ष्मक्रियाऽनिवृत्तिसमुच्छिन्नक्रियाऽप्रतिपातिनो द्वयोस्तु फलं महोदयः=निःश्रेयस प्राप्तिरिति ॥८०॥

-नवमद्वारभूता: शुक्लध्यानस्याऽनुप्रेक्षा:-

'आश्रवाऽपायसंसारा-नुभावभवसन्तती: ।
अर्थे विपरिणामं वाऽनुपश्येच्छुक्लविश्रमे ॥८१॥

टी० (१) आश्रवाऽपायमनुपश्येत्=मिथ्यात्वाद्याश्रवजन्यान अपायान् ( आत्महितरूपहानिमहाहानिरूपान ) अनुप्रेक्षेत, (२) संसारानुभावमनुपश्येत्=कर्मरूपस्य वा तज्जनितजन्मजरामरणरूपस्य संसारस्यानुभावं रसं प्रभावमनुप्रेक्षेत (३) भवसन्ततिमनुपश्येत्=भवस्याऽनुबन्धपरम्परां-उत्तरोत्तररूपजन्माऽऽदिप्रवाहं विचारयेत, (४) अर्थे विपरिणाममनुपश्येत्=इन्द्रियविषये, पुद्गलादिपदार्थेऽथवा स्त्रीपुत्रादिसंयोगादावर्थे विपरीत-विचित्रपरिणाममनुप्रेक्षेत, एतत्सर्वं शुक्लध्यानाद् विश्रामे प्राप्ते सति चिन्तनीयम् , एताश्चतस्रोऽनुप्रेक्षा:, शुक्लध्यानस्य प्रथमद्वितीयपादध्यानाद् विरमणाऽनन्तरं सम्भवन्ति, यत: शेषाऽन्तिमपादद्वयस्य ध्यानन्तु विरामं विनैव मुक्तिं प्रापयतीति ॥८१॥

-दशमद्वारभूता: शुक्लध्यानस्य लेश्या:-

'द्वयो: शुक्ला तृतीये च, लेश्या सा परमा मता ।
चतुर्थशुक्लभेदस्तु, लेश्याऽतीत: प्रकीर्तित: ॥८२॥

शुक्लध्यानस्य प्रथमपादद्वये शुक्ललेश्या वर्त्तते, तृतीयपादस्य ध्याने परमा शुक्ललेश्या विद्यते, चतुर्थपादस्य तु ध्यानं कुर्वन् महात्मा 'लेश्याऽतीतः' लेश्यातः परः कथ्यते ॥८२॥

– एकादशद्वारभूतानि शुक्लध्यानिनां चत्वारि लिङ्गानि कार्यरूपाणि –

'लिङ्गं निर्मलयोगस्य, शुक्लध्यानवतोऽवधः ।
असम्मोहो विवेकश्च, व्युत्सर्गश्चाऽभिधीयते ॥८३॥

टी० 'शुक्लध्यानवतो निर्मलयोगस्य'=शुक्लध्यानशालिनः परमपवित्रमनोवचःकाययोगस्य लिङ्गमुच्यते तद् यथा (१) अवधः (२) असम्मोहः (३) विवेकः (४) व्युत्सर्ग इत्येतेषां चतुर्णां लिङ्गानां विवेचनमग्रतो वक्ष्यमाणमस्ति ॥८३॥

–विविच्यन्ते कार्यलिङ्गानि शुक्लध्यानिनाम्–

'अवधादुपसर्गेभ्यः कम्पते न बिभेति च ।
असम्मोहान्न सूक्ष्माऽर्थे, मायास्वपि न मुह्यति ॥८४॥
विवेकात् सर्वसंयोगा-द्भिन्नमात्मानमीक्षते ।
देहोपकरणाऽसङ्गो, व्युत्सर्गाज्जायते मुनिः ॥८५॥

टी० (१) अवधाद्=अहिंसाऽऽत्मककार्यलिङ्गाद्, शुक्लध्यानी, देवादिकृतेभ्य उपसर्गेभ्यो न कम्पते, च न बिभेति, निष्प्रकम्पो निर्भयश्च भवतीति (२) असम्मोहात्=मिथ्यात्वादिसम्मोहाऽभावरूप-कार्यलिङ्गात् 'सूक्ष्माऽर्थे'=अतीन्द्रियगहननिगोदादिसूक्ष्माऽर्थे, देवादिकृतासु मायास्वपि 'न मुह्यति'= शुक्लध्यानी न मोहमाप्नोति० (३) विवेकात्=हेयोपादेयविवेचनजन्यहानोपादानरूपविवेकात्=बाह्याऽ-भ्यन्तररूपशरीरकर्मादिपुद्गलसंयोगरूपसंयोगाद्, भिन्नं-पृथग्रूपमात्मानं-स्वद्रव्यमीक्षते-पश्यति शुक्ल-ध्यानी० (४) व्युत्सर्गात्=विशेषत उत्सर्जनरूपत्यागात्, देहे चोपकरणेऽसङ्गतावान्-निरपेक्षतावान्, मुनिः शुक्लध्यानी जायते इति ॥८४॥८५॥

--द्वादशद्वारभूत शुक्लध्यानस्य फलम्--

'एतद्ध्यानफलं शुद्धं, मत्वा भगवदाज्ञया ।
यः कुर्यादेतदभ्यासं, सम्पूर्णाऽध्यात्मविद्भवेत् ॥८६॥

टी० 'भगवदाज्ञया'=जैनशासनाऽनुसारतः, एतस्य शुक्लध्यानस्य शुद्धं क्रमं-विधिं मत्वा-ज्ञात्वा श्रद्धाय वा, यः, एतस्य शुक्लध्यानस्याऽभ्यासं=पुनः पुनः प्रतिदिनकर्त्तव्यरूपमभ्यासं कुर्यात्, स शुक्लध्यानाऽभ्यासी, कलावपि संपूर्णतया-साङ्गोपाङ्गतयाऽध्यात्मविद् भवेदिति ॥८६॥

॥३१२॥

-इत्याचार्यश्रीमद् विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्-
विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां
ध्यानस्वरूपनामकः षोडशोऽधिकारः समाप्तः ॥६६३॥

-अथ ध्यानस्तुतिनामकः सप्तदशोऽधिकारः-

-ध्यानमेव भवनाशि भजध्वम्-

'यत्र गच्छति परं परिपाकं, पाकशासनपदं तृणकल्पम् ।
स्वप्रकाशसुखबोधमयं तत्, ध्यानमेव भवनाशि भजध्वम् ॥१॥

टी० 'यत्र परं परिपाकं गच्छति'=यदा ध्यानयोगः प्रकृष्टाऽवस्थारूपं परिपाकं प्राप्नोति तदा 'पाकशासनपदं तृणकल्पं' पुरन्दर-इन्द्रपदं तृणतुल्यमेवाऽवभासते स्वज्योतिर्मयं स्वानन्दमयं स्वबोधमयं तद्ध्यानमेव भो भव्या भवनाशित्वेन रूपेण भजध्वम्-सेवध्वम् ॥१॥

--ध्यानवानेव तृप्तः विषयरागं न प्राप्नोति--

'आतुरैरपि जडैरपि साक्षात्, सुत्यजा हि विषया न तु रागः ।
ध्यानवाँस्तु परमद्युतिदर्शी, तृप्तिमाप्य न तमृच्छति भूयः ॥२॥

॥३९३॥

टी० पारवश्येनातुरा अपि=मान्द्यमापन्ना अपि, जडाः-मूर्खत्वमापन्ना अपि 'साक्षात्'=प्रत्यक्षत इन्द्रियविषयान्-भौतिकबाह्यविभवादीन सुखेन प्रत्यजन्ति परन्तु विषयरागं त्यक्तुं नालंकर्मीणाः, ध्यानवांस्तु परमद्युतिदर्शी=परमात्मनः परमज्योतिर्द्रष्टा सन् परमां तृप्तिमात्मनि प्राप्य भूयः-पुनः, तं-विषयरागं न लभत इति ॥२

--या निशा सर्वभूतानां तस्यां जागर्ति संयमी—

'या निशा सकलभूतगणानां, सर्वतः सकलकर्मफलानाम् ।
यत्र जाग्रति च तेऽभिनिविष्टा, ध्यानिनो भवति तत्र सुषुप्तिः ॥३॥

टी० सकलप्राणिगणानां तत्त्वदृष्टिस्त्वन्धकारमयी भवति, तत एवं कथ्यते ते सकलभूतगणा तत्त्वदृष्टिरूपनिशायां निद्रायमाणा एव तिष्ठन्ति, परन्तु तस्यामेव तत्त्वदृष्टौ ध्यानी-संयतात्मा, जाग्रदस्ति, तदर्थे तु सा तत्त्वदृष्टि दिनमहोत्सवसमा विद्यते, येऽभिनिविष्टा यस्यां मिथ्यादृष्टौ संसारिणो जाग्रति-निर्निद्रा भवन्ति, तस्यां मिथ्यादृष्टौ ध्यानिनः-संयमिनो भवति सुषुप्तिः, तन्मिथ्यादृष्टितो ध्यानी पराङ्मुखः सन् सन्तिष्ठते, तत्र निद्रायमाण इवाऽऽस्त इति भावः ॥३॥

[ या निशा रात्रिः सर्वपदार्थानाम् अविवेककरी तमःस्वभावत्वात् किं तत् परमार्थतत्त्वम् स्थितप्रज्ञस्य विषयः । यथा नक्तंचराणां अहः एव सद् अन्येषां निशा भवति तद्वद् नक्तंचरस्थानीयानां अज्ञानां

सर्वभूतानां निशा इव निशा परमार्थतत्त्वम् अगोचरत्वाद् अतद्बुद्धीनाम् । तस्यां परमार्थतत्त्वलक्षणायाम् अज्ञाननिद्राया प्रबुद्धो जागर्ति संयमी—संयमवान जितेन्द्रियो योगी इत्यर्थः। यस्यां ग्राह्यग्राहकभेद-लक्षणायां अविद्यानिशायां प्रसुप्तानि एव भूतानि जाग्रति इति उच्यते, यस्यां निशायां प्रसुप्ता एव स्वप्नदृशः सा निशा अविद्यारूपत्वात , परमार्थतत्त्वं पश्यतो मुनेः अतः कर्माणि अविद्याऽवस्थायाम् एव चोद्यन्ते न विद्याऽवस्थायां । विद्यायां हि सत्यां उदिते सवितरि शार्वरम् इव तमः प्रणाशम् उपगच्छति अविद्या । भ. गी. शाङ्करभाष्यम् २।६९ ]

—सर्वकर्मफलानां सिद्धि ध्यानत एव भवति—

सम्प्लुतोदकमिवाम्बुजलानां, सर्वतःसकलकर्मफलानाम् ।
सिद्धिरस्ति खलु यत्र तदुच्चैः, ध्यानमेव भवनाशि भजध्वम् ॥४॥

टी० खलु=निश्चये, यत्र—यस्मिन ध्याने सति, 'सर्वतः सकलकर्मफलानां सिद्धिरस्ति'=समन्तात् सर्वक्रियाफलानां सिद्धिरस्ति 'सम्प्लुतोदकमिवाम्बुजलानां'=कूपे जलसिद्धिर्भूमौ वहमानोच्छलज्जल निर्झरणप्रभावतो भवति तथाऽत्रापि ध्यानप्रवाहत एव सर्वकर्मफलसिद्धिः । पाठान्तरेण 'ध्यानमेव परमार्थ-निदानम्'=तद् उच्चैर्ध्यानमेव परमपदस्य मूलकारणमिति ॥४॥

— सर्वथाऽऽत्मनि लीनो ध्यानवान् सर्वबाधाविहीनोऽस्ति—

'बाध्यते न हि कषायसमुत्थैः, मानसैर्न ततभूपनमद्भिः ।
अत्यनिष्टविषयैरपि दुःखै-र्ध्यानवान्निभृतमात्मनि लीनः ॥५॥

टी० ध्यानवान् महात्मा निभृतमात्मनि लीनः, 'कषायसमुत्थैर्मानसैर्नहि बाध्यते' क्रोधादि कषायजन्यैर्मनोविकारैर्न बाध्यते, 'ततभूपनमद्भिः'=महद्भि विंशालै भूपैर्नमद्भिर्न बाध्यते, 'अत्यनिष्टविषयैरपि दुःखैः=बलवदनिष्टानुबन्धित्वेन अत्यन्ताऽनिष्टविषययोगजन्यैस्तीव्रदुःखैरपि न बाध्यते इति ॥५॥

— शिवशर्मगरिष्ठं ध्यानमस्तु—

स्पष्टदृष्टसुखसम्भृतमिष्टं, ध्यानमस्तु शिवशर्मगरिष्ठम ।
नास्तिकस्तु निहतो यदि न स्यादेवमादिनयवाङ्मयदण्डात् ॥६॥

टी० ध्यानपरमबलेन 'स्पष्टं प्रत्यक्ष' मिति प्रत्यक्षतयाऽनुभूतसुखरूपानन्देन सम्यग् भृतं ध्यानं, पुनः की० ध्या ? शिवशर्मगरिष्ठं'=अंशतो मोक्षसुखाऽनुभवाऽपेक्षया गुरुतरं ध्यानं, पु० की० ध्या० ? 'इष्टं'=परमेच्छाविषयमस्तु—पूर्णप्रेमास्पदमस्तु 'एवमादिनयवाङ्मयदण्डात्'=इत्यादिनयगर्भितवाणीमय—शास्त्रदण्डात्, यदि नास्तिकस्तु निहतो न स्यान्न भवेदात्मनिश्चयी, अर्थाद् ध्यानयोगप्रभावतः स्व-

॥३१६॥

संवेदनात्मकप्रत्यक्षप्रमाणोपलभ्यात्मादिपदार्थोपलब्धित आत्माऽऽनन्दोऽमर्यादो भवति-पूर्वोक्तदण्डान्निहतो नास्तिकोऽपि ध्यानबलादास्तिको भवतीति ॥६॥

**परमात्मप्रकाशरहस्य ध्यानिनां भाति—**

यत्र नार्कविधुतारकदीप-ज्योतिषां प्रसरतां नाऽवकाशः ।
ध्यानभिन्नतमसामुदितात्मज्योतिषां तदपि भाति रहस्यम् ॥७॥

टीका. यत्र=परमात्मज्योतिषि, प्रसरतां—चलतां सूर्यचन्द्रतारकदीपकज्योतिषां नाऽवकाशः, 'ध्यानभिन्नतमसामुदिताऽऽत्मज्योतिषां'=ध्यानेन भिन्नं-हतमाऽत्माज्ञानरूपं तमो येषां, तेषां ध्यानभिन्नतमसां, उदितं आत्मनो ज्ञानरूपं ज्योतिर्येषां, तेषां-उदितात्मज्योतिषां तद् रहस्यं भाती'ति=तत् परमात्मज्योतिषां रहस्यं भासते इति ॥७॥

**— ध्यानमित्र चिरविरहितां प्रशमरतिं प्रेयसीं योजयति —**

'योजयत्यमितकालवियुक्तां, प्रेयसीं शमरति त्वरितं यत् ।
ध्यानमित्रमिदमेव मतं नः, किं परै र्जगति कृत्रिममित्रैः ॥८॥



टी० नः—अस्माकं, इदं—प्रत्यक्षं ध्याननामकं मित्रमेव मतमिष्टमिच्छाविषयभूतं जगति—लोके

क्रिमलं कृत्रिममित्रैः परैः यद् यतोऽ'मितकालवियुक्तां'=अनन्तकालतो विरहिणीं शमरतिनामिकां प्रेयसीं-प्रियतमां त्वरितं-विना विलम्बेन योजयत्यात्मना सह ध्यानमित्रमिति ॥८॥

-ध्याननामके धाम्नि लभते सुखमात्मा-

'वारितस्मरबलातपचारे, शीलशीतलसुगन्धिनिवेशे ।
उच्छ्रिते प्रशमतल्पनिविष्टो, ध्यानधाम्नि लभते सुखमात्मा ॥९॥

टी० ध्यानरूपगेहे लभते सुखमात्मा, की. ध्या. धाम्नि ? 'वारितस्मरबलातपचारे'=वारितः स्मरबल-कामबलरूपातपस्य चारो-गतिर्यस्मिंस्तत्र, पु. की.ध्या०धा. ? शीलशीतलसुगन्धिनिवेशे=शीलमेव शीतलसुगन्धि वस्तु वर्त्तते तस्य निवेशो-रचना यस्मिंस्तत्र. पु० की०ध्या०धा० ? 'उच्छ्रिते' एकाग्रताऽपेक्षया, कीदृश आत्मा ? 'प्रशमतल्पनिविष्टः' उपशमनामकमहाशय्यायां निविष्टः-स्थितः, अर्थात् तादृशविशेषणविशिष्टे ध्यानधाम्नि लभते सुखमात्मेति ॥९॥

-ध्यानधाम्नि स्फुटमात्मन आहूतपूतपरमाऽतिथिपूजा भवति--

'शीलविष्टरदमोदकपाद्यप्रातिभार्घ्यसमतामधुपर्कैः ।
ध्यानधाम्नि भवति स्फुटमात्माहूतपूतपरमाऽतिथिपूजा ॥१०॥

टी० शीलनामकसिंहासनेन, दम—इन्द्रियदमननामकोदकरूपपाद्येनाऽर्थात् पादप्रक्षालनजलेन, केवलज्ञानाध्मतनवर्तिशुद्धिप्रकर्षप्राप्तमतिज्ञानस्वरूपप्रातिभनामकार्घार्थजलरूपार्घ्येण समतानामकदध्यादिमिश्रितमधुरूपमधुपर्केणाऽर्थाच्छीलविष्टरदमोदकपाद्यप्रातिभार्घ्यममतामधुपर्कैः, आत्माऽभिधानो य आहूतः—आमन्त्रितश्च पूतः—पवित्रोऽतिथिविशेषोऽस्ति, तस्य पूजा, ध्यानधाम्नि स्फुटं भवतीति ॥१०॥

– आत्मपरमात्मनोरभेदकारको ध्याननामकः सन्धिदूतः –

'आत्मनो हि परमाऽऽत्मनि योऽभूद्, भेदबुद्धिकृत एव भेदः ।
ध्यानसन्धिकृदमुं व्यपनीय, द्रागभेदमनयोर्वितनोति ॥११॥

टी० हीति निश्चये, आत्मनो यः परमाऽऽत्मनि भेदज्ञानेन कृत एव विवादो योऽभूत्, परन्तु ध्याननामकसन्धिकारः सन्धिदूतः, 'अमुं'—भेदबुद्धिकृतमेव विवादं व्यपनीय-दूरीकृत्य द्राग्, अनयोरात्मपरमात्मनोरभेदं—भेदाभावमेकत्वं, वितनोति—करोत्येवेति ॥११॥

–मृत्युञ्जयामृतं ध्यान एवास्ति–

'क्वाऽमृतं विषभृते फणिलोके, क्व क्षयित्वयपि विधौ त्रिदिवे वा ।
क्वाऽप्सरोरतिमतां त्रिदशानां, ध्यान एव तदिदं बुधपेयम् ॥१२॥

टी० (१) 'विषभृते फणिलोके क्वाऽमृतं ?' विषेण भृते नागलोके कुतोऽमृतं ? यतो विषामृतयोरेकत्र स्थिति विरुद्धेति नामृतसम्भवोऽपि० (२) 'क्व क्षयिण्यपि विधौ'=क्षयशीलेऽपि चन्द्रे कुतोऽमृत ? सिताऽसितपक्षयोः क्रमशः क्षयभाजि चन्द्रमसि सुधालेशसम्भवोऽपि न यतोऽमृतत्वक्षययोर्विरोधात् (३) 'अप्सरोरतिमतां त्रिदशानां वा क्षयिणि त्रिदिवे'=अप्सरोभी रतिं–क्रीडां कुर्वतां त्रिदशानां तृतीयदशाविशिष्टानां त्रिदिवे–स्वर्गे क्षयशीले कुतोऽमृतत्वमजराऽमरत्वं सम्भवेत् , यदि त्रिदिवेऽमृतं स्यात्तदा स्ववधूभिः सह रतिकरणाऽनन्तरं त्रिदशानामतृप्ति र्न स्यात्ततोऽमृतं कुत्राऽस्ति ? इति प्रश्नस्य प्रत्युत्तरं ग्रन्थकारः करोति यथा 'ध्यान एव तदिदं बुधपेयम्' अर्थात् योगिनामेकाग्रतासहितज्ञानरूपध्यानवतां परमप्रियं मादकपानमिव ध्यानरूपाऽमृतपानमस्ति यतः, तत्पानाऽनन्तरं सम्यग् ध्यानिनो मृत्युं जयन्त्येवेति ॥१२॥

– ध्यानजन्यनिश्चलतायामपूर्वमधुररसाऽऽस्वादनम् –

'गोस्तनीषु न सितासु सुधायां नाऽपि नाऽपि वनिताधरबिम्बे ।
तं रसं कमपि वेत्ति मनस्वी, ध्यानसम्भवधृतौ प्रथते यः ॥१३॥

टी० 'ध्यानसम्भवधृतौ'=एकाग्रतापूर्वकज्ञानरूपध्यानजन्यनिश्चलतानामकधृतौ योऽनुपमो रसः प्रथते–विस्तारं प्राप्नोति, तं–विशिष्टं, कमपि–लोकोत्तरं रसं मनस्वी प्रशस्तमनोजन्यशुभध्यानी, वेत्ति–

जानाति नान्यः, तादृशोऽपूर्वमधुररसो न गोस्तनीषु-द्राक्षासु, नापि सितासु-शर्करासु, नाऽपि सुधायां-अमृते, नापि वनिताऽधरबिम्बे सम्भवतीति ॥१३॥

– ध्यानस्तुतिनामकाऽधिकारस्योपसंहारः –

'इत्यवेत्य मनसा परिपक्वध्यानसम्भवफले गरिमाणम् ।
तत्र यस्य रतिरेनमुपैति, प्रौढधामभृतमाशु यशःश्रीः ॥१४॥

टी० इत्येवंरीत्या पूर्वोक्तं 'परिपक्वध्यानसम्भवफले'=परिपाकविशिष्टध्यानजन्यफलविषयकं गरिमाणं-महत्त्वं, मनसा-हृदयेन, अवेत्य-ज्ञात्वा, तत्र=महिमशालिनि ध्याने, यस्य जनस्य, रतिः-रागो भवति, एनं-ध्यानविषयकरागवन्तमिमं जनं, 'प्रौढधामभृतं'=विशालतेजोधारिणमाशु यशः श्रीः=कीर्तिलक्ष्मीः, उपैति=समीपं यातीति० ॥१४॥

( रथोद्धताच्छन्दोऽत्र 'रनरलगारथोद्धता' छन्दोऽनुशासने)

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करेण सूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाऽऽख्यायां टीकायां ध्यानस्तुतिनामकः सप्तदशोऽधिकारः समाप्तः ॥६७॥

– आत्मनिश्चयनामकोऽष्टादशोऽधिकारः –

### – आत्मज्ञानं च मोक्षदम् –

'आत्मज्ञानफलं ध्यान–मात्मज्ञानं च मुक्तिदम् ।
आत्मज्ञानाय तन्नित्यं, यत्नः कार्यो महात्मना ॥१॥

टी० ननु किमात्मा, ज्ञानप्रभृतितो भिन्नोऽथवाऽभिन्नोऽस्ति ? अजीवादितोऽप्यात्मा, किं भिन्नो वाऽभिन्नोऽस्ति ? इति चेद् व्यवहारनयमतेनाऽऽत्मा, ज्ञानादितो भिन्नोऽस्ति, शुद्धनिश्चयनयमतेनाऽऽत्मा, ज्ञानादिना सहाऽभिन्नोऽस्ति, अजीवादितो भिन्नोऽस्तीति, अन्यदपि कियज्ज्ञातव्यमत्रोल्लिख्यते (१) द्रव्यार्थिकनयं मन्यमानेन शुद्धनिश्चयनयेनाऽऽत्मा, पर्यायमयोऽस्ति, सुखमयोऽस्ति, कर्त्ता च भोक्ता नास्ति इति इति स्वीक्रियते. (२) पर्यायार्थिक–नय मन्यमानेन चाशुद्धनिश्चयनयेनात्मा, पर्यायवानस्ति, रागादिपर्यायतः सुखादिमानस्ति । कर्त्ता च भोक्ताऽस्तीति स्वीक्रियते ।

(३) अनुपचरितव्यवहारनयमतेनाऽऽत्मा, कर्ममयोऽस्ति, कर्मतः सुखदुःखवानस्ति, पुण्यादिकर्मणः कर्त्ता च तत्फलभोक्ताऽस्तीति (४) उपचरितव्यवहारनयमतेनाऽऽत्मा, देहमयोऽस्ति, शरीरधनादितः सुखदुःखवानस्ति, शरीरादेः कर्त्ता च भोक्ताऽस्तीति किञ्चिज्ज्ञातव्यं विज्ञाप्य श्लोकार्थोऽधुना कथ्यते

टी० 'आत्मज्ञानफल ध्यानम्'=आत्मज्ञानं फलं यस्य तदात्मज्ञानफलं ध्यानमर्थात् प्राक्तनाऽधिकार-कथितधर्म्यशुक्लध्यानत आत्मज्ञानरूपं फलं प्राप्यते ध्यानं विनाऽऽत्मज्ञानं न भवति आत्मज्ञानरूपं

कार्यं प्रति धर्म्यशुक्लध्यानं कारणं भवति, तथाचाऽऽत्मज्ञानं मुक्तिदम्'=कृत्स्नकर्मक्षयजन्यस्वस्वरूपाऽवस्थानरूपां मुक्तिं ददातीति मुक्तिदम्, अर्थादात्मज्ञानेन मुक्तिः प्राप्यते, तत्-तस्मात् कारणात् मुमुक्षुणा महात्मना आत्मज्ञानाय-आत्मतत्त्वसम्बन्धिज्ञानस्य हेतवे, नित्यं-नैरन्तर्येण यत्नः-वीर्योल्लासपूर्वकः प्रकृष्टो यत्नः कार्य-कर्त्तव्य इति ॥१॥

– य आत्मानं जानाति तस्य ज्ञातव्यं नाऽन्यदवशिष्यते –

'ज्ञाते ह्यात्मनि नो भूयो, ज्ञातव्यमवशिष्यते ।
अज्ञाते पुनरेतस्मिन्, ज्ञानमन्यन्निरर्थकम् ॥२॥

टी-येनाऽऽत्मा ज्ञातः सर्वाऽऽत्मना तेन सर्वं ज्ञातमन्यत् किमपि ज्ञातव्यं नाऽवशिष्टमस्ति, पुनरतस्मिन्नात्मन्यज्ञाते सर्वमन्यज्ज्ञातमप्यज्ञातमिवानिष्टकारकत्वात् स्वपूर्णकार्याऽसाधकम् ॥२॥

– नवतत्त्वविषयकज्ञानमपि सम्पूर्णाऽऽत्मज्ञानाय एव –

'नवानामपि तत्त्वानां ज्ञानमात्मप्रसिद्धये ।
येनाऽजीवादयो भावाः, स्वभेदप्रतियोगिनः ॥३॥

टी० नवसङ्ख्याकतत्त्वानामपि ज्ञानमात्मप्रसिद्धये-आत्मनः प्रकर्षेण-सर्वतः सिद्धय एव, यत

एकात्मतत्त्वज्ञप्तये जीवस्य भेदवन्तो—यत्र जीवत्वं नास्ति तानि सर्वाण्यजीवादिरूपाणि तत्त्वानि बोद्धव्यानि, जीवोऽजीवादिरूपेतरेभ्यो भिद्यते, ज्ञानादिचैतन्यवत्त्वादिति समामत आत्मानं सर्वात्मना ज्ञातुमजीवादितत्त्वविषयकं ज्ञानमावश्यकमजीवादीनज्ञात्वा जीवस्य पूर्णं स्वरूपमज्ञेयं स्यादेव, 'घटो न पट इति वज्जीवो नाजीवादिरित्यजीवादिभ्य इतरेभ्यो भिद्यते, अजीवादिभेदवान् जीवोऽस्ति, जीवेऽजीवादे र्भेदोऽस्ति, तस्माद् भेदस्य प्रतियोगिनः (यस्याभावः स प्रतियोगी) अजीवादयोऽभवन् , स्वपदेनाऽजीवादयो ग्राह्याः, तेषां भेदस्य (जीवो नाजीवादय इति भेदस्य) प्रतियोगिनोऽजीवादयो जाताः, अर्थात् , स्वभेदप्रतियोगित्वेन रूपेणाऽजीवादयो भावा वर्त्तन्तेऽतोऽजीवादिभेदज्ञानपूर्वकमाऽऽत्मज्ञानं कर्त्तव्यमतो नवानामपि तत्त्वानां ज्ञानमात्मप्रसिद्धये इति वाक्यं व्यवस्थितं सञ्जातमेवेति ॥३॥

– आत्मपरभेदं तु कश्चन-विरलो वेत्ति –

'श्रुतो ह्यात्मपराऽभेदोऽनुभूतः संस्तुतोऽपि वा ।
निसर्गादुपदेशाद्वा, वेत्ति भेदं तु कश्चन ॥४॥

टी० हीति किल, आत्मनश्च परस्य–देहादिपदार्थस्य अभेदः=आत्मपराऽभेदः, भूतकालाऽवच्छेदेन श्रुतः–श्रवणविषयीकृतः, अनुभूतः=अनुभवविषयीकृतः, संस्तुतो वा=चिरपरिचितो वा, परन्तु 'आत्मपरविषयकभेदं'=आत्मनो देहादिः परो–भिन्नोऽस्ति, देहादिरूपपरत आत्मा,भिन्नोऽस्तीति भेदं, 'निसर्गादुपदेशाद्वा'=स्वभावतोऽथवा गुर्वादिजनोपदेशात् , 'कश्चन'=कोऽपि विरल आत्मा 'वेत्ति'=जानाति नान्य इति ॥४॥

– भेदनयतश्चाभेदनयत आत्मज्ञानं हितावहम्—

'तदेकत्वपृथक्त्वाभ्यामात्मज्ञानं हितावहम् ।
वृथैवाऽभिनिविष्टाना-मन्यथा–धी विडम्बना ॥५॥

टी० तत्=तस्मात्कारणात्, एकत्वपृथक्त्वाभ्याम्'=भेदाभेदाभ्यां भेदप्रधाननयतोऽभेदप्रधाननयतश्चा'त्मज्ञानं'=आत्मस्वरूपाऽवच्छिन्नाऽऽत्मज्ञानं 'हितावहं'=हितप्रदं कल्याणकार्येव ज्ञेयम्,

अन्यथा=भेदाऽभेदनयपूर्वकमात्मज्ञानं न स्यात्तदा 'वृथैवाऽभिनिविष्टानां' मुधैवैकान्तवादकदाग्रहगृहीता धी' ज्ञानं, विडम्बना–कष्टरूपैवेति

अत्रेदम्बोध्यमेषोऽखिलोऽधिकारः प्रायो निश्चयनयदृष्ट्याऽऽत्मस्वरूपनिश्चयविषयकोऽस्ति, व्यवहारनयस्त्वात्मानं, स्वज्ञानादिगुणेभ्यश्च नारकादिपर्यायेभ्यो भिन्नं मन्यते, एतावन्मात्रमपि न परन्तु सर्वाऽत्मसु प्रत्येक परस्परं भेदमपि मन्यते, व्यवहारनयतो भिन्नं कथयति, निश्चयस्तथाहि–(१) आत्मा, ज्ञानादिपर्यायेभ्यो भिन्नो नास्ति, गुणगुणिनोरभेदाद्, ज्ञानाऽऽत्मनोरैक्यम् (२) एक आत्माऽस्त, अन्याऽऽत्मभ्यो भिन्नो नास्ति यतः स्वरूपं चैतन्यपरसामान्यमेकमस्ति०

| व्यवहारनयमतम् | निश्चयनयमतम् |
| --- | --- |
| (१) आत्मा, ज्ञानादिभ्यो भिन्नोऽस्ति | [१] आत्मा, ज्ञानादिभ्योऽभिन्नोऽस्ति, |
| (२) आत्मा, अन्याऽऽत्मभ्यो भिन्नोऽस्ति | [२] आत्मा, अन्यात्मभ्योऽभिन्नोऽस्ति |

| [३] आत्मा, देहकर्माऽजीवपुण्यपापा श्रवसंवरादिभ्योऽभिन्नोऽस्ति | [३] आत्मा, देहकर्माजीवपुण्यपापाश्रव-संवरादिभ्यो भिन्नोऽस्ति |
|---|---|

–ज्ञानादिभ्य आत्माऽभिन्नः–

'एक एव हि तत्राऽऽत्मा, स्वभावसमवस्थितः ।
ज्ञानदर्शनचारित्र-लक्षणः प्रतिपादितः ॥६॥

टी० हीति निश्चये, तत्राऽऽत्मनिश्चयाऽधिकारे, निश्चयनयापेक्षयाऽऽत्मा त्वेक एव स्वभावे स्थिरीभूतः, ज्ञान-दर्शनचारित्ररूपलक्षणसम्पन्नः (अत्राऽसाधारणधर्मो हि लक्षणम्) परमर्षिभिः प्रतिपादितोऽस्ति ॥६॥

–ज्ञानदर्शनचारित्ररूपलक्षणानां न भेद आत्मनः–

'प्रभानैर्मल्यशक्तीनां, यथा रत्नान्न भिन्नता ।
ज्ञानदर्शनचारित्र-लक्षणानां तथाऽऽत्मनः ॥७॥

टी० यथा रत्नात्=मणितः, स्वभूतरत्नस्य प्रभायाः=कान्तिरूपायाः, नैर्मल्यस्य–निर्मलतायाश्च ज्वरहरणादिरूपाणां शक्तीनां भिन्नता–भेदो न, तथा ज्ञानरूपलक्षणस्य, दर्शनरूपलक्षणस्य, चारित्ररूप-

लक्षणस्यात्मनः -जीवान्न भेदोऽपि त्वभेदः, यतो लक्षणलक्षणवतोर्धर्मधर्मिणोरभेदात् ॥७॥

–व्यवहार आत्मलक्षणयो र्भेदो मन्यते–

आत्मनो लक्षणानां च, व्यवहारो हि भिन्नताम् ।
षष्ठ्यादिव्यपदेशेन, मन्यते न तु निश्चयः ॥८॥

टी० हीति किल, आत्मनो लक्षणानां च भिन्नतां, 'षष्ठ्यादिव्यपदेशेन'=भेददर्शकषष्ठीविभक्तिप्रयोगेण, व्यवहारनयो मन्यते यथा मम गृहम्, अत्राऽऽत्मगृहयोर्भेद इवाऽऽत्मलक्षणयो र्भेदः, परन्तु शुद्धनिश्चयनयस्त्वात्मलक्षणयोरभेदं मन्यते, व्यवहारस्तु जीवस्य ज्ञानं, जीवस्य दर्शनं चारित्रं च व्यवहरति, निश्चयनयस्तु आत्मैव ज्ञानं आत्मैव दर्शनं आत्मैव चारित्रमिति ब्रूते ॥८॥

–आत्मतद्गुणयो र्भेदो न तात्त्विकः ।

'घटस्य रूप मित्यत्र' यथा भेदो विकल्पजः ।
आत्मनश्च गुणानां च, तथा भेदो न तात्त्विकः ॥९॥

टी० यथा व्यवहारेण कथ्यते यद् 'घटस्य रूपमित्यत्र प्रयोगे षष्ठीविभक्तितो यो घटरूपयोर्मध्ये भेदः सूचितः, विकल्पजन्योऽथवा बुद्धिजन्योऽस्ति, तथाऽऽत्मनश्च गुणानां भेदो विकल्प-मनोजनितो-

ऽस्ति न तात्त्विकः, यतः यथा घटरूपयोरभेदोऽस्ति, तथाऽऽत्मगुणयोरभेदोऽस्ति शुद्धनिश्चयस्त्वतात्त्विकं न मन्यते ॥९॥

–पद्धतिभेदेन निश्चयव्यवहाराभ्यामात्मस्वरूपानुभवदर्शनम्–

'शुद्धं यदाऽऽत्मनो रूपं, निश्चयेनाऽऽनुभूयते ।
व्यवहारो भिदाद्वारा–नुभावयति तत्परम् ॥१०॥

टी० निश्चयनयेन, यद्रूपमात्मनः शुद्धमभेदेनाऽनुभूयते, तदेव शुद्धज्ञानादिमयं स्वरूपं, व्यवहारनयो भेदद्वारा, परं=भिन्न शुद्धज्ञानादिस्वरूपमस्तीत्यनुभवे कारणं भवतीति, आत्मा, ज्ञानादिमयोऽस्तीति निश्चयो मन्यते, आत्मा, ज्ञानादिमानस्तीति व्यवहारो मन्यते इति ॥१०॥

–गुणानां स्वरूपं स्वाऽऽत्मनो न पृथक्–

'वस्तुतस्तु गुणाना तद्–रूपं न स्वात्मनः पृथक् ।
आत्मा स्यादन्यथाऽनात्मा, ज्ञानाद्यपि जडे भवेत् ॥११॥

टी० वस्तुतस्तु स्वरूपभूता गुणा अथवा गुणानां स्वस्वरूपं स्वाऽऽत्मनः–स्वभूताऽऽत्मद्रव्यतो न पृथग्-भिन्नम्, अन्यथा=यद्यात्मनः सर्वथा स्वज्ञानादिगुणा भिन्नाःस्युस्तदात्मा, ज्ञानादिगुणशून्यत्व

माप्नुवन् अनात्मा स्यात्=घटादिवज्जडो भवेच्च ज्ञानाऽऽदयोऽपि, आत्मरूपाधारतः पृथग्भूताः सन्तो जडा अथवा जडाश्रया भवेयुः, जडं सचेतनं स्यात्, सचेतनो जडो भवेदिति दुर्निवारापत्तिः स्यात् ॥११॥

-आत्मनःसर्वाऽऽत्मभिः स हैकत्वम्-

चैतन्यपरसामान्यात्, सर्वेषामेकताऽऽत्मनाम् ।
निश्चिता, कर्मजनितो, भेदः पुनरुपप्लवः ॥१२॥

टी० यथाऽऽत्मा, ज्ञानादिपर्यायैरभिन्नोऽस्ति तथाऽऽत्मा पराऽऽत्मभिः सर्वैःसहाऽपि चैतन्यरूपपरसामान्यापेक्षया, (शुद्धसंग्रहनयाऽपेक्षया) अभिन्नोऽस्त्येव, तत्तत्कर्महेतुतः सर्वात्मरूपैकात्मनि भिन्न २ आत्मा यो मन्यमानोऽस्ति, तन्मन्तव्यं तु व्यवहारनयाऽऽपादिता केवला भ्रान्तिरेवाऽस्ति, अज्ञानजृम्भितनाटकमिवेति ॥१२॥

-व्यवहारनयाभिप्रेतमात्मनां नानात्वम्-

'मन्यते व्यवहारस्तु, भूतग्रामादिभेदतः ।
जन्मादेश्च व्यवस्थातो, मिथो नानात्वमात्मनाम् ॥१३॥

टी० व्यवहारनयस्तु 'भूतग्रामादिभेदतः'=एकेन्द्रियादिसमूहभेदेन जीवानां चतुर्दशभेदत्वं, गति-

चतुष्टयकायषट्केन्द्रियपञ्चकभेदेन जीवानां पञ्चदश-भेदत्वम् , च, जन्ममरणादिव्यवस्था (विविधाऽवस्थां) कृत्वाऽऽत्मनां मिथो नानात्वमनन्तत्वं मन्यते ॥१३॥

-नामकर्मकृतिजो भूतग्रामादिभेदो न तु स्वभावः-

'न चैतन्निश्चये युक्तं, भूतग्रामो यतोऽखिलः ।
नामकर्मप्रकृतिजः, स्वभावो नाऽऽत्मनः पुनः ॥१४॥

टी० निश्चयनयो व्यवहारमतं न मन्यतेऽतस्तस्यैवं कथनमस्ति यत्-भूतग्रामादीनां भेदत एकाऽऽत्मनोऽनन्तभेदाः पातितास्ते भूतग्रामादयस्तु नामकर्मप्रकृतिभिर्जाताः, कर्मस्वभाव एषः, आत्मन एष स्वभाव एव नास्ति, तस्मात् परस्वभावत आत्मनि कश्चिद् भेदः कथं पात्येत ततः, शुद्धात्मा त्वेक एवेति ॥१४॥

-जन्मादिकोऽपि कर्मणां हि नियतः परिणामः-

'जन्मादिकोऽपि नियतः, परिणामो हि कर्मणाम् ।
न च कर्मकृतो भेदः, स्यादात्मन्यविकारिणि ॥१५॥

टी० किञ्च जन्ममरणादिहेतुना, एकस्मिन्नात्मनि नानाभेदाः पातितास्तेऽपि न वास्तविकाः, यतस्ते जन्मादयोऽपि, आयुरादिकर्मणां परिणामः-विपाकः, एते सर्वे कर्मणां भेदाः सन्तु, परन्तु तत्तत्कर्मबलेन कश्चिद् विकारो निर्विकारिण्यात्मनि भवितुं न शक्यस्तस्मादात्मैक एव ॥१५॥

—कर्मकृतविकृतिमात्मन्यारोप्य ज्ञानभ्रष्टा भ्रमन्ति संसारे—

'आरोप्य केवलं कर्मकृतां विकृतिमात्मनि ।
भ्रमन्ति भ्रष्टविज्ञाना भीमे संसारसागरे ॥१६॥

टी० आयुरादिकर्मकृतां जन्मादिविकृतिं विकारविरहिते आत्मनि केवलमारोप्य—विकल्प्य, विशिष्टज्ञानाद्भ्रष्टाः, विकाराभाववत्यात्मनि विकारविकल्पकल्पनाऽप्यन्यायया, अतो भीमे—भयङ्करे चतुर्गतिरूपे वा जन्मादिरूपे वा संसारसागरे भ्रमन्ति भ्रमात्मकज्ञानजकर्म महापराधि प्राणिनः ॥१६॥

—अज्ञः कर्मकृतभेदमात्मन्येवाऽभिमन्यते—

'उपाधिभेदजं भेदं वेत्त्यज्ञः स्फटिके यथा ।
तथा कर्मकृतं भेद-मात्मन्येवाऽभिमन्यते ॥१७॥

टी० कोऽप्यज्ञो जनो रक्तपीताऽऽदिवर्णवतां पाटलचम्पकादिपुष्पाणां बहुनिकटत्वसम्बन्धवशाद् धवले स्फटिके रक्तत्वपीतत्वादिवर्णं विकल्पयति, एवमत्रापि स्वभावतो निर्मलताजनितश्वेतवर्ण एव परन्तु पुष्पोपाधिविशेषतो दृश्यमानरक्तत्वादिवर्णं कल्पते, एवरीत्या कर्मणा कृतं भेदमज्ञो जन आत्मन्येव कल्पयितुं—मोहमूढः कर्त्तुं त्वरते, तथापि कर्माणि, भिन्नानि सन्ति, ततः किमात्मा भिन्नः स्यात् ? तत आत्मैक

एव, अतः किं नारकात्मा, देवाऽऽत्मा, पुरुषात्मा, स्त्रीरूपात्मा, देवदत्तात्मा, यज्ञदत्तात्मा इत्यादिका अनेके भेदाः पातयितुं शक्याः ? अर्थाद् कर्मकृतभेद आत्मभेदं कर्त्तुं न प्रत्यल इति ॥१७॥

**–उपाधिकर्मजो व्यवहारो नास्त्यकर्मणि–**

'उपाधिकर्मजो नास्ति, व्यवहारस्त्वकर्मणः ।
इत्यागमवचो लुप्त-मात्मवैरूप्यवादिना ॥१८॥

टी० 'आत्मवैरूप्यवादिना'=य आत्मन्यनेकरूपतां मन्यते, तेनात्मवैरूप्यवादिना, आचारांगसूत्र-रूपागमवचो लुप्तम् यत् 'उद्देशो पासगस्स नत्थि' अर्थाद् ; अकर्मण आत्मन उपरि उपाधिरूपकर्मणा जातो देवमानवादिरूपव्यवहारो (शब्दप्रयोगोऽपि) नास्ति निश्चयनयदृष्ट्या तु, आत्मा, अकर्मा—कर्मरहितोऽस्ति, तस्मिन्नकर्मण्यात्मनि कर्मजो व्यवहारो न युक्तः । ['उद्देशो पासगस्स नत्थि' उद्दिश्यते नारकादिव्यपदेशे-नेत्युद्देशः स 'पश्यकस्य' परमार्थदृशो न विद्यते' आ. लोकविजयाध्ययने षष्ठोद्देशकः) ॥१८॥

**–एकक्षेत्रस्थितोऽप्येति नात्मा, कर्मगुणसम्बन्धम्–**

'एकक्षेत्रस्थितोऽप्येति, नाऽऽत्मा कर्मगुणाऽन्वयम् ।
तथाऽभव्यस्वभावत्वाच्छुद्धो धर्माऽस्तिकायवत् ॥१९॥

टी० यस्मिन्नाकाशप्रदेशे, कर्मपरमाणुरस्ति, तस्मिन्नेवाकाशप्रदेशे, आत्माऽप्यस्ति, तथापि कर्मणा जायमानतत्तद्रूपादि-गन्धादिरूपधर्माऽऽत्मककर्मगुणस्यान्वयं-सम्बन्धं 'नैत्यात्मा'-नाऽऽत्मा, प्राप्नोति यतः 'तथाऽभव्यस्वभावत्वात्'=स्वस्वरूपतः परस्वरूपे तस्याऽऽत्मनः परिणमनस्वभावो नास्ति तस्मात् कारणाद् धर्माऽस्तिकायवत्, शुद्ध एक आत्माऽस्ति-स्वभावाऽव्ययवानस्ति, यथा जीवपुद्गलाभ्यां धर्माऽस्तिकायः संयुक्तःसन जीवपुद्गलगुणाऽन्वयं न करोति तथाऽत्रापि प्रकृतेऽप्यात्मनः कर्मसम्बन्धे ज्ञेयम्, तथाऽभव्यस्वभावाऽऽत्माऽस्तीत्यपि ज्ञेयम् ॥१९॥

-व्यवहारवादी त्वेकमात्मानमनेकत्वेन पश्यति-

'यथा तैमिरिकश्चन्द्र-मप्येकं मन्यते द्विधा ।
अनिश्चयकृतोन्मादस्तथाऽऽत्मानमनेकधा ॥२०॥

टी० यथाऽऽकाशे, तैमिरिकः-तिमिराख्यनेत्ररोगी एकमेव, चन्द्रं सन्तमनेकं चन्द्रद्वयं पश्यति, तथाऽऽत्मनि विषये यथार्थनिश्चयाभावबलतो जायमानोन्मादहेतुना, एकमेवाऽऽत्मानं व्यवहारवादी त्वनेकत्वेन मन्यते इति ॥२०॥

-सदृशताया अस्तित्वमेकमविरुद्धमात्मनि-

॥४१३॥

'यथाऽनुभूयते ह्येकं, स्वरूपाऽस्तित्वमन्वयात् ।
सादृश्याऽस्तित्वमप्येक-मविरुद्धं तथाऽऽत्मनः ॥२१॥

टी० यथा व्यवहारनयेनाऽपि देवदत्तेन बाल्य-कौमार्यनार्धक्यादिरूपासु भिन्नभिन्नावस्थासु पृथक्त्वं नानुभूयते स्वमेकमनुभूयते अर्थात् सर्वास्ववस्थासु देवदत्तोऽहं देवदत्तोऽहमिति प्रतीयते अथवा यथाऽत्रैतासु सर्वाऽवस्थासु अन्वयात्'=आत्मादिसम्बन्धसद्भावात्, स्वरूपाऽस्तित्वमेकमेवाऽनुभूयते, तथा सर्वाऽऽत्मसु' आत्मत्वस्य-चैतन्यरूपपरसामान्यस्य, अन्वयसम्बन्धभावात्, तेषां सर्वेषां सादृश्यस्य-सदृशताया अस्तित्वमपि विरोधाभावपूर्वमेकमनुभूयते प्रतीतिविषयीभवत्येव ॥२१॥

-दर्शयत्येकतारत्नं सतां शुद्धनयमित्रम्-

'सदसद्वादपिशुनात्, सङ्गोप्य व्यवहारतः ।
दर्शयत्येकतारत्नं, सतां शुद्धनयः सुहृत ॥२२॥

टी० 'सदसद्वादपिशुनाद्व्यवहारतः'=आत्मा, कथंचित् सन्नस्ति, आत्मा कथंचिदसन्नस्ति, भेदाभेदवादसूचकाद्, उपचरिताऽनुपचरितव्यवहारनयतः सकाशात्, दूरतो नीत्वा, शुद्धनिश्चयस्वरूपं मित्रं, आत्मन. ( चैतन्याऽपेक्षया ) एकतारूपं रत्नं सतां दर्शयत्येवेति ॥२२॥

॥४१४॥

**भिन्नैः पर्यायै जंहाति नैकत्वमात्मद्रव्यं सदाऽन्वयि—**

—नृनारकादिपर्यायै-रप्युत्पन्नविनश्वरैः ।
भिन्नै जहाति नैकत्व-मात्मद्रव्यं सदाऽन्वयि ॥२३॥

टी० वरं सन्न्वात्मनो नरनारकादयः पर्यायाः, ते पर्याया उत्पन्नविनश्वरास्तथाऽपि तेषां पर्यायाणां भिन्नत्वेनाऽऽत्मा, भिन्नो न भवति, स्वगतमेकत्वं न जहाति, अजहदेकत्ववानात्माऽस्ति, यतो नरनारका-दिपर्यायेषु आत्मद्रव्यस्य सदाऽन्वयित्वेन-नित्यसम्बन्धित्वेनैकत्वमजहत् सिद्धम् ॥२३॥

**—नरनारकादिभावेषु एक एवाऽऽत्मा निरञ्जनः—**

यथैकं हेम केयूरकुण्डलादिषु वर्त्तते ।
नृनारकादिभावेषु, तथाऽऽत्मैको निरञ्जनः ॥२४॥

टी० यथा सुवर्णस्य विकारेषु—केयूरकुण्डलादिषु हेम-सुवर्णमेकं वर्त्तते, तथा नरनारकादिभाव-रूपेषु पर्यायेषु, निरञ्जनः—निर्विकार आत्मा त्वेक एवाऽवतिष्ठते, ते पर्याया भिद्यन्ते तद्भेदेनाऽऽत्मा, न भिद्यते एवेति ॥२४॥

**—कर्म, क्रियास्वभाव, यदात्मा त्वजस्वभाववान्—**

'कर्मणस्ते हि पर्याया नाऽऽत्मनः शुद्धसाक्षिणः ।
कर्म क्रियास्वभावं य-दात्मात्वजस्वभाववान् ॥२५॥

टी० हीति निश्चये, ते=नरनारकादिपर्यायाः, 'कर्मणः कर्मोपादानकारणजन्याः, आत्मा तु शुद्ध-साक्षिरूपोऽस्ति, तस्मादेते पर्याया नाऽऽत्मनः शुद्धसाक्षिणः, यत्–यतः 'कर्म, क्रियास्वभावं'=क्रियैव स्वभावो यस्य तत् कर्म, क्रियास्वभावमर्थाद् भिन्नभिन्नपर्यायोत्पादकरणरूपक्रियायाः स्वभावः कर्मणोऽस्ति, 'आत्मात्वजस्वभाववान्'=सर्वथा क्रियारूपजन्मादानाभावरूपस्वभाववानात्माऽस्ति, अर्थात् कर्मणः पर्याया नाऽऽत्मनो भवितुमर्हाः, तस्मात् कर्मपर्यायस्थभेदेनाऽपि, नाऽऽत्मनि भेदः पात्यते इति ॥२५॥

—भवसर्गः कथं ?

'नाऽणूनां कर्मणो वाऽसौ, भवसर्गः स्वभावजः ।
एकैकविरहेऽभावान्न च तत्त्वाऽन्तरं स्थितम् ॥२६॥

टी० नन्वात्मसम्बन्धं विना केवलकर्मणा जन्मरणादिः कथं घटेतेति चेन्नैव जन्ममरणादिरूपो यः संसारोऽस्ति स केवलकर्मपरमाणुक्रियास्वभावेन जनयितुं न शक्यते, तथा जीवस्वभावमात्रेणाऽपि न जनयितुं शक्यते यतो द्वयोर्मध्ये एकस्याऽपि विरहे संसारोऽसम्भवितः, तस्माद् द्वयोः संयोगेनैव संसारो-

॥४१६॥

त्वादः, तथाऽपि 'न च तत्त्वाऽन्तरं स्थितम्'=जन्मादिसंसारं प्रति कर्मपरमाणुजीवयोः संयोगः कारणमत एव कर्मजीवयोः संयोगाद् भिन्नं तत्त्वान्तरं–द्वितीयं तत्त्वं–पृथक्तत्त्वं नास्त्येव जैनप्रवचने, तत्त्वान्तरमान्यतायां तु निष्क्रियचेतनेऽपि क्रियास्वभावत्वमापद्येत, एतद्वस्तूदाहरणेनागामिनि श्लोके साध्यत इति ॥२६॥

—आत्मकर्मसंयोगजे संसारेऽपि, आत्मनि संसारोत्पादिकाक्रियाया असिद्धिः—

'श्वेतद्रव्यकृतं श्वैत्यं, भित्तिभागे यथा द्वयोः ।
भात्यनन्तर्भवच्छून्यं, प्रपञ्चोऽपि तथेक्ष्यताम् ॥२७॥

टी० यथेत्युदाहरणे, भित्तिभागे श्वेतद्रव्यरूपसुधाकृतं श्वैत्य–धवलता, द्वयोः=भित्तिभागे च सुधायां दृश्यते, यतः सुधाया भित्तिभागेन सह संयोगो जातस्तथाऽपि सा धवलता भित्तिभागस्य न भवति, भित्तिगता सा धवलताऽविरहिताऽपि, सुधाया धवलता भित्तौ, या, दृश्यते, सा, भ्रमाऽऽत्मिकाऽस्ति, तथाऽऽत्मना सह कर्मसंयोगो जातोऽस्ति, अतो या संसारोत्पादिका क्रिया जाता, सा क्रिया, केवलकर्मणोऽस्ति, (यथा धवलता, केवलसुधाया एव) आत्मनस्तु नास्त्येव एवमेवाऽऽत्मकर्मसंयोगः, संसारोत्पादकोऽस्ति, तथाप्यात्मनि संसारोत्पादिका क्रिया न सिद्ध्यतीति ॥२७॥

—द्वितीयमुदाहरणम्—

'यथा स्वप्नाऽवबुद्धोऽर्थो, विबुद्धेन न दृश्यते ।
व्यवहारमतः सर्गो, ज्ञानिना न तथेक्ष्यते ॥२८॥

टी० यथा स्वप्नमध्ये दृष्टोऽर्थः, विबुद्धेन—जाग्रता न दृश्यते—न चक्षुर्गोचरतां याति, 'व्यवहारमतः सर्गः'=सुषुप्ताऽवस्थातुल्यायां व्यवहारदृष्टौ यः संसार आत्मनि दृश्यते स जाग्रदवस्थातुल्यायां निश्चयदृष्टौ ज्ञानिना न तथेक्ष्यतेऽपि तु तस्याऽऽत्मा कर्ममुक्तः शुद्धस्वरूपमयो भासते, वस्तुस्थितिरेषैव ॥२८॥

—तृतीयमुदाहरणम्—

मध्याह्ने मृगतृष्णायां, पयःपूरो यथेक्ष्यते ।
तथा संयोगजः सर्गो, विवेकाख्यातिविप्लवे ॥२९॥

टी० निदाघे मध्याह्ने रविकरनिकरसम्बन्धानन्तरं दूरस्थरणभूमौ—मृगतृष्णायां पयःपूरो यथेक्ष्यते, तथा विवेकाख्यातिविप्लवे सति=विवेकाभावरूपाज्ञानोत्पाते जाते सति, जीवकर्मोभयक्रियासम्बन्धेन जातोऽयं संसार इति भ्रमो जायते, वस्तुतः शुद्धनिष्क्रियजीवेन संसारोत्पादो न भवतीति ॥२९॥

—चतुर्थमुदाहरणम्

'गन्धर्वनगरादीना-मम्बरे डम्बरो यथा ।
तथा संयोगजः सर्गो विलासो वितथाऽऽकृतिः ॥३०॥

टी० यथा मायममये गगने मेघमालानिष्पन्नगन्धर्वनगरादीनामाडम्बरः-आभासो दृश्यते, स भ्रमात्मकः, वस्तुतो गन्धर्वनगरादिर्नास्ति, तथा संयोगजःसर्गः-संसारः (सर्वो) विलासः-लीलास्वरूपः, वितथाऽऽकृतिः=मिथ्याऽऽकारमयोऽस्तीति ॥३०॥

– इति शुद्धनयाऽऽयत्तमेकत्व प्राप्तमाऽऽत्मनि–

'इति शुद्धनयाऽऽयत्त-मेकत्वं प्राप्तमात्मनि ।
अंशादिकल्पनाऽप्यस्य, नेष्टा यत्पूर्णवादिनः ॥३१॥

टी० इत्येवं शुद्धनिश्चयनयेन सिद्धं भवति, यद् 'आत्मनि ज्ञानादेश्चाऽन्यात्मनां यो भेदो व्यवहारनयेन मतोऽस्ति स भ्रान्तोऽस्ति, आत्मनि तु ज्ञानादेश्चाऽन्याऽऽत्मनामेकत्वमेव प्राप्तं भवति, किञ्चैष नयस्तु पूर्णस्वरूपमेव स्वरूपत्वेन वदन् वर्त्ततेऽतोऽस्याऽऽत्मनः प्रदेशरूपांशादिकल्पनाऽपि 'नेष्टा'=न सम्मतिविषयीकृतेति शुद्धनयस्तु पूर्णवाद्येव भवतीति ॥३१॥

-शुद्धनया आत्मान प्रत्यग्ज्योतिषमाहुः-

'एक आत्मेति सूत्रस्या-प्ययमेवाशयो मतः ।
प्रत्यग्ज्योतिषमात्मानमाहुः शुद्धनयाः खलु ॥३२॥

टी० श्रीस्थानांगसूत्रेऽपि यदुक्तं 'एगे आया' अर्थादात्मा त्वेक एवाऽस्तीत्यस्य सूत्रस्याऽप्ययमेवाऽऽशयो मतः, खलु-निश्चये, शुद्धनयाः-निश्चयनयविशेषशुद्धसंग्रहनयाद्या बन्धमोक्षादिशून्यशुद्धरूपप्रत्यग्ज्योतिषमात्मानमेव प्रतिपद्यन्ते, एतद्भिनाऽऽत्मनः स्वरूपं नास्तीत्येतेषां मतमस्तीति ॥३२॥

-हे भगवन्नात्मन् प्रसीद प्रकाशय शुद्धरूपम्-

'प्रपञ्चसञ्चयक्लिष्टा-न्मायारूपाद् बिभेमि ते ।
प्रसीद भगवन्नात्मन्, शुद्धरूपं प्रकाशय ॥३३॥

टी० ग्रन्थकारः श्रीमान स्वमात्मानं प्रार्थयते, यद् 'भो भगवन्नात्मन्न मयि प्रसीद-प्रसन्नो भव, ते-तव, संसारात्मकप्रपञ्चसञ्चयेन 'क्लिष्टात्'=क्लेशविशेषसहितात्, कपटात्मकमायास्वरूपादहं बिभेमि-भयवान् भवामि, तस्मात् कारणात् भवन्तं विज्ञपयाम्यहं भो पूज्यरूप भो भगवन्न भवतः शुद्धं-कर्मानाविलं मौलिकस्वरूपं प्रकाशय-प्रादुष्कृतं कुरु कुरु ॥३३॥

— अथाऽऽगामिषु श्लोकेषु व्यवहारनयसम्मत, आत्मनो देह—

कर्मधनपुण्यादिभिः सहाऽभिन्नत्वमस्ति, तन्निराकृत्य देहादिभिः सहात्मनः पृथक्त्वं साधयितुं निश्चयनयः सज्जो भवति, अस्मिन् निश्चयनयमतप्रतिपादने शेषोऽधिकारः पूर्णो भविष्यति—

व्यवहारनयसम्मतदेहेन सहात्मन एकत्वमण्डनम्—

'देहेन सममेकत्वं, मन्यते व्यपहारवित् ।
कथञ्चिन्मूर्त्ततापत्ते र्वेदनादिसमुद्भवात् ॥३४॥

टी० व्यवहारनय.—'व्यवहारवित्'=व्यवहारनयवेत्ता, देहेन सहात्मन एकत्वं मन्यते, अर्थाद् व्यवहारनयः=देहेन सहाऽऽत्माऽभिन्नोऽस्ति, यतो यदा देहे दण्डादिना घातो लगति तदा तज्जन्यवेदनाऽऽत्मन्युद्भवति, यत्र वेदनादेरुद्भवो भवति, तत्र मूर्त्तत्वैव स्यात् , अमूर्त्तता तु नैव, एवमात्मनि कथंचिन्मूर्त्तता भवेच्च तन्मूर्त्तताहेतुनाऽऽत्मा देहेन सहाऽभिन्नो मन्तव्यः, तथाप्रतिपत्तिं विनाऽऽत्मनि मूर्त्तता, नागच्छेदिति ॥३४॥

—व्यवहारसम्मतकथंचिन्मूर्त्ततां निश्चयः खण्डयति—

'तन्निश्चयो न सहते, यदमूर्त्तो न मूर्त्तताम् ।
अंशेनाऽप्यवगाहेत, पावकः शीततामिव ॥३५॥

टी० 'तन्निश्चयो'=आत्मनः कथंचिन्मूर्त्ततां निश्चयनयो न सहते निश्चयो ब्रूते-यतोऽमूर्त्ततां आत्मा कदाचिदंशेनाऽपि मूर्त्ततां 'नावगाहेत'-न गच्छेत्, 'इव'-यथा पावकोऽग्निः, अंशेनाऽपि शीततां नावगाहेत-न गच्छेत्तथाऽत्रापि ज्ञेयम् ॥३५॥

—आत्मा मूर्त्त इति भ्रमः—

'उष्णस्याऽग्नेर्यथा योगाद्, घृतमुष्णमिति भ्रमः।
तथा मूर्त्ताऽङ्गसम्बन्धा-दात्मा मूर्त्त इति भ्रमः ॥३६॥

टी० यथोष्णस्याऽग्ने र्योगाद्-संयोगात, 'उष्णं घृत' मिति भ्रमः-भ्रान्ति', तथा 'मूर्त्ताऽङ्गसम्बन्धात्'= रूपवद्देहसंयोगसम्बन्धात्, मूर्त्तः-रूपी, आत्मा-जीव इति भ्रमः-भ्रान्तिरूपं मिथ्याज्ञानमिति ॥३६॥

—आत्मनि मूर्त्तलक्षणस्याऽसंभवः—

'न रूपं न रसो गन्धो, न न स्पर्शो न चाऽऽकृतिः।
यस्य धर्मो न शब्दो वा, तस्य का नाम मूर्त्तता ॥३७॥

टी० यस्य=आत्मनः सकाशे, सर्वथा 'न रूपं'=रूपमात्राभावः, 'न रसः'=रसगुणपर्यायाभावः, 'न गन्धः'=गन्धगुणपर्यायाऽभावः, 'न स्पर्शो'=स्पर्शगुणपर्यायाभावः, 'न चाकृतिः आकारमात्राभावः,

(न धर्मः'=मूर्त्तनिष्ठधर्मरूपमूर्त्ततास्वभावाऽभावः, अथवा मूर्त्तधर्मविशेषशब्दाभावः, 'तस्य का नाम मूर्त्तता'=तस्याऽऽत्मनः सर्वथा रूपित्वाभावेनाऽमूर्त्तताऽस्ति ॥३७॥

-यद्रूप स्वप्रकाशं तस्य का नाम मूर्त्तता—

दृशाऽदृश्यं हृदाऽग्राह्यं, वाचामपि न गोचरः ।
स्वप्रकाशं हि यद्रूपं, तस्य का नाम मूर्त्तता ॥३८॥

टी० 'दृशाऽदृश्य'=चर्मचक्षुषा न दृश्यमानम्, 'हृदाऽग्राह्यं'=मनसा ग्रहणाऽयोग्यं 'वाचामपि न गोचरः' शब्दविशेषरूपवचनानामपि न विषयः, 'हीति निश्चये 'यद्रूपं'=यस्यात्मनो रूपं–सहजं स्वरूपं, स्वप्रकाशं'=स्वस्य स्वरूपस्य वा प्रकाशो यत्र तद्रूपं–स्वस्वामिकज्ञानप्रकाशं, स्वरूपं परमज्ञान--ज्योतिर्मयोऽयमात्माऽस्ति, तस्याऽऽत्मनः का नाम मूर्त्तता–पुद्गलता ? अर्थात्तस्य ज्ञानात्मकस्याऽऽत्मनो नो रूपिता संभवतीति ॥३८॥

-किंविशिष्टोऽयमात्मास्तीति चेत् स विशेष्यते—

' आत्मा सत्यचिदानन्दः, सूक्ष्मात्सूक्ष्मः परात्परः ।
स्पृशत्यपि न मूर्तत्वं, तथा चोक्तं परैरपि ॥३९॥

टी० कीदृशोऽयमात्मा ?=अयमात्मा, सत्योऽस्ति-कालत्रयाऽवच्छेदेनास्तित्ववानत एव सत्यो-नित्योऽस्ति पु. की. आ. इति चेच्चिद्रूपोऽयमात्मा, सम्यक्सम्पूर्णकेवलज्ञानमयोऽयमात्मा, पु की. आ. इति चेदानन्दः-पूर्णानन्दमयोऽयमात्मा, पु. की० आत्मेति चेत् 'सूक्ष्मात् सूक्ष्मः' सर्वसूक्ष्मपदार्थेभ्यः सूक्ष्मः, यस्मात् परतः कोऽपि सूक्ष्मो नास्ति, सर्वश्रेष्ठसूक्ष्म इति यावत् पु० की. आत्मेति चेत् 'परात्परः'=सर्वोत्कृष्टेभ्योऽप्युत्कृष्टः-उत्कर्षाऽऽश्रयः, एतादृश आत्मा. मूर्त्तत्वं-रूपित्व, न स्पृशत्यपि-गच्छत्यपि, 'तथा चोक्त परैरपि'=तथा च भगवद्गीतायां व्यासमुनिना यदुक्तं तदागामिश्लोके कथ्यमानमस्ति ॥३९॥

-भगवद्गीतोक्तोऽयं श्लोकः-

'इन्द्रियाणि पराण्याहु-रिन्द्रियेभ्यः परं मनः ।
मनसोऽपि परा बुद्धि-र्यो बुद्धेः परतस्तु सः ॥४०॥

टी शरीरमपरमश्रेष्ठमस्ति, ततः शरीरत इन्द्रियाणि पराणि-श्रेष्ठान्याहुः, इन्द्रियेभ्यः=चक्षुरादि-ज्ञानेन्द्रियेभ्यः, मनः. परं-श्रेष्ठ, 'मनसोऽपि-अन्तः करणतोऽपि बुद्धि'. परा-श्रेष्ठा, 'यो बुद्धेः परतस्तु सः'=तत्त्वविचारणफलवत्या बुद्धेः परः श्रेष्ठो योऽस्ति स आत्मैव इदमत्र हृदयम्-शरीरस्योपरीन्द्रियाणां सत्ताऽस्ति, इन्द्रियाणामुपरि मनसः स्वामित्वमस्ति, मनस उपरि बुद्धेरधिकारोऽस्ति, बुद्धेरुपरि शासन-मात्मनो विद्यते, एवं सर्वोपरिसत्ताधीश आत्माऽस्ति, अस्याऽऽत्मनः शासकसत्तामनुभूय, आत्मानं शान्तं

विधाय साधकेन जगद्विजयिस्त्वैरिस्मरराजो विजेतव्य एवेति ॥४०॥

—पश्यत्याश्चर्यवज्ज्ञानी वदत्याश्चर्यवद्वचः—

'विकले हन्त लोकेऽस्मिन्नमूर्त्ते मूर्त्तताभ्रमात् ।
पश्यत्याश्चर्यवज्ज्ञानी, वदत्याश्चर्यवद्वचः ॥४१॥

टी. हन्तेति खेदे, 'विकले लोकेऽस्मिन'=विवेकरहिते संसारेऽस्मिन 'अमूर्त्ते मूर्त्तताभ्रमात्'=अरूपिण्यात्मनि मूर्त्तताया भ्रमाद्-भ्रान्तितः, अमूर्त्ताऽऽत्मनि मूर्त्तताभ्रान्ति ज्ञानी, 'आश्चर्यवद्-आश्चर्यसमानां पश्यति-जानाति, शृणोतीति यावद्, ज्ञानी, आश्चर्यतुल्यं वचनं 'अहो अहो अमूर्त्ताऽऽत्मनि मूर्त्तताया भानं कीदृशं विचित्रमिति वदति । (आश्चर्यवद् आश्चर्यम् अदृष्टपूर्वम् अद्भुतम् अकस्माद्दृश्यमानं तेन तुल्यम् आश्चर्यवद् आश्चर्यम् इव एनं आत्मानं पश्यति कश्चिद् । आश्चर्यवद् एनं वदति तथा एव च अन्यः । आश्चर्यवत् च एनम् अन्यः शृणोति । श्रुत्वा दृष्ट्वा उक्त्वा अपि एनं वेद न च एव कश्चित् । अथवा यः अयम् आत्मानं पश्यति स आश्चर्यतुल्यो यो वदति, यः च शृणोति, सः अनेकसहस्रेषु कश्चिद् एव भवति, अतो दुर्बोध आत्मा इति अभिप्रायः ॥ भ.गी. शाङ्करभाष्यम् २-२९) । ४१॥

—वेदनापि न मूर्त्तत्वनिमित्ता स्फुटमात्मनः—

'वेदनाऽपि न मूर्त्तत्व-निमित्ता स्फुटमात्मनः ।
पुद्गलानां तदापत्तेः, किन्त्वशुद्धस्वशक्तिजा ॥४२॥

टी० व्यवहारनयेन यदुक्तं 'आत्मनो वेदनादिनिषयानुभवस्तस्मादात्मनि मूर्त्तता कल्पनीयेति तन्निश्चयो न सहतेऽपितु वक्ति च 'मूर्त्तता भवेत्तदैव वेदनादिविषयकोऽनुभवो भवेदेवेत्याग्रहश्चेत्तदा परमाण्वादिपुद्गलेष्वपि मूर्त्तताऽस्ति तदा तेषु पुद्गलेषु, आघातादौ जायमाने वेदनादिकानुभवस्यापत्तिरागमिष्यति, अर्थात् सुखादिविषयकानुभवमात्रेणात्मनि न मूर्त्तता मन्तव्या

नन्वेवं सत्यात्मनि सुखादिवेदनाया अनुभवः कुतो भवतीति चेत् 'किन्त्वशुद्धस्वशक्तिजा'=अशुद्धा या स्वस्यात्मनः शक्तिस्तज्जन्या=अशुद्धस्वशक्तिजा वेदना अर्थात् कर्मसंयोगोपाधिवशाद्, विशुद्धशक्तिरूपशुद्धोपयोगो मलिनः सञ्जातस्ततोऽशुद्धस्वशक्तितो वेदनाया अनुभवो भवति, परन्तु मूर्त्तत्वाधीनो नो वेदनाऽनुभव इति ॥४२॥

—स्वयं परिणमत्ययमात्मवेदानाम्—

'अक्षद्वारा यथा ज्ञानं, स्वयं परिणमत्ययम् ।
तथेष्टानिष्टविषय-स्पर्शद्वारेण वेदनाम् ॥४३॥

॥४२६॥

टी० यथा, 'अक्षद्वारा'=इन्द्रियद्वारा जायमानं घटादिविषयकप्रत्यक्षज्ञानमात्मा, स्वयमात्मनि परिणमयति 'घटादिज्ञानपरिणामवानहमिति--

तथा, इष्टानिष्टाः–अनुकूलप्रतिकूला ये विषयास्तेषां स्पर्शद्वारेण–प्राप्तिद्वारा, जायमानामनुभवरूपां वेदनामात्मा, स्वयमात्मनि परिणमयति यथा 'सुखादिविषयकानुभववेदनापरिणामपरिणतोऽहमिति–

अत्र ज्ञानादिपरिणामे शुद्धस्वशक्तिः कारणम् वेदनादिपरिणामेऽशुद्धस्वशक्तिः कारणम् इत्यन्तरं विज्ञेयम् अर्थाद् वेदनानामकपरिणामं प्राप्तवत्यात्मनि, वेदनानिमित्तमूर्त्तताया मतं परास्तमिति ॥४३॥

–विपाककालप्राप्त्यनन्तरं वेदनापरिणाम्यात्मा—

विपाककालं प्राप्याऽसौ, वेदनापरिणामभाक् ।
मूर्त्तं निमित्तमात्रं, नो, घटे दण्डवदन्वयि ॥४४॥

टी. यदा, तत्तद्वेदनापरिणामभोगकालरूपविपाककाल आयाति, तदा तदा तत्तद्वेदनापरिणाममात्मा, वेदयते, अस्यां वेदनायां मूर्त्तद्रव्यरूपं कर्म, निमित्तमात्रमस्ति, परन्तु तत्कर्मात्मना सहैकत्वं प्राप्तमित्युक्त्वा कर्मणो वेदनाभोगस्याऽन्वयि–उपादानकारणं कर्म कथयितुं न शक्यते । यथा घटं प्रति मृत्तिकोपादानकारणमवश्यमस्ति, किन्तु दण्ड उपादानमन्वयिकारणं नास्ति, तथा मूर्त्तकर्माऽपि वेदनाभोगं प्रति उपादानमन्वयिकारणं नास्त्येवेति ॥४४॥

—वेदनाया विशेषार्थः—

ज्ञानाख्या चेतना बोधः, कर्माऽऽख्या द्विष्टरक्तता ।
जन्तोः कर्मफलाऽऽख्या सा, वेदना व्यपदिश्यते ॥४५॥

टी० जन्तोरात्मनो ज्ञानाऽऽख्या-ज्ञानलक्षणा चेतना बोध इति व्यपदिश्यते, आत्मनो द्विष्टरक्तता-रागद्वेषरूपा 'कर्माऽऽख्या'=कर्मलक्षणा चेतनेतिकथ्यते जीवस्य या कर्मफलाख्या-कर्मफलनामिका चेतनाऽस्ति सा वेदनारूपेण व्यपदिश्यते-व्यवह्रियते अर्थाज्जीवस्य तृतीयभेदरूपा चेतनैव वेदनोच्यते तस्माद् वेदनाया उद्भवहेतुनाऽऽत्मनि मूर्त्तत्वकल्पना कपोलकल्पनामात्रैव ॥४५॥

—नाऽऽत्माऽमूर्त्तत्वं चैतन्यं चातिवर्त्तते—

'नाऽऽत्मा तस्मादमूर्त्तत्वं, चैतन्यं चातिवर्तते ।
अतो देहेन नैकत्वं, तस्य मूर्त्तेन कर्हिचित् ॥४६॥

टी० आत्मा, अमूर्त्ततामुल्लङ्घ्य मूर्त्तो न भवति, तथा चैतन्यमुल्लङ्घ्य कदाचिज्जडदेहरूपो देहादभिन्नो न भवति तस्मादेवाऽऽत्मा, मूर्त्ताद् देहाद् भिन्नोऽस्ति, अतः कुत्राऽपि-कदाचिन्मूर्त्तेन देहेन सममेकत्वं न तस्याऽऽत्मनः, कदापि तादृशमूर्त्तेन देहेन सह तस्यात्मनोऽभिन्नता-तादात्म्यं न सम्भवतीति ॥४६॥

–सन्निकृष्टविप्रकृष्टपदार्थेभ्यो भिन्नताऽऽत्मनः—

सन्निकृष्टान्मनोवाणीकर्मादेरपि पुद्गलात् ।
विप्रकृष्टाद् धनाऽऽदेश्च, भाव्यैवं भिन्नताऽऽत्मनः ॥४७॥

टी० 'आत्मनः सन्निकृष्टात्=समीपस्थात् पुद्गलात्–मूर्त्तपुद्गलपरिणामात् , मनसो, वचसः, कर्मादेरपि भिन्नताऽऽत्मनो भाव्या, तथा चाऽऽत्मनो विप्रकृष्टात्–दूरस्थाद् धनादेः पुद्गलपरिणामाद् भिन्नताऽऽत्मनो भाव्येति ॥४७॥

–गुणभेदेन पुद्गलाऽऽत्मनो भेदो दर्श्यते—

'पुद्गलानां गुणो मूर्त्ति–रात्मा ज्ञानगुणः पुनः ।
पुद्गलेभ्यस्ततो भिन्नमात्मद्रव्यं जगुर्जिनाः ॥४८॥

टी० 'पुद्गलानां गुणो मूर्तिः'=ये मनोवर्गणाद्याः पुद्गलाः सन्ति तेषां गुणा मूर्तिः=रूपरसगन्धस्पर्शादिरूपा मूर्त्तिरुच्यते 'रूपिणः पुद्गलाः' रूपिता–रूपं–मूर्त्तत्वं–मूर्त्तिः-पुद्गलत्वमित्यादयः पर्यायशब्दाः । 'पुनरात्मा ज्ञानगुणः'=ज्ञानं गुणो यस्य स आत्मा ज्ञानगुण उच्यते, आत्मनो गुणो रूपादिर्नास्त्येव, परन्तु ज्ञानं गुणोऽस्त्येव, ततः=तस्मात्कारणात् , पुद्गलेभ्यः=परमाणुस्कन्धतत्परिणामेभ्यः 'भिन्नमात्म-

॥४२१॥

द्रव्यं जगुर्जिनाः'=गुणभेदप्रयुक्तपुद्गलद्रव्यभिन्नमात्मात्मनामकद्रव्यं, जिनाः—रागद्वेषजेतारः सर्वज्ञाः कथितवन्त इति ॥४८॥

**—धर्माऽस्तिकायात्मद्रव्ययो र्गुणभेदेन भेदः—**

'धर्मस्य गतिहेतुत्वं, गुणो ज्ञानं तथाऽऽत्मनः ।
धर्माऽस्तिकायात्तद्भिन्न—मात्मद्रव्यं जगुर्जिनाः ॥४९॥

टी० धर्माऽस्तिकायस्य गतिहेतुत्वं वर्त्तते तथाऽऽत्मनः गुणो ज्ञानमस्ति, यथा समस्तधनादिरूपाजीवद्रव्यपुद्गलद्रव्यत आत्मद्रव्यं भिन्नमस्ति, तथा धर्मास्तिकायद्रव्याद् भिन्नमात्मद्रव्यं जगुर्जिनाः ॥४९॥

**—अधर्माऽस्तिकायाऽऽत्मद्रव्ययो र्गुणभेदेन भेदः—**

'अधर्मे स्थितिहेतुत्वं, गुणो ज्ञानगुणोऽसुमान् ।
ततोऽधर्मास्तिकायाऽन्यदात्मद्रव्यं जगुर्जिनाः ॥५०॥

टी० अधर्मास्तिकायस्य गुणः स्थितिहेतुत्वमस्ति, यदाऽसुमान्—जीवो ज्ञानगुणोऽस्ति, अधर्माऽस्तिकायनामकाजीवद्रव्यतोऽपि, आत्मद्रव्यमन्यद्-भिन्नं जगुर्जिना इति ॥५०॥

**—आकाशाऽस्तिकायाऽऽत्मद्रव्ययोर्गुणभेदेन भेदः—**

॥४३०॥

'अवगाहो गुणो व्योम्नो, ज्ञानं खल्वात्मनो गुणः ।
व्योमाऽस्तिकायात्तद्भिन्नमात्मद्रव्यं जगुर्जिनाः ॥५१॥

टी० 'व्योम्नः'=आकाशाऽस्तिकायस्य गुणोऽवगाहोऽवकाशदानरूपोऽस्ति, आत्मनो गुणो ज्ञानमस्ति, तत्—तत आकाशाऽस्तिकायनामकाजीवद्रव्यतो भिन्नमात्मद्रव्यं जगुर्जिनाः ॥५१॥

–कालद्रव्यात्मद्रव्ययो गुणभेदेन भेदः––

आत्मा ज्ञानगुणः सिद्धः, समयो वर्त्तनागुणः ।
तद्भिन्नं समयद्रव्या-दात्मद्रव्यं जगुर्जिनाः ॥५२॥

टी० वर्त्तना गुणो यस्य स वर्त्तनागुणः समयः, वर्त्तनानामकः परिणाम-विशेषः,–नवपुराणभावकरणरूपः–पौर्वापर्यभावकारणरूपः, यदाऽऽत्मा, ज्ञानगुणः सिद्धः, तत्–तस्मात्कारणात्, कालनामकाजीवद्रव्यतोऽप्यात्मद्रव्यं भिन्नं जगुर्जिनाः ॥५२॥

'व्यक्तिभेदनयाऽऽदेशाज्जीवेऽप्यजीवत्वमपीष्यते––

'आत्मनस्तदजीवेभ्यो, विभिन्नत्वं व्यवस्थितम् ।
व्यक्तिभेदनयादेशादजीवत्वमपीष्यते ॥५३॥

टी० अनया शैल्या 'पुद्गलादिपञ्चकाजीवद्रव्यत आत्मा भिन्नोऽस्तीत्येतद्वस्तु निश्चयनयमतेन स्थिरीभूतमस्ति अर्थादात्मनि जीवत्वमेव, अजीवत्वं नास्त्येवेत्येतद्वस्तु स्थितमेव परन्तु 'व्यक्तिभेदनयादेशात्'=व्यक्तीनां भेदो यत्र स नयः व्यक्तिभेदनयः, तस्यादेशादपेक्षया तु आत्मनि, अजीवत्वमपि मन्यते, अर्थाद् व्यक्तीनां भेदं पातयन्नयरूपादेशो व्यवहारनय उच्यते निश्चयदृष्ट्या तु सिद्धसंसारिरूपव्यक्तिद्वयस्वरूपो भेदो न पतति परन्तु व्यवहारनयः=जीवो द्विविधः सिद्धसंसारिभेदादित्येवं व्यक्तिभेदं प्रतिपद्यते, तस्मात्तदपेक्षया सिद्धे च संसारिणि जीवेऽजीवत्वमपि साध्यमानममास्तीति ।।५३।।

—द्रव्यभावप्राणाभावविवक्षया सिद्धसंसारिजीवयोरजीवत्वम्—

'अजीवा जन्मिनः शुद्धभावप्राणव्यपेक्षया ।
सिद्धाश्च निर्मलज्ञाना द्रव्यप्राणव्यपेक्षया ॥५४॥

टी० शुद्धा ( निरावरणा—निर्दोषाः-केवला ) ये भावप्राणाः शुद्ध—ज्ञानादिगुणा उच्यन्ते, इन्द्रियाद्या दश द्रव्यप्राणा उच्यन्ते यदि ज्ञानादिगुणस्वरूप—शुद्ध-केवल—भावप्राणाऽपेक्षया जीवे जीवत्वं गण्यमानं चेत्तदा सिद्धेषु जीवेष्वेव जीवत्वं गण्येत, जन्मिषु—संसारिषु जीवेष्वजीवत्वं गण्येत, यतो जन्मिनां, शुद्धज्ञानादिगुणानामप्रादुर्भावात्तेषां ज्ञानादयः शुद्धभावरूपा न सन्ति, किञ्च यदि द्रव्यप्राणै र्जीवे जीवत्वं

गण्यमानं भवेत्तदा संसारिषु जीवेष्वेव जीवत्वमागच्छेन्निर्मलज्ञानेषु सिद्धात्मसु द्रव्य(अप्रधान) प्राणाभावात् अजीवत्वमागच्छेत् ॥५४॥

—नामभिःसह द्रव्यप्राणानां सङ्ख्या—

'इन्द्रियाणि बलं श्वासो-च्छ्वासो ह्यायुस्तथा परं ।
द्रव्यप्राणाश्चतुर्भेदाः पर्यायाः पुद्गलाऽऽश्रिताः ॥ ५५ ॥

टी० चतुर्धा द्रव्यप्राणाः

| मूलभेदाः | अवान्तरभेदाः |
|---|---|
| १ इन्द्रियाणि | ५ स्पर्शनादीनि पञ्चेन्द्रियाणि |
| २ बलं | ३ मनोवचःकायभेदात्त्रिविधं बलम् |
| ३ श्वासोच्छ्वासः | १ एकविधः |
| ४ आयुः | १ एकविधम् |
| | १० |

एते चतुर्भेदा द्रव्यप्राणाः पुद्गलाऽऽश्रिताः=पौद्गलिकाः पर्यायाः—परिणामविशेषा इत्यर्थः ॥५५॥

॥४३३॥

-विकारिभिर्द्रव्यप्राणैरात्मनो नास्ति स्वभावजीवनम्--

'भिन्नास्ते ह्यात्मनोऽत्यन्तं, तदेतैर्नास्ति जीवनम् ।
ज्ञानवीर्यसदाऽऽश्वास-नित्यस्थितिविकारिभिः ॥ ५६ ॥

टी० 'ते'=निरुक्ताश्चतुर्भेदा द्रव्यप्राणाः, हीति निश्चये, 'आत्मनोऽत्यन्तं भिन्नाः'=स्वाऽऽत्मद्रव्यतः सर्वथा भिन्नाः, 'तत्' तस्मात् 'एतैः'=द्रव्यप्राणैरेतैरात्मनो नास्ति जीवनम्, कथमिति चेत्–ते द्रव्यप्राणा आत्मस्थज्ञानादिचतुःशक्तिविशेषाणां विकाररूपाः सन्ति तथाहि=ज्ञानवीर्यसदाऽऽश्वासनित्यस्थितिविकारिभिः'= (१) इन्द्रियनामकद्रव्यप्राणाः, आत्मनः शुद्धज्ञानशक्तिसम्बन्धिविकाररूपाः (ज्ञानेन्द्रियाणि पञ्च) (२) मनोवचोवपुर्भेदभिन्ना बलनामकप्राणाः आत्मनोऽनन्तवीर्यनामकशक्ते विकाररूपाः (३) श्वासोच्छ्वासनामकप्राणाः, 'आत्मनः सदाऽऽश्वासः'=सत्सु आश्वासो-विश्वासः, तत्त्वनिर्णयरूपं क्षायिकं सम्यग् दर्शनम्, अथवा सदाऽश्वासः=सदा श्वासक्रियाया अभावः अर्थादुपलक्षणतः सदाक्रियाऽभावरूपस्थिरतास्वरूपस्थिरतानामकं निश्चयात्मकं चारित्रम्, क्षायिकदर्शनस्य विकाररूपा अथवा सदाश्वासाभावरूपनिष्क्रियतास्थिरतारूपचारित्रस्य विकाररूपाः, (४) आयुर्नामकद्रव्यप्राणाः, 'आत्मनो नित्यस्थितेः–साद्यनन्तरूपनित्यस्थितेर्विकारस्वरूपा विज्ञेयाः आत्मा तु पुष्करपत्रवन्निर्विकारोऽस्ति, अत एते विकाररूपा द्रव्यप्राणा आत्मनो न भवन्ति, तत एवाऽऽत्मनोऽत्यन्तं भिन्ना एव सन्ति, ये प्राणा आत्मनो भिन्नाः

स्युस्तैरात्मनो जीवनं न सम्भवेदिति ॥५६॥

–शुद्धज्ञानादिभावप्राणै र्जीवत्यात्मा सदा—

'एतत् प्रकृतिभूताभिः शाश्वतीभिस्तु शक्तिभिः ।
जीवत्यात्मा सदेत्येषा, शुद्धद्रव्यनयस्थितिः ॥ ५७ ॥

टी० 'एतत् प्रकृतिभूताभिः'=एताभिर्ज्ञानवीर्यसदाऽश्वासनित्यस्थितिभिः, अथवैतस्याऽऽत्मनः प्रकृतिभूताभिः, शाश्वतीभिः, शक्तिभिः, ज्ञानवीर्यसदाऽश्वासनित्यस्थितिरूपाभिरात्मा सदा जीवति, न तु विकारस्वरूपै र्दशभिर्द्रव्यप्राणैः शक्तिरूपैरिति, 'एषा शुद्धद्रव्यनयस्थितिः'=निश्चयनयविशेषसंग्रह--नयादिरूपशुद्धद्रव्यार्थिकनयानां स्थितिर्मर्यादेति ॥५७॥

–जीवानां जीवनचरित्रं चित्ररूपं दृश्यते–

'जीवो जीवति न प्राणै-र्विना तैरेव जीवति ।
इदं चित्रं चरित्रं के हन्त ! पर्यनुयुञ्जताम् ॥ ५८ ॥

टी० अस्मिन् संसारपर्याये जीवो यै र्द्रव्यप्राणै र्विना न जीवत्येव, तै र्द्रव्यप्राणै र्विना सिद्धत्वपर्याये जीवो जीवति, तथा यैः शुद्धभावप्राणै र्विना सिद्धजीवो न जीवत्येव, तैः शुद्धकेवलभावप्राणै र्विना

संसारी जीवो जीवत्यपि इदं जीवानां जीवनसम्बन्धि चित्रं चरित्रं के-पंडिता 'हन्त! पर्यनुयुञ्जताम्'= इदृशं कथमिति प्रश्नं कर्त्तुं समर्था भवन्तु! अपि तु न केऽपि प्रष्टुं समर्था भवेयुरिति, [ अत्र जीवस्याऽजीवात् नवतत्त्वेषु द्वितीयतत्त्वतो भेदनिरूपणं निश्चयनयदृष्ट्या पूर्णं जातमिति] ॥५८॥

—आत्मनः पुण्यपापतत्त्वतो भिन्नत्वं दर्श्यते—

'नाऽऽत्मा पुण्यं नवा पाप-मेते यत्पुद्गलात्मके ।
आद्यबालशरीरस्यो-पादानत्वेन कल्पिते ॥५९॥

टी० आत्मा, न पुण्यं कर्म नवा पापं कर्म, यत्—यत एते=पुण्यपापकर्मणी द्वे पुद्गलात्मके—पौद्गलिके स्तः, मातुः शरीरमध्ये बालरूपाऽऽत्मनः सर्वप्रथमं शरीरबन्धो—शरीररचना भवति, तस्योपादानकारणत्वेन पुण्यपापकर्मणी कल्पिते—अभिमते स्तः, अर्थादेतत्पुण्यपापमयकार्मणशरीरेणैव, तद्बालाऽऽत्मनः शुभाऽशुभाऽऽत्मकं शरीरं विरच्यमानमस्ति ॥५९॥

—पुण्यं कर्म शुभं कथं?—

'पुण्यं कर्म शुभं प्रोक्तं, अशुभं पापमुच्यते ।
तत्कथं तु शुभं जन्तून्, यत्पातयति जन्मनि ॥६०॥

॥४३६॥

टी० व्यवहारनयमतेन, पुण्यं कर्म शुभं प्रोक्तं, पापं कर्माशुभमुच्यते, निश्चयनयवादिभिरुच्यते च 'यदस्माभिर्न ज्ञायते कथं पुण्यं कर्माऽपि शुभं कथ्यते ? यत्-यतो जन्तून् दुःखरूपे जन्मनि पातयति पुण्यमपि कर्मेति ॥६०॥

-कर्मणि पारतन्त्र्यसामान्येन फलभेदो न--

'न ह्यायसस्य बन्धस्य, तपनीयमयस्य च ।
पारतन्त्र्याऽविशेषेण, फलभेदोऽस्ति कश्चन ॥६१॥

टी० हि--किल, आयसस्य-लौहस्य च 'तपनीयमयस्य'=सौवर्णस्य बन्धस्य=निगडरूपबन्धस्य, 'पारतन्त्र्याविशेषेण'=लौहे वा सौवर्णे बन्धे परतन्त्रताया विशेषस्याऽभावेन कश्चन फलस्य भेदो नास्त्येव, अत्राऽपि प्रकृतेऽपि पुण्यपापकर्मणोः सौवर्णलौहनिगडसमानयोः, जन्मसत्कपारतन्त्र्यस्य विशेषाऽभावेन फलस्य भेदो नास्त्येवेति ॥६१॥

-सुखदुःखयो र्भेदस्तु नामापेक्षया नत्वर्थाऽपेक्षया--

'फलाभ्यां सुखदुःखाभ्यां, न भेदः पुण्यपापयोः ।
दुःखान्न भिद्यते हन्त ! यतः पुण्यफलं सुखम् ॥६२॥

टी० ननु व्यवहारनयाऽपेक्षया 'पापस्य फलं दुःखमस्ति, पुण्यस्य च फलं सुखमस्तीति फल भेदेन पुण्यपापे भिन्ने एवेति चेन्निश्चयनयः प्रतिवदति, हन्तेति खेदे, यत् पुण्यस्य फलं सुखमस्ति तद् दुःखान्न भिद्यते, अर्थाद् दुःखादीषदपि भिन्नं नास्त्येव, सुखरूपमनोहरनामदानेन दुःखत्वध्वंसो न भवतीति ॥६२॥

-कर्मोदयकृतत्वरूपहेतुना पुण्यफलं दुःखमिति साध्यते--

'सर्वपुण्यफलं दुःखं, कर्मोदयकृतत्वतः ।
तत्र दुःखप्रतीकारे विमूढानां सुखत्वधीः ॥६३॥

टी० 'कर्मोदयकृतत्वतः'=कर्मण उदयेन कृतत्वतः-जन्यत्वादौदयिकत्वात् सर्वपुण्यस्य फलं वस्तुतस्तु दुःखं दुःखरूपम् । इदमत्र हार्दम्-पूर्वं तावत् क्षुधादिकं दुःखमुद्भवति पश्चात् स दुःखाद्व्याकुलीभवति, ततश्च भोजनद्वारा तद्दुःखं प्रतिकृतं भवति, स्वयं मन्यते च सुख्यहं सञ्जात इति 'सुख्यहं सञ्जात इत्युक्ते 'उत्थितमात्रदुःखस्य प्रतिकार एव कृतः' एषोऽर्थो विज्ञेयः, क्षुधाऽऽतपपरिश्रमादीनां दुःखं यावत्पुष्कलं तावदेव भोजनच्छायाश्रयसुखग्रहणादिद्वारा विशिष्टं प्रतिकृतं भवत्यर्थात् सर्वदुःखानां प्रतिकारे सुखमिति विपर्यस्यति मतिः, वाङ्मात्रं पुण्यजन्यं सुखमप्येतद् दुःखप्रतिकाररूपमेवास्ति, नास्ति किञ्चिदन्यद्, अस्मिन् मिथ्यासुखे-सुखाभासे भ्रान्ता विमूढाः सुखं कल्पन्ते भो कर्मलीले ! तव कीदृशीयं माया ॥६३॥

(१) पुण्यजं सुखं दुःखत्वेन परिणामादिहेतुभिश्चतुर्भिः साध्यते—

'परिणामाच्च तापाच्च संस्काराच्च बुधै र्मतम् ।
गुणवृत्तिविरोधाच्च, दुःखं पुण्यभवं सुखम् ॥६४॥

टी० बुधैः=प्राज्ञपुरुषैः परिणामाच्च तापाच्च संस्काराच्च गुणवृत्तिविरोधाच्च पुण्यभवं सुखं दुःखं-दुःखत्वेन मतमभिप्रेतमिति ॥६४॥

—परिणामतः पुण्यभवं सुखं दुःखमेव—

'देहपुष्टे र्नरामर्त्य—नायकानामपि स्फुटम् ।
महाऽजपोषणस्येव, परिणामोऽतिदारुणः ॥६५॥

टी० 'नरामर्त्यनायकानामपि'=नरनायकानां—चक्रवर्त्यादीनां निर्जरनायकानां—सुरेन्द्राणां, अपिः—अन्यस्य च का वार्त्ता ? स्फुटं—स्पष्टतया, 'देहपुष्टेः'=पौद्गलिकविषयसुखभोगपुष्टिहेतुतः, 'परिणामोऽतिदारुणः'=अत्यन्तभयङ्करनरकादिदुर्गतिदुःखप्राप्तिरूपाऽऽयतिफलरूपपरिणामो भवति 'महाऽजपोषणस्येव' यथा सौनिकगृहे पूर्वमनुकूलभोजनद्वाराऽजं महान्तं सौनिकः करोति, पश्चान्महाऽतिथिसमागमनाऽनन्तरं एकदा महाऽजगलेऽतितीक्ष्णकृपाणपतनाऽनन्तरमनन्तं दुःखं महाऽजोऽनुभवति, पश्य २ कीदृक्षोऽयं सुखपरिणामः, तथाऽत्रापि प्रकृते सङ्गमनीयमिति ॥६५॥

-सोदाहरणं पुण्यसुखं दुःखमिति विषयं द्रढयति—

'जलूकाः सुखमानिन्यः पिबन्त्यो रुधिरं यथा ।
भुञ्जाना विषयान् यान्ति, दशामन्तेऽतिदारुणाम् ॥६६॥

टी० यथा रुधिरं पिबन्त्यः 'सुखमानिन्यः'=सुखं मन्यमाना जलूकाः, अन्तेऽतिदारुणां दशां यान्ति, इदमत्र हृदयम्=शरीरस्थमपवित्रं रक्तं बहिर्निष्कासयितु' तत्र तत्र स्थाने वैद्या जलूका उपवेशयन्ति, ता जलूका रुधिरं पिबन्ति, तस्मिन्नवसरे भृशमानन्दमनुभवन्ति, पश्चाद्रक्तं पीत्वा जाताः स्थूला जलूका रक्ततो रिक्ताः कुर्वन्ति, यदा तदा भृशं दुःखिन्यो जायन्ते, रुधिरपानजन्यं सुखं दुःखे परिणतमेव, तथा विषयसुखभोगकाले सुखं मन्यमाना जीवा अन्ते-परिणामे, नरकादिदुर्गतिमध्येऽतिभयङ्करदशामनुभवन्ति, तस्मात्कारणात् कथ्यते, पुण्यफलत्वेन लभ्यमानसुखे परिणामे दुःखता विद्यत एवेति ॥६६॥

(२) तापाऽपेक्षया पुण्यफलसुखं दुखमेव—

'तीव्राऽग्निसङ्गसंशुष्यत्-पयसामयसामिव ।
यत्रौत्सुक्यात्सदाऽक्षाणां, तप्तता तत्र किं सुखम् ॥६७॥

टी० इव-यथा, 'तीव्राऽग्निसङ्गसंशुष्यत्पयसाम्'=तीव्रस्याग्नेः सङ्गेन संशुष्यत्पयो-जलं येषु तेषा-

मयमाम्, अर्थात् तीव्राऽग्निसंयोगात्तप्त्वा सर्वथा महारक्तभूतेऽयसि जलसेकेन, जलं सर्वथा शुष्यत्येव, लोहं च जाने तादृशं पूर्ववत्तप्तमेव तिष्ठति तथा 'यत्रौत्सुक्यात्सदाऽक्षाणां तप्तता'=सदेन्द्रियविषयाणां तीव्रभोगकामनारूपौत्सुक्याद् यत्रेन्द्रियेषु तप्तता तत्र किं ? अपि तु न किञ्चिदपि सुखम्, अर्थादनया रीत्यैव, इन्द्रियविषयसक्ततीव्रभोगौत्सुक्यरूपाऽग्निना तप्त्वा महारक्तभूतेन्द्रियाणां मनाग् रतिरूपजलक्षेपेऽपि तज्जलं कुत्रापि शुष्कं जातं, 'तथाऽपि तप्तता तु पूर्ववत्तादृशी', तादृश्येव स्थिता, ईषत्सुखाऽनुभवकालेऽपीन्द्रियाणां तथारूपे तापे सति किं सुखं ? न किमपि सुखं तु दुःखमेव ॥६७॥

-तापदुःखतामेव द्रढयति--

'प्राक्पश्चाच्चारतिस्पर्शात् पुटपाकमुपेयुषि—
इन्द्रियाणां गणे तापव्याप एव न निर्वृतिः ॥६८॥

टी० पुटपाकमुपेयुषि'=यत्रौषधीं क्षिप्त्वा समन्ताद्दाहो दीयते स पुटपाकः कथ्यते, तादृशे इन्द्रियाणां गणे सति, 'प्राक्पश्चाच्चारतिस्पर्शात्'=पूर्वं विषयसुखानुभवप्राप्तयेऽरतिमत्कप्रचण्डतापो भवेच्च तत्प्राप्त्यनन्तरं पुनस्तत्प्राप्त्यर्थकतीव्रेच्छाजन्यः प्रचण्डस्तापस्तूत्थित एवाऽस्ति, यथार्थतयेन्द्रियाणां गणः पुटपाकसमान एवाऽस्ति, येन समन्ततः प्रचण्डस्तापोऽनुभूयत एवाऽर्थात् तापव्याप्तिविशिष्टेऽक्षाणां गणे सति निर्वृतिः—शान्तिरेव नेति ॥६८॥

–सुखाऽनुभवकालेऽपि तापनिहतं मनः–—

'सदा यत्र स्थितो द्वेषोल्लेखः स्वप्रतिपन्थिषु ।
सुखाऽनुभवकालेऽपि तत्र तापहतं मनः ॥६९॥

टी० इन्द्रियाणां सुखाऽनुभवकालेऽपि 'यत्र स्वप्रतिपन्थिषु'=स्वसुखसाधनशत्रुरूपेषु दुःखसाधनेषु 'द्वेषोल्लेखः सदा स्थितः'=तीव्रद्वेषरूपाऽरुचिभावः सततं सदा स्थित एव भवति, तत्रैतद्द्वेषोल्लेखरूपसंक्लेशतापेन 'हतं मनः'=दग्धं पुनरपि दग्धं चित्तमवश्यं भवति, तत्र तादृशस्थितौ सत्यामिन्द्रियैः सुखानुभवः कथं क्रियतेऽर्थान्न क्रियत एवेति ॥६९॥

३–पुण्यजनितसुखे संस्कारदुःखता साध्यते–—

स्कन्धात् स्कन्धान्तरारोपे भारस्येव न तत्त्वतः ।
अक्षाऽऽह्लादेऽपि दुःखस्य संस्कारो विनिवर्त्तते ॥७०॥

टी० भारमुत्पाट्यैकस्मिन् स्कन्धे खिन्ने जाते तं भारं द्वितीयस्मिन् स्कन्धे स्थापयेत्तदैवं भासते 'यद् भारस्तु जाने दूरे गतः, परन्तु वस्तुतस्तद्भारसंस्कारस्तु न दूरे गतः अनया रीत्यैव 'अक्षाऽऽह्लादेऽपि'=इन्द्रियाणां विषयसुखोपभोगकालेऽप्येवं प्रतिभासतेऽतः परं दुःखं दूरीभूतमपि तु वस्तुतः स्वाऽऽत्मनि नवीनदुःखमालाया भूमिकैव विरच्यतेऽर्थाद् दुःखस्य संस्कारस्तु न दूरे जातः, सुखानु-

भवेन यो वासनासंस्कार उत्पन्नः, स भविष्यत्काले रागं स्मारयत्येव, ततो विषयान् प्रति रागो जायते, तथा स्थिते मनोयोगादियोगा विषयेषु प्रवर्त्तन्ते, सा प्रवृत्तिरशुभकर्माशयमुत्पादयत्येव, ततश्च जन्मजरादिदुःखानि प्राप्यन्ते, एव विषयसुखानुभवोद्भूतः संस्कारो दुःखस्यैव जनको भवत्येव, तत इन्द्रियसुखं मन्यमानानां जनानां तत्र सुखानुभवस्य भ्रम एव भवत्येवैवं कथ्यते यतो वस्तुतो दुःखस्य संस्कारो न नश्यत्येवेति ॥७०॥

(४) **पुण्यजनितसुखे स्वाभाविकदुःखता—**

'सुखं दुखं च मोहश्च, तिस्रोऽपि गुणवृत्तयः ।
विरुद्धा अपि वर्त्तन्ते, दुःखजात्यनिक्रमात् ॥७१॥

टी० अत्र पूर्वोक्ताः परिणामदुःखताद्यास्तिस्र औपाधिक्य आसन, अर्थात्तत्राऽन्यनिमित्तेन जनितपुण्यसुखे दुःखताऽऽसीत्, यदैषा चतुर्थी दुःखता स्वाभाविकी वर्त्तते, सत्त्वरजस्तम आद्यास्त्रयो गुणाः सन्ति, सुखं दुःख मोहश्च तिस्रो गुणवृत्तयः, सत्त्वगुणस्य कार्यं सुखं, रजोगुणस्य कार्यं दुःखं, तमोगुणस्य कार्यं मोहश्च, यदा त्रयो गुणाः समा भवन्ति तदा परस्परं विरुद्धा भवन्त्यर्थादेकस्याऽवस्थाने शेषौ द्वौ न तिष्ठतः, एतद्दृष्ट्या ते परस्परं विरुद्धाःकथ्यन्ते, परन्तु यावत्ते विषमाऽवस्थास्थायिनः स्युस्तदा ते त्रयो गुणा एकस्मिन्नेव स्थाने तिष्ठन्ति, एतस्यां स्थितौ यद्यपि सत्त्वगुणेन सुखाऽनुभवो भवति तथाऽपि तत्सुख-

मुद्भूतसत्त्वगुणेन, सांसारिकसुखाऽनुभवो न भवति, परन्त्वेतत्सुखानुभवं प्रत्यनुद्भूतरजस्तमोगुणावपि कारणे भवत एव, एवं भवनेनैतस्मिन् सुखे रजोगुणकार्यं दुःखं. तमोगुण कार्य भूतो मोहश्च मिलत एवाऽर्थादेतस्मिन् सुखे यथा सुखत्वमस्ति तथा दुःखत्वाऽद्यप्यस्त्येव, एवं सत्त्वाद्या गुणाः समावस्थायां परस्परं विरुद्धाः सन्तो विषमाऽवस्थायां सहैव त्रयस्तिष्ठन्ति, अर्थात् त्रयाणां कार्याणि सुखदुःखमोहरूपाणि युगपत् प्रादुर्भवन्ति, अतः सुखाऽनुभवकालेऽपि तत्सुखे दुःखत्व जातिस्तु वर्तत एवाऽनतिक्रमाद् , एवं स्वाभाविकी दुःखताऽपि पुण्यजसुखे सिद्धैवेति ॥७१॥

**सर्वोऽपि भोगविलासो भयहेतुर्विवेकिनाम्--**

**'क्रुद्धनागफणाभोगो–पमो भोगोद् भवोऽखिलः ।**
**विलासश्चित्ररूपोऽपि, भयहेतु विवेकिनाम् ॥७२॥**

टी० 'अखिलश्चित्ररूपोऽपि भोगोद् भवोविलासः'=समस्तो नानाविधता सम्पन्नोऽपि शब्दादिविषय-भोगजन्यः सुखाऽनुभवरूपविलासः, आपाततो दर्शनमात्रः सुन्दरोऽपि परिणामतो विवेकिनां 'क्रुद्धनागफणा भोगोपमः''=कोपाऽऽटोपपरीतस्य सर्पस्य फणानां विस्तारस्य सादृश्यं यस्य सोऽखिलभोगविलासो विवेक-बलशालिनां सज्जनशिरोमणीनां भयस्यहेतुरेवाऽर्थात् सर्वसांसारिकभोगविलासः क्रुद्धसर्पवद् भयङ्करो भासते विवेकिनाम् , सर्पतोऽपि महाभयङ्करःपापजनकोभोगविलासः, भोगतोऽतो भेतव्यम् ॥७२॥

—फलतः पुण्यपापयोरेकत्वं जानानस्य भवोदधिः सान्तः—

'इत्थमेकत्वमापन्नं, फलतः पुण्यपापयोः ।
मन्यते यो न मूढाऽऽत्मा, नाऽन्तस्तस्य भवोदधेः ॥७३॥

टी० श्रीग्रन्थकार उपसंहरन् कथयति=पुण्यस्य फलं सुखमपि परिणामादिभिश्चतुर्भिः कारणै दुःखरूपमेवाऽस्ति, तस्मात् पुण्यपापाऽऽत्मकयोः कर्मणोः फलाऽपेक्षयाऽभेदं निश्चयन् सन् पुण्यपापयोः कर्मणो र्द्वयोरेकत्वमेव भवति, एवं स्थितेऽपि ये ऽनया रीत्या तयोः फलस्याऽभिन्नतां न मन्यन्ते, ते पुण्यस्य फलं सुखत्वेन मत्वा पुण्यं पुनःपुनः कृत्वा संसारे संसरन्त्येव तेषां मूढाऽऽत्मनां संसारोऽन्तरहितो भवतीति ॥७३॥

—दुःखैकरूपयोःपुण्यपापयो र्भिन्न एवाऽऽत्मा—

'दुःखैकरूपयो र्भिन्नस्तेनाऽऽत्मा पुण्यपापयोः ।
शुद्धनिश्चयतः सत्य-चिदानन्दमयः सदा ॥७४॥

टी० पुण्यं च पापं च, पुण्यपापे द्वे एव दुःखैकफले सिद्धे एवाऽतः, शुद्धनिश्चयनयदृष्ट्याऽऽत्मा, पुण्यपापात्मककर्ममात्रतो भिन्नोऽस्ति, अयमात्मा तु 'सदा सत्यचिदानन्दमयः'=सत्यघनः, चिद्घनः आनन्दघनश्चात्मैव ॥७४॥

–आत्मनः सच्चिदानन्दरूपं चतुर्थदशाव्यङ्ग्यमावरणक्षयात्—

'तत् तुरीयदशाव्यङ्ग्यरूपमावरणक्षयात् ।
भात्युष्णोद्योतशीलस्य, घननाशाद्रवेरिव ॥७५॥

टी० नन्वात्मनः सच्चिदानन्दमयं स्वरूपं कथं नाऽनुभूयते ? इति चेद् , घातिकर्मनामकज्ञानावरणादीनां क्षयादुज्जागरनामकचतुर्थदशाव्यङ्ग्यं तत् सच्चिदानन्दरूपं भाति–प्रादुर्भावेन प्रकाशते यथा 'घननाशात्'=मेघनामकावरणक्षयात् , 'उष्णोद्योतशीलस्य रवेरिव'=उष्णस्वभावस्य प्रकाशस्वभावस्य च सूर्यस्य रूपं भाति तथाऽत्रापि विज्ञेयम् ॥७५॥

–सामान्यं तु चिदानन्दरूपं सर्वदशाऽन्वयि—

'जायन्ते जाग्रतोऽक्षेभ्यश्चित्रा धीसुखवृत्तयः ।
सामान्यं तु चिदानन्द-रूपं सर्वदशाऽन्वयि ॥७६॥

टी० 'जाग्रतोऽक्षेभ्यश्चित्रा धीसुखवृत्तयो जायन्ते'=द्रव्यनिद्रातो मुक्तस्याऽऽत्मनो, इन्द्रियजन्या नानाविधा बौद्धिकमानसिकसुखादिकानुभूतिरूपधीसुखवृत्तयो जायन्ते, तदाऽपि स्वाऽऽत्मनःसच्चिदानन्दमयं स्वरूपमस्त्येव, 'सामान्यं तु चिदानन्दरूपं सर्वदशाऽन्वयि'=आत्मनस्तु चिदाऽऽनन्दरूपं–चैतन्यादि-

रूपं सर्वासु दशासु, अन्वयि—अनुगतमत एव, सामान्यं—व्यापकं, चिदानन्दरूपस्य कुत्राऽपि काचिदपि बाधा—हानिर्न भवतीति ॥७६॥

—नाऽनुभूतिपराभूती अक्षजन्यचित्रधीसुखवृत्तिभिरात्मनः—

'स्फुलिङ्गैर्न यथा वह्निर्दीप्यते ताप्यतेऽथवा ।
नाऽनुभूतिपराभूती तथैताभिः किलाऽऽत्मनः ॥७७॥

टी० यथा स्फुलिङ्गैः—अग्निकणै र्वह्निर्न दीप्यते—न दीप्यमानो भवति, अथवेति—पक्षान्तरे न ताप्यते किञ्चिदपि न ताप्यमानं वस्तु भवति ।

'तथैताभिः किलाऽऽत्मनो नानुभूतिपराभूती'=स्फुलिङ्गस्थानीया अक्षजन्यचित्रधीसुखवृत्तयो ज्ञेयाः, एताभिरात्मनः कोऽनुभवः ? कः पराभवः ? को लाभः ? का हानिः ? अर्थान्नानुभूतिपराभूती भवतः

अतितुच्छमिन्द्रियसुखं कमप्यानन्दं न ददाति, किञ्च विषयवियोगजन्यं किञ्चिद् दुःखं, आत्मनः कञ्चिदपि पराभवं न तनोति, अर्थादाऽऽत्मा तु स्वकीयसच्चिदान्दरूपे सदा मग्नो भवतीति ॥७७॥

—अन्तरात्मनः सुषुप्तौ निरहंकृतं भानं शुद्धविवेकेऽतिस्फुटं भवति—

'साक्षिणः सुखरूपस्य, सुषुप्तौ निरहङ्कृतम् ।
यथा भानं तथा शुद्ध-विवेके तदतिस्फुटम् ॥७८॥

टी० स्वापसुषुप्तिजागरोज्जागरभेदाच्चतस्रो दशा भवन्ति, सुखरूपस्य साक्षिणः—साक्षाद् द्रष्टुरन्तराऽऽत्मनः सुषुप्तिदशायां यथा 'निरहंकृतं'=अहङ्कारशून्यं भानं भवति, तदेव भानमत्यन्तस्पष्टरूपेण 'शुद्धविवेके'=निर्मलतमविवेकदशायां भवतीति ॥७८॥

-शुद्धाऽशुद्धनिश्चयनयाभ्यां कस्याऽऽत्मा भोक्तेति पृथक्क्रियते--

'सच्चिदानन्दभावस्य, भोक्ताऽऽत्मा शुद्धनिश्चयात् ।
अशुद्धनिश्चयात् कर्म-कृतयोः सुखदुःखयोः ॥७९॥

टी० (१) शुद्धनिश्चयनयः=शुद्धनिश्चयनयाऽपेक्षया, आत्मा स्वसच्चिदानन्दभावरूपस्वरूपस्य भोक्ता-अनुभविता भवति (२) अशुद्धनिश्चयनयः-अशुद्धनिश्चयनयापेक्षया, कर्मकृतयोः सुखदुःखयो र्भोक्ताऽऽत्मा भवति, यतोऽशुद्धनिश्चयनयस्तु केवलमात्मानं निरुपाधिकज्ञानादिस्वरूपमात्रं न मन्वानः कर्मोपाधिकृतसुखदुःखादिपर्यायमयमपि मन्यते, शुद्धनिश्चयस्तु कर्मोपाधिकृत रागादिपर्यायमयं वा सुखादिपर्यायमयमात्मानं न मन्यते, अशुद्धनिश्चयनयस्तूपाधिकृतभावमयमात्मानं मन्यते, शुद्धाशुद्धनिश्चयनययोरभेदपरत्वमेवाऽनयो र्निश्चयत्वमस्ति, ज्ञानवानात्माऽथवा रागादिसुखादिमानात्मेति निश्चयनयपक्षे कोऽपि न मन्यते, तन्मयत्वं निश्चयनयो वदति, तद्वत्त्वं व्यवहारनयो वदतीत्यनयो र्भेदः सुतरां दृश्यते ॥७९॥

व्यवहारतः कर्मणोऽपि च स्रगादे र्भोगस्य भोक्ताऽत्मा—

'कर्मणोऽपि च भोगस्य स्रगादे र्व्यवहारतः ।
नैगमादिव्यवस्थाऽपि, भावनीयाऽनया दिशा ॥८०॥

टी० निरुपचरिताऽसद्भूतव्यवहारनयतस्तु कर्मणोऽपि चात्मा, भोक्ताऽस्ति, उपचरिताऽसद्भूतनयतस्तु स्रगादे र्भोगस्योपलक्षणतो भूषणादेरुपभोगस्याऽपि भोक्ताऽस्ति, एकशो भोग्यं भोगः, अनेकशो भोग्यमुपभोगः, इत्यनयो र्भेदः, व्यवहारनयस्तु भेदप्रधानोऽस्ति, अत एवाऽऽत्मनः कर्म, आत्मनः पुष्पादिकमित्यादयो भेदप्रधाना व्यवहाराः सम्पद्यन्ते, तत्राप्यात्मनोऽसद्भूतवस्तुरूपं कर्म, निरुपचरितत्वेनात्मीयं कर्मेति निरुपचरिताऽसद्भूतव्यवहारनयस्तु मन्यते, एष निरुपचरिताऽसद्भूतव्यवहारः, पुष्पमालामात्मीयां न मन्यते, यतः माऽऽत्मन उपचारतोऽसद्भूतं वस्त्वस्ति यदोपचरिताऽसद्भूतव्यवहारस्तु पुष्पमालामप्यात्मनो मन्यते, अत एव निरुपचारिताऽसद्भूतव्यवहारनयमतेनाऽऽत्मा, कर्मणो भोक्ता भवति,यदोपचरितासद्भूतव्यवहारनयतस्त्वात्मा, पुष्पमालाऽऽदिकस्यापि भोक्ता भवति 'नैगमाऽऽदि व्यवस्थाऽपि भावनीयाऽनया दिशा'=नैगमादिनयेभ्योऽप्याऽऽत्मनो भोक्तृत्वविषयिणी विचारणा कर्त्तव्या तथाहि=(१) नैगमनयतो दूरस्थस्य वा समीपस्थस्य, पौद्गलिकस्याऽऽत्मिकस्य कस्यचिदपि भोग्यवस्तुन आत्मा, भोक्ताऽस्ति (२) संग्रहनयतः=सर्वभोग्यवस्तुसङ्ग्रहरूपस्यैकस्यैव भोगस्याऽऽत्मा, भोक्ताऽ-

स्तीति (३) व्यवहारनयसम्मतं भोक्तृत्वं पूर्वोक्तमेव (४) ऋजुसूत्रनयतः=यः पदार्थो यदा भुज्यमानोऽस्ति, तस्य पदार्थस्य तदा स आत्मा भोक्ताऽस्ति, (५) शब्दनयतः=सामान्यतः पुष्पमालाऽऽदिकमानाय्य तत्तत्पदार्थस्याऽऽत्मा भोक्ता भवति, (६) समभिरूढनयतः=पुष्पमालायाः पृथक् पृथग् पुष्पाणां पृथक् पृथग् भोक्ताऽस्ति (७) एवंभूतनयतः=यदा यस्याः पुष्पमालाया अथवा तत्पुष्पाणां साक्षाद् भोगः क्रियमाणः स्यात्तदाऽऽत्मा, तत्पदार्थस्य भोक्ताऽस्ति ॥८०॥

–कर्त्ताऽपि शुद्धभावानामात्मा, शुद्धनयाद् विभुः–

'कर्त्ताऽपि शुद्धभावानामात्मा, शुद्धनयाद्विभुः ।
प्रतीत्य वृत्तिं यच्छुद्धक्षणानामेष मन्यते ॥८१॥

टी० शुद्धनयाद् विभु ( सकलशुद्ध–स्वस्वरूप–व्यापी ) आत्मा, शुद्धभावानां कर्त्ताऽप्यस्ति, यत्=यतः, एषः–शुद्धनयः, 'शुद्धक्षणानां वृत्तिं प्रतीत्य मन्यते'=आत्मनो वर्त्तनां पर्यायमाश्रित्येदृशं मतं धारयते इदमत्रहृदयम्=शुद्धनयः पर्यायार्थिकनयोऽस्ति, अर्थात् शुद्धक्षणानां (आत्मनो) पर्यायानपेक्ष्य विचारयते, पर्यायस्तु प्रतिक्षणं स्वयमेव स्वशुद्धभावानां कर्त्ता (उत्पादको) भवतीति, अन्यत्रोक्तं हि निश्चयतो यद्यात्मा, परद्रव्यस्वरूपकर्त्ता भवेत्तदैव आत्मा, नियमतः परद्रव्यमयो भवेद् , अपि तु परद्रव्य-

मयस्तु न भवत्येवात्मा, यतः किमपि द्रव्यं परद्रव्यमयं। भवेत्तदा तद्द्रव्यस्य ध्वंसो भवत्येवेति नियमोऽस्ति अर्थादेवं भवने आत्मद्रव्यस्य नाशभवनाऽऽपत्तिरागच्छेत्, तत आत्मा, परद्रव्यस्वरूपस्य कर्त्ता नास्ति, शुद्धभावमात्रस्य कर्त्ताऽस्तीति ॥८१॥

—आत्मा, शुद्धस्वभावानां जननाय प्रवर्त्तते—

'अनुपप्लवसाम्राज्ये विसभागपरिक्षये ।
आत्मा, शुद्धस्वभावानां, जननाय प्रवर्तते ॥८२॥

टी० 'अनुपप्लवसाम्राज्ये'=भ्रान्तिरूपोपद्रवाऽभावरूपसाम्राज्ये सति, अर्थाद् यदा भ्रान्तदशाया दूरे गमनं स्याच्चाऽभ्रान्त-सत्यपदार्थज्ञानस्याऽऽत्मन उपरि साम्राज्यं व्यापकं भवेत् यदा 'विसभाग-परिक्षये'=विसभाग-विभावदशायाः—कषायादिस्वरूपस्याऽऽत्मनो धारायाः क्षयो भवेत्तदाऽऽत्मा, शुद्धस्वभावानां (समान—भागसंततीनां) जननाय प्रवर्त्तते ॥८२॥

—संसारभवान्तकारणाऽशुद्धशुद्धचित्तस्य वर्णनम्—

'चित्तमेव हि संसारो, रागक्लेशादिवासितम् ।
तदेव तैर्विनिर्मुक्तं, भवान्त इति कथ्यते ॥८३॥

टी० हीति निश्चये, 'रागक्लेशादिवासितं चित्तमेव संसारः'=निश्चयनयतो रागद्वेषमूलककर्मादि-रूपक्लेशादिवासनासहितं चित्तमेव, न तु चित्तभिन्नं विभावरूपं संसारनामकतत्त्वम्, 'तै विनिर्मुक्तं तदेव भवान्त इति कथ्यते'=रागक्लेशादिभि विनिर्मुक्तं चित्तमेव भवान्तरूपो मोक्षः कथ्यते, अर्थाद् यथा यथा रागक्लेशादिशून्या चेतना भवेत्तथा तथाऽऽत्मा, ज्ञानादिशुद्धभावानां कर्त्ता भवतीति ॥८३॥

—यश्च चित्तक्षणः क्लिष्टो नाऽसावाऽऽत्मा विरोधतः—

-यश्च चित्तक्षणः क्लिष्टो नाऽसावात्मा विरोधतः ।
अनन्यविकृतं रूप-मन्वर्थं ह्यदः-पदम् ॥८४॥

टी० 'अनन्यविकृतं रूपं'=नाऽन्येन विकृतं–विकृतिमद् रूपं–स्वरूपमवस्थाविशेषो भवति, अत्राऽनन्यविकृतं रूपं चित्तं, चेतना, आत्मेति कथ्यते एवं चित्तपदमन्वर्थं–अर्थगम्भीरं वर्त्तते, डित्थडवित्थाऽऽदिपदवन्नार्थरहितमस्ति, अत्र शब्दनयः कथयति=अत एव यः शुद्धः–असंक्लिष्टः–निर्विकारो भवेत्स एवाऽऽत्मा, कथ्यते यश्चित्तक्षणः–आत्मा, रागादिक्लेशैः संक्लिष्टो जातो भवेत्, स आत्मा–चित्तमेव न कथ्यते, अर्थादात्मा, च स क्लेशाऽभिभूत इति द्वयं विरुद्धं, एकस्मिन विरुद्धं द्वयं न संभवति, अशुद्ध-आत्मा, आत्मा नेति नोमतं, शुद्ध आत्मैवाऽऽत्मेत्यस्माकं मतमिति ॥८४॥

॥४५२॥

—अशुद्धरूप आत्मेति मिथ्यावच इति शब्दनयः—

'श्रुतमनुपयोगश्चेत्येतन्मिथ्या यथा वचः ।
तथाऽऽत्माऽशुद्धरूपश्चे-त्येवं शब्दनया जगुः ॥८५॥

टी० 'यथा श्रुतमनुपयोगश्चेत्येतन्मिथ्यावचः'=यथा श्रुतज्ञानं नोपयोगः—अनुपयोगः, अर्थात्, श्रुतज्ञानवान् उपयोगशून्यो न सम्भवति, तथाऽपि कोऽपि जल्पेद्, 'श्रुतमनुपयोगश्चेति वचो मिथ्या-असत्यं भवति, तथाऽऽत्माऽशुद्धरूपश्चेत्येवं शब्दनया जगुः'=तथा य आत्मा स्यात् स रागादिक्लेशतोऽशुद्धरूपश्चेत्येवं कथनं मिथ्यावचोरूपमित्येवं शब्दनयाः—शब्दप्रधाना नया जगुः—कथितवन्त इति ॥८५॥

—आत्मा, शुद्धपर्यायरूपः शुद्धस्वभावकर्त्ता—

'शुद्धपर्यायरूपस्तदात्मा, शुभस्वभावकृत् ।
प्रथमाऽप्रथमत्वादि—भेदोऽप्येवं हि तात्त्विकः ॥८६॥

टी० 'शुद्धपर्यायरूपस्तदाशुद्धस्वभावकृत्'=तस्मात् कारणाद् यदाऽऽत्मा शुद्धपर्यायरूपोऽस्ति तत एव शुद्धस्वभावानां कर्त्ताऽस्ति, पर्यायाऽऽत्मक आत्मा, प्रतिक्षणं नवो नव उत्पद्यते, 'प्रथमाऽप्रथमत्वादिभेदोऽप्येवं हि तात्त्विकः'=शास्त्रेष्वन्यत्र प्रथमसमयसिद्धोऽप्रथमसमयसिद्ध इत्यादिर्यो भेदः पतति,

तस्य निरूपणं द्रव्यार्थिकनयदृष्टया तत्र तत्र विहितमस्ति अथत्राऽमुकसमयविवक्षया तत्रैव समये सिद्धानि सर्वाण्यात्मद्रव्याणि प्रथमसमयसिद्धानि कथ्यन्ते च तद्विवक्षितसमयादन्यसमयेषु सिद्धान्यात्मद्रव्याण्य प्रथमसमयसिद्धानि कथ्यन्ते, इदानीमत्राऽऽत्मद्रव्येषु यः प्रथमाप्रथमसिद्धत्वविषयको भेदः पातितः स कालस्य विवक्षया पतितोऽस्ति एवमत्र सिद्धत्वेन द्रव्यत्वेन सर्वेषां सिद्धानां समानत्वेऽपि कालोपचारेण तेषु सिद्धद्रव्येषु भेदः पातितः अर्थाद् द्रव्यार्थिकनयदृष्टया भवन्नेतादृशः प्रथमाऽप्रथमसिद्धत्वभेदः कालोप चारिकः सञ्जातो यदा पर्यायार्थिकनयदृष्टया तु शुद्धपर्यायरूपो य आत्मा, यदा स्यात्तदा तत्र प्रथम-समयसिद्धत्वमायाच्चाऽनन्तरं स एवाऽऽत्मा, द्वितीयादिक्षणे नास्ति, किन्त्वपरशुद्धपर्यायाऽऽत्मका आत्मानः सन्ति, एतेषु सर्वेस्वात्मस्वप्रथमसमयसिद्धत्वमायात् , एवमत्राऽमुककालविवक्षाविधानं नास्ति, तस्मादेतत्पर्यायार्थिकनयदृष्टयैव शुद्धपर्यायस्वरूपोऽयमात्मेति, अत एव प्रथमाप्रथमत्वादिभेदस्तात्त्विको न त्वौप चारिको भवतीति ॥८६॥

–द्रव्यार्थिकनयतः शुद्धस्वभावकर्त्ताऽऽत्माऽस्तीति दिगम्बरीयमतखण्डनम्–

'ये तु दिक्पटदेशीयाः, शुद्धद्रव्यतयाऽऽत्मनः ।
शुद्धस्वभावकर्तृत्वं, जगुस्तेऽपूर्वबुद्धयः ॥८७॥

टी० प्राक्तनश्लोकेषु षट्सु, अस्माभिर्ज्ञातं च यद् 'शब्दनयापेक्षयाऽऽत्मा, शुद्धस्वभावकर्त्ता भवति' परन्तु शुद्धनिश्चयनयतः=शुद्धद्रव्यार्थिकनयत आत्मा, शुद्धस्वभावस्याऽपि कर्त्ता भवितुं नार्हति, तथाऽप्यत्र दिगम्बरीयाः केचित् कथयन्ति, यत् 'आत्मा, शुद्धद्रव्यार्थिकनयतः शुद्धस्वभावकर्त्ताऽस्ति' इत्येतद् दिगम्बरीयाणां कथनं मत्यतः स्वेषामपूर्वबुद्धिमत्तायाः स्पष्टं प्रदर्शनं कृतमिति दृश्यते ॥८७॥

—आगामिषु षट्सु श्लोकेषु दिगम्बरीयमतखण्डनम्—

'द्रव्यास्तिकस्य प्रकृतिः, शुद्धा सङ्ग्रहगोचरा ।
येनोक्ता सम्मतौ श्रीमत्सिद्धसेनदिवाकरैः ॥८८॥

टी० श्रीमद्भिर्भगवद्भिः सिद्धसेनदिवाकरसूरीश्वरैः 'सम्मतौ'=सम्मतितर्कग्रन्थे कथितमस्ति यद् 'सङ्ग्रहनयो द्रव्याऽऽस्तिकनयस्य शुद्धां प्रकृतिं प्रतिपद्यते' अर्थाद् द्रव्यार्थिकनयस्य या शुद्धा प्रकृतिः सा संग्रहनयेन विषयीक्रियते ॥८८॥

—तन्मते च न कर्तृत्वं भावानां सर्वदाऽन्वयात्—

'तन्मते च न कर्त्तृत्वं भावानां सर्वदाऽन्वयात् ।
कूटस्थः केवलं तिष्ठत्यात्मा साक्षित्वमाश्रितः ॥८९॥

॥४५५॥

टी० शुद्धप्रकृतिमद्ग्राहकसङ्ग्रहनयस्य मते तु 'आत्मा, सदाशुद्धस्वभाव एव कथितोऽस्ति, यतः 'आत्मा शुद्धस्वभाव एव एक एव वस्तु वर्त्तते, आत्मा, सर्वदा भावाऽभिन्नोऽस्ति, एवं स्थित्या शुद्धस्वभावस्य कर्त्तृत्वं शुद्धद्रव्यार्थिकनयेन तु न शक्यम्, किञ्चैतन्मते त्वाऽऽत्मा, कूटस्थनित्यः—अप्रच्युताऽनुत्पन्न स्थिरैकस्वभावरूपः, अर्थात् साक्षित्वमात्रमाश्रितः कूटस्थः केवलं तिष्ठत्यात्माऽतः कारणादाऽऽत्मन्यस्मिन् शुद्धस्वभावस्योत्पत्तिक्रियाया असम्भव एवेति ॥८९॥

—कर्त्तुं व्याप्रियते नाऽयमुदासीन इव स्थितः—

'कर्त्तुं व्याप्रियते नायमुदासीन इव स्थितः ।
आकाशमिव पङ्केन लिप्यते न च कर्मणा ॥९०॥

टी० शुद्धद्रव्यार्थिकमते तु सर्वथाऽऽत्मोदासीनोऽस्ति, स किमपि कर्त्तुं न प्रवर्त्तत एव, यथाऽऽकाशं सर्वथा निष्क्रियमस्ति, तत आकाशे पङ्कलेपो न लगति, तथा सर्वथा निर्व्यापार आत्मनि कर्मलेपो न लगतीति ॥९०॥

—स्वरूपं तु न कर्त्तव्यं ज्ञातव्यं केवलं स्वतः—

'स्वरूपं तु न कर्त्तव्यं, ज्ञातव्यं केवलं स्वतः ।
दीपेन दीप्यते ज्योति-र्न त्वपूर्वं विधीयते ॥९१॥

टी० अनेन द्रव्यार्थिकशुद्धसङ्ग्रहनयेनैवं कथयितुं न शक्यते एव यत् 'आत्मा स्वरूपस्य कर्त्ताऽस्ति' यतः स्वरूपं तु तन्मते कर्त्तव्यं नाऽस्त्येव, तत्तु स्वतः केवलं ज्ञातव्यमेवाऽस्ति, यथा दीपेन दीप्यते ज्योतिरपि तु न किञ्चिन्नवं क्रियते-नत्वपूर्वं विधीयते एवमात्मा, ज्ञानाऽऽत्मक एव तिष्ठति, स तु किञ्चिन्नवं न करोत्येव, तस्य नवीनं कारणं नास्त्येव ॥११॥

–न च हेतुसहस्रेणाऽप्यात्मता स्यादनाऽऽत्मनः—

'अन्यथा प्रागनात्मा स्यात्, स्वरूपाऽननुवृत्तितः ।
न च हेतुसहस्रेणाऽप्यात्मता स्यादनात्मनः ॥१२॥

टी० यद्यात्मा, स्वरूपस्य कर्त्ता भवेत्तदा यत्र क्षणे तेनाऽऽत्मना तस्याऽऽत्मनः स्वरूपमुत्पादितम्, ततः पूर्वक्षणेषु तु तत्स्वरूपस्याऽनुवृत्ति विद्यमानता, नास्त्येवैवं निश्चीयमाने सति, पूर्वक्षणेषु निःस्वरूपः स आत्मा जडो भवेत्ततश्च हेतूनां सहस्रेणाऽप्यात्मता न स्यादनात्मनः एतदापत्तिनिरासायाऽऽत्मा, शुद्धद्रव्यार्थिकनिश्चयनयतः स्वरूपस्य कर्त्तेति न मतिः स्थाप्येति ॥१२॥

–शुद्धद्रव्यार्थिकनयमतेन शुद्धभावं बिभर्त्यात्मा—

'नये तेनेह नो कर्त्ता, किन्त्वात्मा शुद्धभावभृत्—
उपचारात्तु लोकेषु, तत्कर्तृत्वमपीष्यताम् ॥१३॥

टी० 'नये तेनेह नो कर्त्ता'=पूर्वोक्तेन तेन कथनेनास्मिन शुद्धद्रव्यार्थिकनिश्चयनये, आत्मनःशुद्ध-भावस्य, कर्त्तृत्वं नेष्टं, केवलमात्मा शुद्धमात्रं बिभर्त्त्येव, परन्तु 'लोकेषूपचारात्तु तत्कर्त्तृत्वमिष्यताम्'= व्यवहारनयादितो लोकेषु तेषां–शुद्धभावादीनां कर्त्तृत्वमपि (भर्त्तृत्वं त्वस्त्येवाऽपिशब्दार्थः) इष्यतां–इष्टं भवतु अर्थादेवं निश्चितं जातं यद् 'आत्मा, शब्दनयैः शुद्धस्वभावस्य कर्त्ता भवति, परन्तु शुद्धद्रव्यार्थिक-निश्चयनयतो नैव स्वरूपस्य कर्त्तेति ॥१३॥

( अथेद पूर्वोक्तं विधानं मनसिकृत्य ग्रन्थकारो महर्षिः, पर्यायास्तिकऋजुसूत्रादिनयद्वारा विविध-रीत्याऽऽत्मनि तत्तत्कर्त्तृत्वं दर्शयति, किञ्च तेन सहाऽऽत्मनि तदा तदा भिन्नभिन्नधर्मा भवन्ति वा प्रादु-र्भवन्तीति तद्विषयमग्यागामिषु श्लोकेषु दर्शयिष्यति इत्यवतरणिका)

–उत्पत्तिमात्मधर्माणां विशेषग्राहिणो जगुः—

'उत्पत्तिमात्मधर्माणां, विशेषग्राहिणो, जगुः ।
अव्यक्तिरावृतेस्तेषां, नाभावादिति का प्रमा ॥१४॥

टी० विशेषाः पर्यायाः, विशेषमात्रग्रहणशीलाः, विशेषग्राहिणः–पर्यायाऽऽस्तिकनयाः कथयन्ति यद् 'आत्मनि सम्यग् दर्शनादयो गुणा नवन्वेनोत्पद्यन्ते' सामान्यग्राहिणो द्रव्यास्तिकनयाःकथयन्ति यद् 'आत्मनि सदा सम्यग्दर्शनादयो गुणाः सन्ति, तेषां गुणानां व्यक्तत्वेनाऽदर्शनस्य कारणन्तु तेषां

॥४५८॥

गुणानामुपरिष्टात्', आगतं कर्माऽऽवरणमस्ति पर्यायाऽऽस्तिकनयास्तु—पूर्वं जीवस्य संसारनामकपर्याये तद्गुणाऽभावप्रयुक्तं तद्गुणाऽदर्शनं, अथ जीवस्य सिद्धत्वपर्याये ते गुणा उत्पन्ना अत एव ज्ञाता इत्यस्माकमुपपादनं प्रति न कोऽपि प्रतिवादः प्रामाणिकः. अत एव न वाच्यम् 'पूर्वं गुणा आसन्नपि तु न दृश्यमाना ज्ञायमाना आसन्, तत्राऽदर्शने आवरणं कारणमस्ति ॥९४॥

—आत्मा ध्रुवोऽस्ति, तद्भिन्नं सन्ताननामकवस्तु नास्ति, तत आत्मनो ज्ञानादिकगुणा उत्पादशीला इति मन्तव्यम्—

'सत्त्वं च परसन्ताने, नोपयुक्तं कथञ्चन ।
सन्तानिनामनित्यत्वात्सन्तानोऽपि न च ध्रुवः ॥९५॥

टी० (मनसि धार्यतां चेदं=आत्मसत्कज्ञानादिगुणाननित्यत्वेन वदन्तो वादिनः, आत्मानं तु नित्यमेव मन्यन्ते तथा तस्य ज्ञानादिगुणान् बौद्धानामिव क्षणिकत्वेन न मन्यन्ते) आत्मगुणोत्पत्तिवादिनः, बौद्धान् प्रति कथयन्ति यथाहिं=भवन्तो ज्ञानादिगुणान् क्षणिकत्वेन मन्यन्ते, ततस्तेषां निरन्वयनाशतः पौर्वापर्यक्रमस्मरणादिकं नोपपद्यते, तदुपपादयितुं भवन्तो ज्ञानादिसन्तानं कल्पन्ते, एष सन्तानोऽस्मदभिमताऽऽत्मपदार्थतो भिन्नोऽस्ति, भवन्तो ज्ञानादिसन्तानं स्वीकुर्वते, तथापि, आत्मानं न प्रतिपद्यन्ते इति

॥४५१॥

बौद्धमतप्रदर्शनम् । अथ बौद्धमतखण्डनं तथाहि–भवद्भिरात्मनः परो यो ज्ञानादिसन्तानोऽभिमतः, तस्य कोऽप्यत्रोपयोगो नास्ति, ज्ञानादिसन्तानोऽस्त्यर्थाज्ज्ञानादिसन्तानविषयकसत्तास्वीकारतो न किमपि फलं वर्त्तते, यतः सन्ताननामकं किमपि वस्तु नास्त्येव, तथापि सन्तानस्य वस्तुत्वेन स्वीकारे प्रश्नो भवति, किं सन्तानः क्षणिकोऽस्ति वाऽक्षणिकः ? यदि क्षणिकः स स्यात्तदा ज्ञानादिगुणानामिव स सन्तानोऽपि क्षणजीवी जातः, तादृशः सन्तानो ज्ञानादीनां पौर्वापर्यक्रमं कथमुपपादयितुमलंस्यात् ? यदि सन्तानोऽक्षणिकस्तदा भवतां क्षणिकवादः क्षणिकः सन् विनष्टो भविष्यति, एवमुभयथा परसन्तानविषयकसत्ताऽनावश्यक्येव, किञ्च सन्तानिज्ञानादिगुणा अनित्याः सन्ति, ततः सन्तानोऽप्यनित्यः स्यादर्थादेतादृशाऽनित्यसन्तानतः प्रतिक्षण निरन्वयनाशशालिज्ञानाऽऽदिगुणानां मध्ये पौर्वापर्यभावः कथं घटेत ? तस्मात् परसन्तानसत्ताऽनिच्छनीया, सन्तानाऽभावे ज्ञानादिगुणानिष्ठसन्तानित्वाभावः सुतरां सिद्धः । इदमत्र हृदयम्=आत्मा, ध्रुवोऽस्ति तद्भिन्नं-परं किमपि सन्तानवद्वस्तु नास्ति, तदात्मनो ज्ञानादिकगुणा उत्पादशीलाः सन्ति, एतावदेव सन्तव्यमिति ॥९५॥

–नित्यता नाऽऽत्मधर्माणां व्योमदृष्टान्तबलादपि––

'व्योमाऽप्युत्पत्तिमत्तत्-दवगाहात्मना ततः ।
नित्यता नाऽऽत्मधर्माणां, तद्दृष्टान्तबलादपि ॥९६॥

टी० 'तत्तदवगाहाऽऽत्मना व्योमाऽप्युत्पत्तिमत्'=आकाशद्रव्यमपि (नित्यद्रव्यरूपमाकाशद्रव्यमपि) तत्तद्घटादिद्रव्याणामवगाहरूपेण—अवगाहदानरूपेणोत्पत्तिमद् भवति [ घटाकाशमुत्पद्यते, पटाकाशं विनश्यति च) एवमाकाशस्य दृष्टान्तबलादपि, आत्मधर्मा ज्ञानादिकगुणाः सविषयका नित्या न सन्ति परन्तूत्पत्तिमन्तोऽनित्याः सन्ति (अमुकपर्यायविषयाऽऽत्मनोत्पद्यते, अमुकपर्यायविषयात्मना विनश्यति च)॥९६॥

—ऋजुसूत्रनयस्तत्र कर्त्तृतां मन्यते—

'ऋजुसूत्रनयस्तत्र, कर्त्तृतां तस्य मन्यते ।
स्वयं परिणमत्याऽऽत्मा, यं यं भावं यदा यदा ॥९७॥

टी० आत्मनः कर्त्तृत्वविषये पर्यायार्थिक-ऋजुसूत्रनयस्तु कथयति यद् 'स्वयं परिणमत्यात्मा, यं यं भावं यदा यदा'=यं यं भावं यदा यदा स्वयमेव परिणमति तदा तदा तं तं भावं स आत्मा करोत्येवेति ॥९७॥

—ऋजुसूत्रनयः परभावानां कर्त्तृत्व नाऽभ्युपगच्छति—

'कर्त्तृत्वं परभावाना—मसौ नाऽभ्युपगच्छति ।
क्रियाद्वयं हि नैकस्य, द्रव्यस्याऽभिमतं जिनैः ॥९८॥

॥४६१॥

टी० एष ऋजुसूत्रनामकः पर्यायार्थिकनय आत्मनि स्वभावानां कर्त्तृत्वमभ्युपगच्छति, परभावानां पौद्गलिकभावानां कर्त्तृत्वमात्मनि नाऽभ्युपगच्छति, यतो यद्यात्मा, स्वभावानां च परभावानां, उत्पत्ति क्रियारूपकर्त्तृत्ववानस्तीति मते 'एकस्मिन्नात्मनि क्रियाद्वयस्यापत्तिरागच्छेत्, किञ्च जिनैः–सर्वज्ञैरेकस्य द्रव्यस्य क्रियाद्वयं नाभिमतमर्थादात्मन्येकस्मिन् स्वभावक्रियापरभावकर्त्तृत्वरूपक्रियाद्वयं जिनैर्नाभिमतमिति, अत एवात्मनि स्वभावकर्त्तृत्वं मन्यतेऽयं नयः ॥९८॥

-ऋजुसूत्रनये स्वाऽऽत्मद्रव्ये नवनवपर्यायभवनरूपक्रिया—

'भूतिर्या हि क्रिया सैव, स्यादेकद्रव्यसन्ततौ ।
न साजात्यं विना च स्यात, परद्रव्यगुणेषु सा ॥९९॥

टी० अत्रेदं स्मरणीयं यद् एतस्य ऋजुसूत्रनयस्य मते पर्यायाऽऽत्मक आत्मा प्रतिक्षणं विनाश्यस्ति, तस्मिन्नात्मनि या स्वभावोत्पत्तिरूपक्रिया, कथिता पूर्वश्लोके सा क्रिया–स्वाऽऽत्मद्रव्यस्य नवनवपर्यायाऽऽत्मना, या भूति भवनं, सैवाऽस्ति, एषा क्रिया, एकस्याऽऽत्मद्रव्यस्यैव सन्ततौ भवति, प्रत्येकक्षणाऽवच्छेदेनात्मद्रव्ये, स्वद्रव्यत्वमस्ति, अर्थात स्वद्रव्यत्वजात्यपेक्षया, तत्सर्वक्षणसम्बन्धिन्यात्मद्रव्ये साजात्यं वर्तते, यदा परपौद्गलिकद्रव्यगुणे तु स्वात्मद्रव्यत्वस्य साजत्यं नास्ति, तस्मात्तादृशं साजात्य विना तस्य परद्रव्यस्य तथा परद्रव्यपर्यायाणां कर्त्तृत्वं स्वात्मनि न घटमानमस्तीति ॥९९॥

–आत्मनः परभावाऽकर्त्तृत्वे कथं हिंसादीनामुपपत्ति र्भवेद्––

'नन्वेवमन्यभावानां, न चेत्कर्त्ता परो जनः ।
तदा हिंसादयादान–हरणाद्यवस्थितिः ॥१००॥

टी० शङ्का=यद्यनया रीत्या परभावानां कर्त्ताऽऽत्मा, न भवेदर्थान्न मात्रस्वभावानामेव कर्त्ताऽऽत्मा भवेत्तदा परद्रव्याऽपेक्षया हिंसा-दया-दान-हरणादिभावानां कर्त्तृत्वं स्वाऽऽत्मनि मतमस्तीति लौकिकी व्यवस्था वर्त्तते साऽनुपपन्ना भविष्यति तस्य किं प्रत्युत्तरं ? एवं मतस्थितौ परद्रव्यगतहिंसादिक्रियायाः कर्त्ताऽऽत्मा, न भवेत्तदा हिंसादिकर्त्तारं लक्ष्यीकृत्याऽमुको हिंसको दातेत्यादि कथनस्यानुपपत्तिरेव स्याद् ! भवन्मते किं कोऽपि हिंसको नास्ति ? किं कोऽपि चौरो नास्ति ? किं कोऽपि दाता नास्ति ? किञ्च यद्यात्मा, परस्य हिंसादिकर्मकुर्व्वन्नस्ति तदा तस्य कर्मणो दुर्गत्यादिकफलमपि स कथं प्राप्स्यति ? अर्थाद् . हिंसादिकस्याऽव्यवस्थिति र्भाविनीति ॥१००॥

–स्वगतं कर्म स्वफल नातिवर्त्तते––

'सत्यं पराश्रयं न स्यात्, फलं कस्याऽपि यद्यपि ।
तथाऽपि स्वगतं कर्म, स्वफलं नाऽतिवर्त्तते ॥१०१॥

टी० सत्यमिति स्वीकारे, यद्भवद्भिरुक्तं, तत्सत्यं यत् 'पर-वध्यद्रव्यगतहिंसादि भवति, तस्य साक्षात् कर्त्ताऽऽत्मा नास्ति, तस्मादेतस्य परस्य हिंसादेः फलं किञ्चिदपि स्वात्मनि नायाति, तथाप्येतस्माद् हिंसादिकादात्मनि यः शुभाऽशुभात्मकपरिणामो जायते, ततः कर्म समुत्पद्यते तस्य फलं न पराश्रयं स्यादर्थात् पराश्रितहिंसादिक्रियाकाले जायमानकर्मपरिणामेभ्यः समुत्पन्नमानं कर्म स्वात्मन्येवाऽस्ति तदा तत्र तस्य फलमपि भवेदेवेति ॥१०१॥

-हिनस्ति न परःकोऽपि निश्चयान्न च रक्षति--

'हिनस्ति न परः कोऽपि, निश्चयान्न च रक्षति ।
तदाऽऽयुःकर्मणो नाशे, मृतिर्जीवनमन्यथा ॥१०२॥

टी० 'निश्चयात्परः कोऽपि न हिनस्ति च कोऽपि परो न रक्षति'=निश्चयनयाऽभिप्रायेण कोऽपि प्राणी कमपि परं प्राणवियुक्तं कर्त्तुं न समर्थोऽस्ति च कमपि परं प्राणिनं कोऽपि प्राणी जीवनरक्षणप्रवणो न भवति, यतो यदा यस्याऽऽयुःकर्मणो नाशो भवति तदा तस्य मृतिरेव-प्राणवियोगो भवत्येवाऽन्यथा आयुःकर्मणः सत्तायां प्राणयोगरूपं जीवनं वर्त्तते अर्थात्, हिंसादिविषयिणी लौकिकी व्यवस्था कथं स्यात्? ॥१०२॥

-फलं विचित्रमाप्नोति, परापेक्षां विना पुमान् ।

'हिंसादयाविकल्पाभ्यां, स्वगताभ्यां तु केवलम् ।
फलं विचित्रमाप्नोति, पराऽपेक्षां विना पुमान् ॥१०३॥

टी० यदा हिंसाऽथवा दया क्रियते तदाऽऽत्मनि हिंसाया वा दयायाः परिणाम उत्पद्यते च स परिणाम एव सदसत्फलानि तमात्मानं दर्शयति, 'पराऽपेक्षां विना पुमान्, फलं विचित्रमाप्नोति'=अत्र परद्रव्यस्य काऽप्यपेक्षा नास्त्येवाऽर्थात् कोऽपि कमपि न हिनस्ति, कोऽपि कमपि न रक्षति, तथाऽपि हिंसकस्य रक्षकस्य वा हिंसाया वा रक्षायाः फलं यद् भवति, तत्तु तादृशतादृशपरिणामद्वारैव भवति, परद्रव्यस्य भावाऽभावयोरपि हिंसादयादिविकल्परूपपरिणामो भवेत्तदा हिंसादीनां सदसत्फलं भवत्यवश्यमेवेति ॥१०३॥

-प्रमादियतमानयोरेव शरीरिणामवधवधयोर्हिंसादये भवतः—

'शरीरी म्रियतां मा वा, ध्रुवं, हिंसा प्रमादिनः ।
दयैव यतमानस्य वधेऽपि प्राणिनां क्वचित् ॥१०४॥

टी० निश्चयनयवादी वदति, यत् सम्मुखस्थो जीवो म्रियतां वा मा म्रियतां, परन्तु प्रमादी—कषाय-

विषयविकथानिद्रादिपञ्चकयुक् प्रमादी स्यात्तस्य त्ववश्यं हिंसापापं लगत्येव, यतस्तस्य तदा कषायादि प्रमादोऽस्ति, प्रमादः स्वफलं प्रमादिनं प्रापयत्येव किञ्चाऽकस्मात्कदा शरीरी म्रियते तदापि यो यतनाया उपयोगधर्मे परिणत आत्माऽस्ति, तस्य तु दयायाः फलं भवति, तस्मात्तदा स तु दयालुरेवाऽभिधीयते, एतद् विवेचनत इदं फलितं भवति यद् हिंसादिपरिणाम एव हिंसादिरस्ति, तत्फलप्राप्तिरस्ति परन्तु हिंसादितत्फलप्राप्तिः परव्यक्तिघातादिस्वरूपक्रियातो नास्ति, तस्मादथात्मा, हिंसादिक्रियायाः कर्त्तैव नास्ति, तथाऽपि तादृशतादृशपरिणामस्य कर्त्ताऽस्ति, ततः परिणामाऽनुसारेण सदसत्फलस्य भोक्ता भवतीत्येतत् सुनिश्चितमिति ॥१०४॥

—परस्य युज्यते दानं हरणं वा न कस्यचित्—

'परस्य युज्यते दानं, हरणं वा न कस्यचित् ।
न धर्मसुखयो र्यत्ते, कृतनाशादिदोषतः ॥१०५॥

टी० परस्य कस्यचिद् द्रव्यदानेन धर्मो न भवति, परस्य कस्यचिद् द्रव्यहरणेन स्वस्य सुखं न भवति, यद्येवं भवेत्तदा तु स्वसत्कर्मणा यद्धनं लब्धं तत् परस्य दानेनार्थात्तद्धनेन या भोगप्राप्तिः स्वस्य भाविन्यासीत्तस्या नाशेन कृतनाशनामकदोषाऽऽपत्तिरागच्छेत्, एवं च कश्चित् सत्कर्माण्यकृत्वा परस्य

धनं हत्वा तद् धनेन भोगप्राप्तिं कुर्यादर्थादकृतागमदोषाऽऽपत्तिरागच्छेत् , ततो दानहरणक्रियाभ्यां धर्माऽधर्मौ भवत इति वार्त्ताऽप्ययोग्यैवेति ॥१०५॥

—आत्मभिन्नाभ्यां भक्तवित्तादिपुद्गलाभ्यां दानहरणे कुतः ? —

'भिन्नाभ्यां भक्तवित्तादिपुद्गलाभ्यां च ते कुतः ।
स्वत्वोत्पत्तिर्यतो दानं, हरणं स्वत्वनाशनम् ॥१०६॥

टी० निश्चयनयो वदति—यद् भोजनधनादिरूपपुद्गलपदार्था आत्मनः सर्वथा भिन्नाः, ते आत्मीयाः कथं भवितुमर्हन्ति ? यद्येते पुद्गला आत्मनो नो भवेयुस्तदाऽऽत्मनि, एतेषां पुद्गलानां स्वामित्वं पुद्गलेषु आत्मनः स्वत्वमेव नास्ति तस्मात् पुद्गलदानं स्वत्वोत्पत्तिस्वरूपमस्ति, हरणन्तु स्वत्वनाशनस्वरूपमस्ति, एतेद्वे च दानहरणे न सङ्गच्छेते, अर्थात् परभावविषयकदानहरणयोः कर्तृत्वमात्मनि न सम्भवतीति ॥१०६॥

—कर्मोदयाच्च तद्दानं हरणं वा शरीरिणाम्—

'कर्मोदयाच्च तद्दानं, हरणं वा शरीरिणाम् ।
पुरुषाणां प्रयासः क—स्तत्रोपनमति स्वतः ॥१०७॥

टी० 'शरीरिणां कर्मोदयाच्च तद्दानं हरणं वा'=जीवनिष्ठतादृशतादृशकर्मणामुदयहेतुना, परजीवोपरिवर्त्तमानानुग्रहबुद्धया, स्वस्य स्वकीयशुभोपयोगं ददाति, अथवा परस्योपरि, उपघातबुद्धया स्वयमेव स्वकीयशुभोपयोगं स्वस्य हरति, एवं कर्मोदयहेतुना तद्दानहरणरूपा क्रिया, स्वत आत्मनि परिणमति, तत्र तदा पुरुषाणां कः प्रयास उपनमति–उपनतो भवति ? अर्थान्न कश्चित्प्रयासः ॥१०७॥

–परनिरपेक्षावेवानुग्रहोपघातौ भवतः––

'स्वगताभ्यान्तु भावाभ्यां केवलं दानचौर्ययोः ।
अनुग्रहोपघातौ स्तः, परापेक्षा परस्य न ॥१०८॥

टी० परस्य दानहरणभावमात्रेण स्वस्योपरिष्टादात्मा, अनुग्रहोपघातौ करोति, अत्र परस्य काऽप्यपेक्षा नास्ति अर्थादर्थदानेन परस्योपर्यनुग्रहो भवेच्च हरणेन परस्योपर्युपघातो भवतीत्यादिवार्त्ताया अवकाश एव न इदमत्रहृदयम्–दानादिक्रियामात्मा न करोत्येव, यतस्तथाकरणे तस्य प्रयोजनं न दृश्यते, केवलं दयाहिंसादेः शुभाशुभाऽऽत्मकपरिणामानेव फलदाने प्रत्यलाविति ॥१०८॥

–कर्मणा बद्धयतेऽज्ञानी ज्ञानवांस्तु न लिप्यते––

'पराश्रितानां भावानां, कर्त्तृत्वाद्यभिमानतः ।
कर्मणा बद्धयतेऽज्ञानो, ज्ञानवांस्तु न लिप्यते ॥१०९॥

टी० यदैवं सुनिश्चितं यद् 'आत्मा, पराश्रित भावानामथवा परभावानां कर्त्तैव नास्ति, तथाऽपि यदि कोऽपि भ्रमात्मकाज्ञानेन, परभावकर्तृत्वादि, मन्येत, स कर्तृत्वभोक्तृत्वाद्यभिमानी, अत एवाऽज्ञानी, कर्मणा बद्ध्यते, अभ्रान्तो ज्ञानी तु कर्मणा सह न लिप्यते ॥१०९॥

–रागद्वेषाशयानां तु कर्तेष्टाऽनिष्टवस्तुषु––

'कर्तैवमात्मनो पुण्य पापयोरपि कर्मणोः ।
रागद्वेषाशयानां तु, कर्त्तेष्टाऽनिष्टवस्तुषु ॥११०॥

टी० यथाऽऽत्मा, पराश्रितभावानां कर्त्ता नास्ति, पुण्यपापयोरपि कर्मणोरेवं कर्त्ताऽऽत्मा नास्ति । परन्तु इष्टाऽनिष्टवस्तुषु जायमानानां रागद्वेषाशयानां कर्त्ताऽस्ति ॥११०॥

–आत्मकृत रागद्वेषपरिणामतः कर्मभ्रमादात्मनि युज्यते––

'रज्यते द्वेष्टि वाऽर्थेषु, तत्तत्कार्यविकल्पतः ।
आत्मा यदा तदा कर्म–भ्रमादात्मनि युज्यते ॥१११॥

टी० 'यदात्मा भ्रमात्'=विपयस्वरूपस्य मोहमूढत्वेन तत्तत्सुखादिकार्यविकल्पतः, अर्थेषु=मनोज्ञानोज्ञपदार्थेषु, रज्यते वा द्वेष्टि=रागद्वेषाऽन्यतरपरिणामवान् भवति, तदा तस्मिन्नात्मनि, कर्मबन्धो भवति, यादृशोऽयमात्मनो रागादिरूपः परिणामः, तादृशः कर्मबन्धो भवतीति ॥१११॥

॥४६१॥

-सोदाहरणं रागद्वेषाऽनुविद्धस्य कर्मबन्धवर्णनम्—

'स्नेहाऽभ्यक्ततनोरङ्गं, रेणुना श्लिष्यते यथा ।
रागद्वेषाऽनुविद्धस्य, कर्मबन्धस्तथा मतः ॥११२॥

टी० यथा 'स्नेहाऽभ्यक्ततनोः'=तैलाऽभ्यञ्जनयुक्तशरीरवतोऽङ्गमवयवो वा शरीरं, रेणुना-रजसा, श्लिष्यते-श्लिष्टं भवति, तथा रागद्वेषाऽनुवेधयुक्तस्याऽऽत्मनः कर्मबन्धो मतः ॥११२॥

-सदृष्टान्तं स्वक्रियया चित्रं कर्माऽभ्येत्यात्मसन्निधौ इति वर्णनम्—

'लोहं स्वक्रिययाऽभ्येति, भ्रामकोपलसन्निधौ ।
यथा कर्म तथा चित्रं, रक्तद्विष्टाऽऽत्मसन्निधौ ॥११३॥

टी० यथा 'भ्रामकोपलसन्निधौ=लोहचुम्बकसन्निधौ जडं लोहं स्वक्रिययाऽभ्येति'=लोहचुम्बकमभिगच्छति—आगच्छति, तथा रागद्वेषसम्पन्नात्मसन्निधौ चित्रं—नानाविधं कर्म, रक्तद्विष्टात्मानमभि, आगच्छति-लगति, वल्गति तत आत्मनि, स्यकर्मबन्धनक्रियामतमनावश्यकमेवेति ॥११३॥

-रागद्वेषाऽऽशयं सृजन्नात्मा, कर्मोपादानयोगेषु न व्याप्रियते—

आत्मा न व्यापृतस्तत्र, रागद्वेषाऽऽशयं सृजन् ।
तन्निमित्तोपनम्रेषु, कर्मोपादानकर्मसु ॥११४॥

टी० आत्मा तु भावकर्मरूपरागद्वेषाशयं सृजन , 'तन्निमित्तोपनम्रेषु'=रागद्वेषाऽऽशयं निमित्तीकृत्योपनमनशीलेषु 'कर्मोपादानकर्मसु' मनोवाक्कायक्रियाऽऽत्मकयोगकर्मरूपोपादानजन्यद्रव्यकर्मरूपपुद्गलेषु 'न व्यापृतः'=व्यापाराभाववानात्मा भवति, यावत त्रयोदशगुणस्थानं मनोवाक्कायानां योगोऽस्त्यतस्तावदेव कर्मणो ग्रहण भवति, ततः कर्मण उपादानं योगरूपं कर्मैव कथ्यते ॥११४॥

–अपेक्षया भावकर्म सृजन्नात्मा, पुद्गलकर्मकृत कथ्यते—

'वारि वर्षन् यथाऽम्भोदो, धान्यवर्षी निगद्यते ।
भावकर्म सृजन्नात्मा, तथा पुद्गलकर्मकृत् ॥११५॥

टी० यथाऽम्भोदो–मेघः, वारि–जलं वर्षन , धान्यवर्षी-धान्यं वर्षन , निगद्यते–कथ्यते तथा रागादिरूपं भावकर्म सृजन्नात्मा, द्रव्यकर्मणःस्रष्टा कथ्यते यतः कारणे कार्योपचारो भवति, व्यवहारनयत आत्मा, द्रव्यकर्मकर्त्ता, अशुद्धनिश्चयनयतस्तु रागादिरूपभावकर्मकर्त्तेति ॥११५॥

–फलं यावद्व्यापारः परिदृष्टो यदाऽऽत्मनः:—

'नैगमव्यवहारौ' तु, ब्रूतः कर्मादिकर्तृताम् ।
व्यापारः फलपर्यन्तः, परिदृष्टो यदाऽऽत्मनः ॥११६॥

टी० पूर्वं तावन्निश्चयनयदृष्ट्याऽऽत्मनि कर्मादेः कर्त्तृत्वम् निषिद्धम् , नैगमव्यवहारनयदृष्ट्या त्वात्मा, रागादेरपि कर्मादेरपि कर्त्ता भवत्येव, नैगमव्यवहारौ त्वत्र हेतुं दर्शयन्तावाहतुः 'व्यापारः फलपर्यन्तः परिदृष्टो यदात्मनः' आत्मा, यद्रागादि विदधाति तस्य फलं सामान्यतोऽव्यवहितं नायाति, अथ यदि कालान्तरे फलमायाति, ततो रागादितत्फलरूपोभयमध्यकाले तादृशः कोऽपि व्यापारो मन्तव्यो यद् यः फलान्तं यावत्तिष्ठेत , किञ्च तया रीत्या सुखादिकफलं प्रति रागादेः पूर्वसूचितारूपकारणतामपि संरक्षेत् , एष व्यापार स एवाऽत्र द्रव्यकर्म, आत्मा पूर्वं रागादिकं जनयेत , पश्चात्ततो द्रव्यकर्म जनयेत् , ततश्च द्रव्यकर्मद्वारा, फलस्य विपाकं प्राप्नुयादेवं रागादितत्फलरूपद्वयमध्ये शृङ्खलारूपव्यापारस्य सतस्याऽनिवार्यता भवति ॥ ११६ ॥

–अन्योऽन्यानुगतजलदुग्धवद् रागादिपर्यायकर्मपुद्गलयोर्भेदः सुकठिनः-

'अन्योऽन्यानुगतानां कः तदेतदिति वा भिदा ।
तावच्चरमपर्यायं, यथा पानीय—दुग्धयोः ॥११७॥

टी० नैगमव्यवहारनयौ कथयतश्च यद् , आत्मनि रागादेः पर्यायाः कर्मपुद्गलाश्चेति द्वयं पानीय-दुग्धवदन्योऽन्यानुगतं=एकात्मतां गतं, तयोर्द्वयोर्भावकर्मद्रव्यकर्मणोर्भिदा–भेदोऽत्यन्तकठिनोऽस्ति, अर्थाद् यद्यात्मा, रागादेः कर्त्ता स्यात्तदा कर्मणोऽपि कर्त्ता कथं न स्यात् ? यावदात्मनश्चरमपर्यायरूपाऽन्तिममोक्षपर्यायो न भवेत्तावदेषा वस्तुस्थितिर्वर्त्तमाना तिष्ठत्येव, अर्थादात्मा, द्रव्यकर्मादेरपि कर्त्ताऽभ्युपगन्तव्य एवेति ॥११७॥

–एता नवनवानां नयानां कल्पना आत्मविकृतिकारिण्यो न–

'नाऽऽत्मनो विकृति दत्ते, तदेषा नयकल्पना ।
शुद्धस्य रजतस्येव, शुक्तिधर्मप्रकल्पना ॥११८॥

टी० नन्वेतास्तु कियज्जातीया नयकल्पनाः कल्पिताः ? कश्चित कस्यचित् कर्त्तृत्वं न मन्यते, कश्चिच्च शुद्धस्वभावतयाऽऽत्मनि कर्त्तृत्वं मन्यते, रागादेरकर्तृत्वं मन्यते कश्चिच्च रागादेरपि कर्त्तृत्वं मन्यते, कश्चित्कर्मादेरपि कर्त्तृत्वं मन्यते किमिदं ? किञ्चिन्न ज्ञायते ? इति चेन्न, यावत्यस्तावत्यो भूयस्यो नयकल्पना भवन्तु, परन्तु ततो निर्विकारात्मन्यात्मनि काचिदपि विकृतिर्नायाति, यथा कश्चिज्जनः शुद्धे रजते शुक्तित्वरूपशुक्तिधर्मस्य कल्पनां कुर्यात्ततः किं रजते किञ्चिदपि शुक्तित्वमायाति ? अपितु नायात्येव, तथा

॥४७३॥

शुद्धनिश्चयनयतस्तु सदा निर्विकारस्वरूप एवाऽऽत्मनि, तदेषा नयानां कल्पना नात्मनो विकृतिं दत्ते यतः परधर्मप्रकल्पना स्वात्मनि कल्पनारूपैव न वास्तविकफलप्रदात्रीति ॥११८॥

–पुद्गले कर्मणि गतो विकारो बालिशैरात्यन्युपचर्यते–

'मुषितत्वं यथा पान्थ–गतं पथ्युपचर्यते ।
तथा पुद्गलकर्मस्था, विक्रियाऽऽत्मनि बालिशैः ॥११९॥

टी० यथा मार्गे गच्छन्तः केचिदध्वगाश्चोरैर्मुषितास्तदा 'मार्गेण वयं मुषिताः' इति यथोपचारेण तैः कथ्यते, तथाऽज्ञानिनो बालिशा जीवाः, कर्मपुद्गला विकृतिमन्तः सन्तः, तथाप्यात्मानं विकारवन्तं कथयन्तीति परन्तु सत्यं मनागपि बालिशा अपलपितुं नेशाः, सत्यमिदं 'मार्गेण न मुषिता वयं चौरैर्मुषिता वयम्' इति तथा नाऽऽत्मा विकारी भवति, विकारि भवति हि कर्मेति ॥११९॥

–रागी द्वेषी चात्मा, पुण्यपापयोः संसर्गाद् भवति—

'कृष्णः शोणोऽपि चोपाधे–र्नाशुद्धः स्फटिको यथा ।
रक्तो द्विष्टस्तथैवाऽऽत्मा, संसर्गात् पुण्यपापयोः ॥१२०॥

टी० यथा स्फटिकः, कृष्णरक्तपदार्थोपाधिसन्निधानतः, कृष्णरूपवत्ता वा शोणरूपवत्ता सन्निहितोऽपि

स्फटिको वर्णैरशुद्धो न भवति, तथा पुण्यपाप–शुभाशुभकर्मोपाधिसहचरित आत्मा, रागी द्वेषी चाऽऽत्मा दृश्यते, वस्तुतस्तु शुद्ध एवाऽस्ति, रागादिविरहित एवेति ॥१२०॥

–आत्मनः कल्पनाऽतीतं रूपमकल्पक एव पश्यति–

'सेयं नटकला तावद्, यावद्विविधकल्पना ।
तद्रूपं कल्पनाऽतीतं, तत्तु पश्यत्यकल्पकः ॥१२१॥

टी० अज्ञानवशेन यावद् विविधकल्पना, मानसमानममध्ये समुत्तिष्ठते, तावत् सेयं=प्रत्यक्षा विविधकल्पना, नटकला=नटमायारूपोऽयमखिलसंसारः, 'तद्रूपं कल्पनाऽतीतं'=आत्मनः कल्पनाऽतीं रूपं यन्निरञ्जननिराकारस्वरूपमस्ति 'तत्तु' तद्रूपं–स्वरूपमात्मनः 'पश्यत्यकल्पकः'=विविधकल्पनाविरहितो निर्विकल्पकपूर्णदशाप्राप्तः, पश्यति=आत्मप्रत्यक्षज्ञानतः पश्यतीति ॥१२१॥

–कल्पनामूढः प्राणी विपरीतदर्शनं करोति–

'कल्पनामोहितो जन्तुः, शुक्लं कृष्णं च पश्यति ।
तस्यां पुनर्विलीनायामशुक्लाऽकृष्णमीक्षते ॥१२२॥

टी० 'कल्पनामोहितो जन्तुः'=मोहजनितकल्पनाकरणतो जन्तुः स्वं शुक्लं–शुक्लवर्णरूपिणं च कृष्णं–कृष्णवर्णरूपिणं पश्यति–बहिरात्मभावजन्यबहिर्दृष्ट्या चर्मचक्षुषा वा पश्यति, 'तस्यां पुनर्विलीनायां'=

मोहनिर्मितकल्पनायां विनष्टायां सत्यां 'अशुक्लाऽकृष्णमीक्षते'=शुक्लवर्णरहितं कृष्णवर्णरहितं यावदरूपिणं सच्चिदानन्दस्वरूपशालिनमीक्षते—सूक्ष्मान्तर्दृष्टया विवेकजन्यदृष्टया पश्यति ॥१२२॥

–शुद्धात्मस्वरूपस्य चिन्तनमेव परमात्मध्यानादिकम्–

'तद्ध्यानं सा स्तुति र्भक्तिः सैवोक्ता परमात्मनः ।
पुण्यपापविहीनस्य यद्रूपस्याऽनुचिन्तनम् ॥१२३॥

टी० तस्मादेव परमात्मनस्तदेव सत्य ध्यानं, सा च मत्या स्तुतिः, सैव मत्या भक्तिः, 'पुण्यपापविहीनस्य'=कर्मांशमात्ररहितस्य यथा परमात्मनः, तथाऽऽत्मनो यद्रूपं—स्वरूपं, तस्य शुद्धस्वरूपस्याऽनुचिन्तनमिति ॥१२३॥

–शरीरादिभिर्वर्णितै र्वीतरागस्य वास्तवी नोपवर्णना–

शरीररूपलावण्य-वप्रच्छत्रध्वजादिभिः ।
वर्णितै र्वीतरागस्य, वास्तवी नोपवर्णना ॥१२४॥

टी० श्रीमतो वीतरागदेवस्य निरामयत्वस्वेदमलोज्झितत्वाद्भुतरूपगन्धत्वविशिष्टशरीरेणालौकिकरूपेणानुपमलावण्येनापूर्ववप्रत्रयेण, छत्रत्रयेण रत्नमयध्वजेनेत्यादिना, चामीकरपङ्कजादिभिर्वर्णितै

॥४७६॥

र्न वास्तवी स्तुतिरस्ति, परमाऽऽत्मनोऽत्यन्तभिन्नैः शरीरसमवसरणादिभिर्या परमात्मनः स्तुतिः क्रियते सा निश्चयनयसम्मता वास्तवी कथं? अर्थाद् व्यावहारिक्येव ॥१२४॥

-व्यवहार-निश्चयनयस्तुतिवर्णनम्-

'व्यवहारस्तुतिः सेयं, वीतरागात्म—वर्त्तिनाम् ।
ज्ञानादीनां गुणानां तु, वर्णना निश्चयस्तुतिः ॥१२५॥

टी० 'सेयं'=शरीरादिविषयिणी स्तुतिः, व्यवहारनयसम्मताऽत एव व्यवहारस्तुतिः कथ्यते, वीतरागाऽऽत्मवर्त्तिना ज्ञानादीनां गुणानां तु वर्णना निश्चयस्तुतिः'=वीतरागत्वविशिष्ट आत्मनि वर्त्तमानानां केवलज्ञानादीनां गुणाना-विशिष्टधर्माणां स्तुति निश्चयनयसम्मताऽ त एव निश्चयस्तुतिः कथ्यते ॥१२५॥

-पुरादिवर्णनाद्राजा स्तुतः स्यादुपचारतः—

'पुरादिवर्णनाद्राजा, स्तुतः स्यादुपचारतः ।
तत्त्वतः शौर्यगाम्भीर्य-धैर्यादिगुणवर्णनात् ॥१२६॥

टी० नगरोद्यानादिवर्णनतो, उपचारतः-व्यवहारतः, राजा, स्तुतः स्यात् , परन्तु शौर्यगाम्भीर्यधैर्यादीनां गुणानां वर्णनात् स्तुतो राजा, तत्त्वतो वस्तुतः स्तुत इत्युच्यते ॥१२६॥

॥४७७॥

–मुख्यगौणधर्माणां विवेकेन स्तुतिः कर्त्तव्या–

'मुख्योपचारधर्माणा-मविभागेन या स्तुतिः ।
न सा चित्तप्रसादाय, कवित्वं कुकवेरिव ॥१२७॥

टी० परमाऽऽत्मनः स्वरूपं लक्ष्यीकृत्याऽनन्तचतुष्टयाद्या मुख्या गुणस्वरूपधर्माः सन्ति ते मुख्यधर्माः, 'शरीरादीननुलक्ष्य चाष्टमहाप्रातिहार्यादिरूपसमृद्धिरूपा ये उपचाराः महापुण्यजन्या धर्मा अतिशयविशेषाः सन्ति, तेषामुभयधर्माणां कश्चिद्विभागमकृत्वा या क्रियमाणा परमात्मस्तुतिः चित्तस्य प्रसन्नतायै–मनसः शुद्धये नैव भवति इदमत्रहृदयम्=प्रभुगतगुणानां स्तुतिस्तु निरुपचरितस्तुतित्वेनाऽष्टमहाप्रातिहार्यादिवर्णनद्वारा जायमाना परमात्मस्तुतिस्तूपचरितस्तुतित्वेन भेदः कार्यः प्रतिपत्तव्यश्च, यामुपचरितस्तुति निरुपचरितस्तुतित्वेन मत्वा क्रियमाणा स्तुतिः कदाचिदानन्दाय न भवति, एवमेव यां निरुपचरितस्तुतिमुपचरितस्तुतित्वेन मत्वा क्रियमाणा स्तुतिरपि कथमानन्दाय भवेदिति ? छन्दोऽनुप्रासादिमिश्रणतः क्रियमाणं कुकवेः कवित्वं कस्याऽऽनन्दाय भवेद् ? न कस्याऽप्यानन्दाय भवतीति ॥१२७॥

–अन्यथाऽऽग्रहतः प्रत्युताऽनर्थाय कल्पते–

'अन्यथाऽभिनिवेशेन, प्रत्युताऽनर्थकारिणी ।
सुतीक्ष्णखड्गधारेव, प्रमादेन करे धृता ॥१२८॥

टी० नन्वष्टमहाप्रातिहार्यादिरूपगौणधर्माणामुपचरितस्तुतिं निरुपचरितस्तुतित्वेन मताग्रहश्चेत्तदा 'प्रत्युतानर्थकारिणी'=दुर्नयग्रहग्रस्तस्तुतीनामनर्थकारित्वं कथं न भवेत्? यथा सुतीक्ष्णखड्गधारा, प्रमादेन करे घृता, प्रत्युतानर्थकारिणी तथाऽत्रापि ज्ञेयम् ॥१२८॥

—मणिप्रभामणिज्ञानन्यायेन शुभकल्पना न्याय्या -

'मणिप्रभामणिज्ञान—न्यायेन शुभकल्पना ।
वस्तुस्पर्शितया न्याय्या, यावन्नाऽनञ्जनप्रथा ॥१२९॥

टी० मणिप्रभामणिज्ञानन्यायेन, मणिज्ञानं प्रति मणिप्रभाज्ञानं कारणमस्ति, मणिप्रभाज्ञानस्य मणिज्ञाने कारणत्वेन शुभकल्पना, मणिरूपवस्तुस्पर्शितया न्याय्या, प्राथमिकाऽवस्थायां व्यवहारस्तुतेर्निरुपचरितस्तुतिं प्रति कारणत्वेन निरुपचरितस्तुतित्वेन रूपेण बुद्धौ शुभकल्पना, तीर्थकररूपवस्तुस्पर्शितया न्याय्या—न्यायादनपेता, 'यावन्नाऽनञ्जनप्रथा'=निर्विकल्पदशा वा वीतरागनिरावरणशुद्धावस्था यावन्न भवति तावद् वस्तुस्पर्शितया स्तुत्यादि गता शुभकल्पना न्याय्या, तत्फलरूपनिरञ्जनावस्थाप्राप्त्यनन्तरं कथं न्याय्या? यथा मणिप्राप्त्यनन्तरं मणिज्ञानादिरूपकारणताऽनावश्यकी अथवा निरञ्जनविषयकस्तुत्यादिरूपज्ञानादिगुणस्तुतिरूपप्रथा यावन्न भवति तावद्वस्तुस्पर्शितया व्यवहारस्तुतिगतनिश्चयकल्पनारूपशुभकल्पना न्याय्या कारणे कार्योपचारापेक्षयेति ॥१२९॥

-पुण्यपापाभ्यां रहितमात्मतत्त्वम्-

'पुण्यपापविनिर्मुक्तं, तत्त्वतस्त्वविकल्पकम् ।
नित्यं ब्रह्म सदा ध्येय-मेषा शुद्धनयस्थितिः ॥१३०॥

टी० शुद्ध निश्चयनयस्य स्थितिरेषाऽस्ति यतः, आत्मना तत्त्वतः पुण्यपापनिर्मुक्तं विकल्पतः शून्यं नित्यं ब्रह्म-आत्मस्वरूपं सदा ध्येयं-ध्यानविषयीकर्त्तव्यमिति ॥१३०॥

-आत्मा त्वाश्रवसंवराभ्यां भिन्नः—

'आश्रवः संवरश्चापि, नाऽऽत्मा विज्ञानलक्षणः ।
यत्कर्मपुद्गलादान-रोधावाश्रवसंवरौ ॥१३१॥

टी० आश्रवः संवरश्चाऽपि नाऽऽत्मा, यत आत्मा, विज्ञान-चैतन्यरूपलक्षणोऽस्ति, यतः कर्मनामकपुद्गलस्य ग्रहणमाश्रवतत्त्वम् , कर्मनामकपुद्गलस्य निरोधरूपं संवरतत्त्वम् , तयोर्भिन्न आत्माऽस्ति ॥१३१॥

-मिथ्यात्वाऽविरतिकषाययोगास्ते भावाश्रवाः—

'आत्माऽऽदत्ते तु यैर्भावैः, स्वतन्त्रः कर्मपुद्गलान् ।
मिथ्यात्वाऽविरती योगाः कषायास्तेऽन्तराश्रवाः ॥१३२॥

॥४८०॥

टी० यैर्भावैः स्वतन्त्र आत्मा, कर्मपुद्गलानादत्ते-गृह्णाति, ते-मिथ्यात्वमविरतिर्योगाश्च कषाया अन्तराश्रवाः-भावाश्रवाः, अशुद्धनिश्चयनयतस्त एव वस्तुत आश्रवाः ॥१३२॥

-आश्रवोच्छेदिनो धर्मा आत्मनो भावसंवराः—

'भावनाधर्मचारित्र-परीषहजयादयः ।
आश्रवोच्छेदिनो धर्मा, आत्मनो भावसंवराः ॥१३३॥

टी० पूर्वोक्तस्याश्रवस्य निरोधं कुर्वत आत्मनो भावनासाधुधर्मचारित्रपरीषहजयादयो भावरूप-धर्मा भावसंवरत्वेनोच्यन्ते, अशुद्धनिश्चयनयतस्त्वेष भावसंवर एव, वस्तुतः संवरोऽस्ति, व्यवहारनयस्य मतेऽस्मिन्नेव द्रव्यतो भावतश्चैवं द्वौ भेदौ पतत इति ॥१३३॥

-आश्रवः संवरो न स्यात्, संवरश्चाश्रवः क्वचित्-

'आश्रवः संवरो न स्यात्, संवरश्चाश्रवः क्वचित् ।
भवमोक्षफलाऽभेदोऽन्यथा स्याद्धेतुसङ्करात् ॥१३४॥

टी० आश्रवः संवरो न भवति, संवरश्चाश्रवो न भवति, अन्यथा-यद्येवमपि भवेदर्थादेकस्य च परस्य हेतूना, एकस्मिन परस्मिंश्च साङ्कर्येण, आश्रवस्य फले भवस्थाने मोक्षो भवेत्, संवरस्य च फलं

संसारोऽपि भवेत् समासत आश्रवसंवरयोरभेदे जायमाने सति, तत्फलरूपयो र्भवमोक्षयोरभेदापत्तिर्भवेदिति ॥१३४॥

–आश्रवन् कर्म, संवृण्वन् कर्म, भिन्नैर्निजाध्यवसायैश्चात्मैव–

'कर्माऽऽस्रवन् च संवृणवन्, चात्मा भिन्नै र्निजाशयैः ।
करोति न परापेक्षामलम्भूष्णुः स्वतः सदा ॥१३५॥

टी० भिन्नैः–नानाविधैः, निजाशयैः–स्वकीयैरध्यवसायैरात्मा, स्वयमेवाश्रवन्–कुर्व्वन् कर्म, संवृण्वन्–निरुन्धन् कर्म, तथाकरणे–आश्रवसंवरकरणे चात्मा, स्वतः–स्वयमेव सदाऽलम्भूष्णुः नित्यसमर्थः, परापेक्षां–परपदार्थस्याऽपेक्षां न करोतीति ॥१३५॥

–सर्वाःक्रिया आत्मनः स्वतन्त्रव्यापारे निमित्तमात्राः सन्ति–

'निमित्तमात्रभूतास्तु, हिंसाऽहिंसादयोऽखिलाः ।
ये परप्राणिपर्याया, न ते स्वफलहेतवः ॥१३६॥

टी० आत्मनः स्वतन्त्रव्यापारं प्रति हिंसाऽहिंसादयोऽखिलाः क्रिया निमित्तमात्रभूताः सन्ति, हिंसादयः परप्राणिपर्यायाः सन्ति, यतः हिंसादयः–परप्राणिनां प्राणानां नाशादयः, ते तु परप्राणिगता एव

तिष्ठन्ति, 'ये परप्राणिपर्याया न ते स्वफलहेतवः'=ये परप्राणिगताः पर्यायास्ते स्वात्मनो दुःखादिकफलं प्रति हेतवः कथं स्युः? यत्र कार्यं भवेत् तत्रैव कारणेन भाव्यम्, आत्मगतदुःखादिफलं प्रति तु, आत्मन एव कश्चित् पर्यायः कारणं सम्भवेत् तत आत्मनः स्वस्य शुभाशुभपरिणामस्वरूपपर्यायविशेषावाश्रवसंवरौ-वाच्यौ, यतो यौ आत्मगतदुःखादिफलहेतू स्तः, अर्थाद्, हिंसादयो बाह्यक्रिया आश्रवसंवरत्वेन, वाच्यत्वेन, न युक्ताः ॥१३६॥

—जडमात्रक्रियापरायणचेतास्तत्त्वं निगूढं न पश्यति—

'व्यवहारविमूढस्तु हेतूंस्तानेव मन्यते ।
बाह्यक्रियारतस्वान्त-स्तत्त्वं गूढं न पश्यति ॥१३७॥

टी० 'व्यवहारविमूढस्तु जीवः, तानेव हेतून् मन्यते'=परप्राणिगतपर्यायान् बाह्यरूपान् हिंसाऽहिंसादीन्, आश्रवसंवरत्वेन मन्यते, च तानेव मोक्षादिकफलं प्रति हेतून् मन्यते, अत एव धर्मार्थं, अहिंसादि-बाह्यक्रियाप्रीतमनाः, निश्चयनयस्य निगूढतत्त्वं=विशिष्टभावतत्त्वं न पश्यत्यपीति ॥१३७॥

—यावन्त आश्रवाः प्रोक्तास्तावन्तो हि परिश्रवाः—

हेतुत्वं प्रतिपद्यन्ते, नैवैतेऽनियमस्पृशः ।
यावन्त आश्रवाः प्रोक्तास्तावन्तो हि परिश्रवाः ॥१३८॥

टी० परप्राणिगतपर्यायस्वरूपहिंसाऽहिंसादीनां कृते तादृश ऐकान्तिको नियम एव नास्ति, यद् भवहेतु–हिंसैवाश्रवोऽस्ति, मोक्षहेतुरहिंसैव संवरोऽस्ति यतः श्रीमदाचाराङ्गसूत्रे स्पष्टं कथितमस्ति, 'जे आसवा ते परिसवा जे परिसवा ते आसवा' इति, ततः परं, अधुना तु हिंसादिकः कथमाश्रवरूपः कथ्येत ? यतस्ते मोक्षस्याऽपि हेतुत्व-भवनशक्ययोग्यतावन्तः स्युः, अर्थात् व्यवहारविमूढात्मनां बाह्यहिंसादिक्रियामाश्रित्याश्रवसंवररूपपक्षस्वीकारवृत्तिः सर्वथा भ्रान्तिमतीति ॥१३८॥

—भावानां वैविध्यादात्मैवाश्रवसंवरौ—

'तस्मादनियतं रूपं, बाह्यहेतुषु सर्वथा ।
नियतौ भाववैचित्र्या–दात्मैवाश्रवसंवरौ ॥१३९॥

टी० एतद् वस्तु निश्चितमेव जातं यद् बाह्यक्रियारूपायां हिंसायां चाहिंसायामाश्रवत्वस्य संवरत्वस्य नियमो नास्त्येव, नियमस्त्वेतावानेव स्थितः, यद् 'भावाश्रवः एवाश्रवो, अतः स नियमतः संसारस्य हेतुरस्ति तथा भावसंवर एव संवरोऽस्ति, यतः स नियमतो मोक्षस्यैव हेतुरस्ति, एवं तस्य तस्य भावस्य वैचित्र्येणात्मैवाश्रवसंवरौ भवत इति ॥१३९॥

—ज्ञानाऽज्ञानाभ्यां मुक्तिबन्धौ न तु शास्त्रादिविषयाभ्याम्—

'अज्ञानाद् विषयासक्तो बध्यते विषयैस्तु न ।
ज्ञानाद्विमुच्यते चात्मा, न तु शास्त्रादिपुद्गलात् ॥१४०॥

टी० अज्ञानात्=आत्माऽज्ञानात्, 'विषयासक्तः'=इन्द्रियमन्कविषयसुखरसिको जीवो बध्यते-कर्मणा सह बद्धो भवति, न तु विषयमात्रेण, 'ज्ञानाद्'=आत्मज्ञानाच्चात्मा, कर्मणा मुक्तो, भवति, परन्तु शास्त्रवेषबाह्यक्रियाविषयपुद्गलात् न मुक्तो भवति, सत्यज्ञानवान्-अनासक्तयोगी विषयभोगोपभोगसाधनसन्निधानेऽपि कर्मणा न बध्यते. स्थूलदृष्ट्या शास्त्राण्यधीयानोऽपि, अज्ञानी भवाऽभिनन्दी कर्मतो मुक्तो न भवतीति ॥१४०॥

—व्यवहारविशारदसम्मतानि संवराङ्गानि कथ्यन्ते—

'शास्त्रं गुरोश्च विनयं, क्रियामावश्यकानि च ।
संवराङ्गतया प्राहु—र्व्यवहारविशारदाः ॥१४१॥

टी० शास्त्रं च गुरोश्च विनयं, प्रतिलेखनादिबाह्यक्रियामात्रं चाऽऽवश्यकानि संवरस्याऽङ्गत्वेन व्यवहारविशारदाः प्राहुः-कथयन्तीति, निश्चयनयस्त्वेवं न मन्यते यतो व्यवहारसम्मतानि संवराङ्गानि सर्वाणि सेवमानोऽभव्यादिरात्मा, मोक्षं न लभते, तस्मादान्तरभावरूपसंवर एव संवर उच्यते पूर्वकथिता बाह्यव्यापारा संवरं प्रति न निश्चितहेतवस्तस्मान्निश्चयनयतस्तु ते संवरत्वेन न कथ्यन्ते ॥१४१॥

—निश्चयनयसम्मतं संवरत्वं समुच्यते—

'विशिष्टा वाक्तनुस्वान्त–पुद्गलास्तेऽफलावहाः ।
ये तु ज्ञानादयो भावाः, संवरत्वं प्रयान्ति ते ॥१४२॥

टी० निश्चयनयतस्तु पूर्वोक्तशास्त्रादौ मनोवचःकायसत्कपुद्गला ये बाह्यव्यापारविशिष्टा भवन्ति ते संवररूपफलं प्रति न जनका भवन्ति, ये तु ज्ञानादिरूपा आन्तरा भावाः स्युस्ते, संवरफलं जनकत्वेन संवरत्वं प्रयान्ति–प्राप्नुवन्तीति॥१४२॥

—व्यवहारिण आरोपितसंवरत्वं व्यवस्थाप्य सगर्वा भवन्ति—

'ज्ञानादिभावयुक्तेषु, शुभयोगेषु तद्गतम् ।
संवरत्वं समारोप्य, स्मयन्ते व्यवहारिणः ॥१४३॥

टी० यत् संवरत्वं वस्तुत आत्मनिष्ठज्ञानादिभावेषु वर्तते, तस्याऽऽरोपं व्यवहारनयो ज्ञानादिभावयुक्तेषु बाह्यशुभयोगेषु करोति, तया रीत्या तेषु बाह्यशुभयोगेषु संवरत्वमुक्त्वा, मिथ्या गर्वं धारयति, अपि च स जानाति यद् बाह्ययोगेषु संवरत्वं कथयितुं कथमपि न युज्यते यतो बाह्ययोगसेवनमात्रेण मोक्षो न भवति, ततस्तेन 'ज्ञानादिभावयुक्ततेति विशेषणमुक्तमस्मिन् विशेषणसत्तायां बाह्ययोगे संवरत्वमागतम् , यदि च

तेन ज्ञानादिभानरूपविशेषणेन बाह्ययोगो विशिष्टो भवेत्तदा तेन शुद्धेन केवलेन बाह्ययोगेन संवरो न भवेदिति व्यवहारनयेन प्रतिपन्नम्, निश्चयनय एवं कथयति यद्, ज्ञानादिभावे सत्येव बाह्यशास्त्राध्ययनादिक्रिया, संवरत्वमापन्ना भवति, असति ज्ञानादिभावे सा क्रिया, संवरो न भवति, एवं स्थिते ज्ञानादिभावा एव संवररूपा इति मन्तव्यम्, ज्ञानादिभावयुक्तां बाह्यक्रियां संवरत्वेन मत्वा मिथ्याऽभिमानं व्यवहारनयः किमर्थं धारयते ? सोऽभिमानस्त्याज्य एव ॥१४३॥

–व्यवहारिणो वदन्ति यद् 'सरागचारित्रादौ शुभाश्रवत्वमारोप्य फलभेदः'–

'प्रशस्तरागयुक्तेषु, चारित्रादिगुणेष्वपि ।
शुभाश्रवत्वमारोप्य, फलभेदं वदन्ति ते ॥१४४॥

टी० प्रशस्तरागयुक्तेषु चारित्रादिगुणेष्वपि [ ये व्यवहारेण संवरत्वेन व्यवह्रियमाणेषु चारित्रादिगुणेष्वपि] 'शुभाश्रवत्वमारोप्य व्यवहारिणः फलभेदं ते वदन्ति'=चारित्रमात्रं संवरत्वेन न हि कथयन्तः सरागचारित्रं शुभाश्रवत्वेन–पुण्यानुबन्धिपुण्यकर्मबन्धकत्वेन कथयन्ति ॥१४४॥

–भवस्य निर्वाणस्य च हेतूनां वस्तुतो न विपर्ययः–

भवनिर्वाणहेतूना वस्तुतो न विपर्ययः ।
अज्ञानादेव तद्भानं, ज्ञानी तत्र न मुह्यति ॥१४५॥

टी० वस्तुतस्तु ये भवस्य हेतवो भवेयुस्ते भवस्यैव हेतवो भवन्ति ये चारित्रादयो मोक्षस्य हेतवः स्युस्ते मोक्षस्यैव हेतवो भवन्ति, कार्यकारणयोगमध्येऽस्मिन् पूर्वोक्तरीत्या सरागतां निमित्तीकृत्य चारित्रादौ शुभाश्रवत्वमारोप्य भवहेतुत्वकल्पनारूपो विपर्ययो न कदाचिदपि शक्यः, अर्थात्तत्त्वतस्तु, अज्ञानहेतुनैव विपरीतभान भवत्येव, नाऽन्यथा तत्र–भवनिर्वाणहेतुविपर्यनिर्णये, ज्ञानी–निश्चयव्यवहारभेदज्ञानी न मुह्यतीति ॥१४५॥

शास्त्रे जिननामकर्महेतुः सम्यक्त्वं, आहारकनामकर्म हेतुरप्रमत्तचारित्रं सरागतपःसंयमौ स्वर्गस्य हेतू इति यत्कथित तत्कथं समञ्जसमिति शङ्कायाः समाधानाय द्वौ श्लोकौ विरच्येते—

'तीर्थकृन्नामहेतुत्वं, यत् सम्यक्त्वस्य वर्ण्यते ।
यच्चाहारकहेतुत्वं, संयमस्याऽतिशायिनः ॥१४६॥
तपः संयमयोः स्वर्गहेतुत्वं यच्च पूर्वयोः ।
उपचारेण तदुक्तं, स्याद् घृतं दहतीतिवत् ॥१४७॥

टी० यत् तीर्थङ्करनामहेतुत्वं सम्यक्त्वस्य संवररूपस्य वर्ण्यते, यदाहारक–नामकर्महेतुत्वं 'संयमस्य अतिशायिनः'=अप्रमत्तस्य संयमस्य संवररूपस्य वर्ण्यते, यत् पूर्वयोः–प्रशस्तरागयुक्तयोस्तपः संयमयोः

संवररूपयोः स्वर्गहेतुत्वं वर्ण्यते, तदुपचारेणोक्तं युक्तं स्यात्, यथा 'घृतं दहतीति वदुपचारेणैतत् सर्वं कथितं ज्ञेयमिति वस्तुतस्तु सम्यक्त्वादयः सर्वे संवररूपाः ॥१४६॥१४७॥

—योगोपयोगाभ्यामंशाऽऽत्मकाभ्यामाश्रवसंवरौ—

'येनांशेनाऽऽत्मनो योगस्तेनांशेनाश्रवो मतः ।
येनांशेनोपयोगस्तु, तेनांशेनाऽस्य संवरः ॥१४८॥

टी० निश्चयनयेनैव कथ्यते यद् येनांशेन-यावतांशेनात्मनो योगो-मनःकायादिव्यापारो भवेद्, तेनांऽशेन-तावतांशेनाऽऽत्मनः कर्माश्रवः स्यादेव, येनांशेन यावतांशेनोपयोगो-ज्ञानादिभावस्तेनांशेन-तावतांशेनात्मनः कर्मसंवरः स्यादेव, एवमाश्रवसंवरद्वयं यौगपद्येन तत्तदंशेषु भवति, अर्थाद् बाह्यहिंसादिकस्याशुभस्याश्रवत्वेनैव कथनं अहिंसादिकस्यैव च संवरत्वेन कथनमनुचितं, तथैव संवररूपस्य सरागचारित्रस्य शुभाश्रवत्वेन कथनमनुचितं, चारित्रादौ तु सरागमन आदियोग एवाश्रवः, उपयोगभाव एव संवरः, इदमत्र हृदयम्=चारित्रादयः सर्वे कथ्यमानाः शुभाश्रवा आश्रवरूपा न सन्ति परन्तु तस्य चारित्रादेः पालने यो योगभावोऽस्ति, स आश्रवोऽस्ति, यश्चोपयोगभावोऽस्ति स संवरोऽस्ति, एवं चारित्रादिशुभाश्रवाणामाश्रवसंवरोभयभाववानात्मा, भवतीति ॥१४८॥

—अंशव्यापावाश्रवसंवरौ विभ्रदाऽऽत्माऽस्ति—

'तेनाऽसावंशविश्रान्तौ, बिभ्रदाश्रव—संवरौ ।
भात्यादर्श इव स्वच्छास्वच्छ–भागद्वयः सदा ॥१४९॥

टी० तेन=तस्मात् कारणादसौ, तत्तदंशविश्रान्तावाश्रवसंवरौ-योगांशोपयोगसंख्याभावाश्रवसंवरतत्त्वद्वयं बिभ्रद्–धारयन्नात्मा, 'स्वाच्छास्वच्छ–भागद्वयः'=पवित्राऽपवित्रांशद्वयरूपभागआदर्श इव' दर्पण इव सदा संसारपर्याये भाति–दृश्यते ॥१४९॥

–शुद्धैव ज्ञानधारा स्यात्, सम्यक्त्वप्राप्त्यनन्तरम्—

शुद्धैव ज्ञानधारा स्यात्–सम्यक्त्वप्राप्त्यनन्तरम् ।
हेतुभेदाद्विचित्रा तु, योगधारा प्रवर्त्तते ॥१५०॥

टी० शुद्धसम्यक्त्वस्य प्राप्तेरनन्तरं शुद्धैव–अशुद्धत्वाभावविशिष्टशुद्धमात्रा, ज्ञानधारा=उपयोगात्मकज्ञानधारा स्यात्, परन्तु मन आदियोगधारा तु, हेतुभेदाद्–भिन्नभिन्ननिमित्तवशात्, शुद्धाऽपि शुद्धाऽशुद्धाऽपि, अशुद्धाऽपि प्रवर्त्तते–प्रवर्त्तमाना भवति, अविरतस्य सम्यक्त्ववतस्तु मनोवचः कायसत्का योगधारा, अशुद्धा स्याद्, यदा सर्वविरतस्य सम्यक्त्ववतो योगधारा शुद्धाऽपि भवेदिति ॥१५०॥

-सम्यग्दृशो मृदुमध्यादिभावस्तु क्रियावैचित्र्यतो भवेद्—

'सम्यग्दृशो विशुद्धत्वं, सर्वास्वपि दशास्वतः ।
मृदुमध्यादिभावस्तु, क्रियावैचित्र्यतो भवेत् ॥१५१॥

टी० 'सर्वास्वपि दशासु'=कर्मकालादिकृतासु सुखदुःखादिद्वन्द्वाऽऽक्रान्तासु सर्वास्वपि दशासु 'सम्यग्दृशो'=सम्यग्दृष्टे र्विशुद्धत्वं प्रथमपक्षे, अथवा चतुर्थगुणस्थानकादारभ्य, चतुर्दशगुणस्थानकं यावत्, सम्यग्दृष्टेः सर्वासु बाह्यशुभाशुभप्रवृत्तिषु ज्ञानधारा विशुद्धैव, द्वितीयपक्षे अतः क्रियावैचित्र्य—निमित्तवशाद्, मन्दमध्यमोत्कृष्टादिभेदभिन्नः क्षयोपशमादिभावस्तु भवेद् प्रथमपक्षे तथाप्यतस्तस्यां विशुद्धौ बाह्यक्रियाया विविधतारूपनिमित्तबलात्, मन्दता—मध्यमता—उत्कृष्टताऽवश्यं भवेद्, अविरतस्य सम्यक्त्ववतो ज्ञानधाराया मन्दविशुद्धिः, अधिकाऽधिका प्रबला भवितुमर्हति, यथा यथोपयोगधारा, अधिकाऽधिकाऽविशुद्धा भवति, तथा तथा योगधाराऽप्यधिकाऽधिका भवतीति द्वितीयपक्षे ॥१५१॥

-उपयोगयोगधारयोः सर्वतः शुद्धयोः सत्योः सर्वसंवरः—

'यदा तु सर्वतः शुद्धि, र्जायते धारयो र्द्वयोः ।
शैलेशीसंज्ञितः स्थैर्यात्, तदा स्यात् सर्वसंवरः ॥१५२॥

टी० 'यदा तु द्वयो र्धारयोः सर्वतः शुद्धि र्जायते'=यस्मिन् काले योगोपयोगधारयोः सर्वतः–सम्पूर्णा शुद्धिः=कर्मराहित्यरूपा निर्मलतोत्पद्यते वाऽऽविर्भवति, तदा–तस्मिन् काले मेरुसदृशाऽपूर्वस्थैर्य-स्वरूपनैश्चल्याद्, 'शैलेशीसंज्ञितः'=शैलेशीनामकः सर्वसंवरः स्यादिति ॥१५२॥

–आत्मनो यावद् योगचांचल्यस्थैर्यकृताश्रवसंवरौ—

'ततोऽर्वाग यच्च यावच्च, स्थिरत्वं तावदाऽऽत्मनः ।
संवरो, योगचाञ्चल्यं, यावत्तावत्किलाश्रवः ॥१५३॥

टी० शैलेशीनामकसर्वसंवरप्राप्तेः पूर्वस्मिन् काले यः कश्चित् संवरभावो भवति, स देशत एव भवति, यतश्चतुर्दशगुणस्थानकादधस्तनगुणस्थानकेषु तादृशविशिष्टापूर्वस्थैर्यं न सम्भवति, आत्मनो यच्च यावच्च योगचाञ्चल्याभावरूपं स्थिरत्वं, स तावान् संवरः, यच्च यावच्च योगचाञ्चल्यं तावानेवाश्रव इति ॥१५३॥

–संसारिणां च सिद्धानां न शुद्धनयतो भिदा—

'अशुद्धनयतश्चैवं, संवराश्रवसङ्कथा ।
संसारिणां च सिद्धानां, न शुद्धनयतो भिदा ॥१५४॥

टी० एवं पूर्वोक्तं सर्वं विवरणमशुद्धनिश्चयनयं प्रतीत्य विज्ञेयं यतः स एव नय आत्मानमाश्रव-संवरपर्यायमयं मन्यते, शुद्धनिश्चयनयस्त्वात्मानं केवलं शुद्धज्ञानादिमयं मन्यतेऽर्थात्तन्मतेन, संसारिणां च सिद्धानां न भिदा-भेदो वर्त्तते, आत्माऽद्वैतवादी शुद्धनिश्चयनयोऽस्ति ॥१५४॥

—येन निर्जीर्यते कर्म, स भावस्त्वात्मलक्षणम्—

निर्जरा कर्म्मणां शाटो, नात्माऽसौ कर्मपर्ययः ।
येन निर्जीर्यते कर्म, स भावस्त्वात्मलक्षणम् ॥१५५॥

टी० निर्जरा=आत्मतः कर्मपुद्गलानां दूरीभवनं निर्जरोच्यते, कर्म्मणां शाटो, नात्मा=आत्मस्वरूप-रूपो नास्ति, परन्तु कर्मपर्यायोऽस्ति, तथाऽपि येन निर्जीर्यते कर्म, स भावोऽशुद्धनिश्चयनयतः—आत्मस्व-रूपरूपोऽस्ति ॥१५५॥

—सत्तपो द्वादशविधं, शुद्धज्ञानसमन्वितम्—

'सत्तपो द्वादशविधं, शुद्धज्ञानसमन्वितम् ।
आत्मशक्तिसमुत्थानं, चित्तवृत्तिनिरोधकृत् ॥१५६॥

टी० 'शुद्धज्ञानसमन्वितम्'=शुद्धेन ज्ञानेन समन्वितं द्वादशविधं सत्तपो भवेत्तदाऽऽत्मनः शक्तेरुत्थानं भवत्येव, चित्तस्य वृत्तिनिरोधो भवत्येवेति ॥१५६॥

॥४९३॥

–शुद्धतपसो लक्षणपूर्वकं विवेचनम्–

'यत्र रोधः कषायाणां, ब्रह्म ध्यानं जिनस्य च ।
ज्ञातव्यं तत्तपः शुद्धमवशिष्टं तु लङ्घनम् ॥१५७॥

टी० यत्र–तपसि, क्रोधादीनां कषायाणां रोधो–विष्कम्भनम्, 'ब्रह्म'=यत्र तपसि मैथुनत्यागरूपस्य ब्रह्मचर्यस्य पालनम्, 'ध्यानं जिनस्य च'=यत्र तपसि भगवतो ऽर्हतो ध्यानमर्थाद् भगवति जिनेश्वरे विषये, एकविशिष्टज्ञानधारा. कषायनिरोधब्रह्मचर्यजिनध्यानत्रयी, यत्र तपसि वर्त्तते तत्तपः शुद्धं ज्ञातव्यं–विज्ञेयम्, 'अवशिष्टं तु लङ्घनम्=कषायरोधादित्रयीशून्यमवशिष्टं शेषं, अशुद्धं तपो लङ्घनमुच्यते, तपोऽपि च न कथ्यते, तपो लङ्घनमुच्यते, तपो लङ्घनविशेषाभावादिति ॥१५७।

–देहकृशत्वादिभिस्तपो न लक्ष्यते–

'बुभुक्षा देहकार्श्यं वा, तपसो नास्ति लक्षणम् ।
तितिक्षाब्रह्मगुप्त्यादि-स्थानं ज्ञानं तु तद्वपुः ॥१५८॥

टी० बुभुक्षायाः क्षुधाया मात्रसहनमथवा शरीरस्य कृशत्वं तपसो नास्ति लक्षणमसाधारणस्वरूपं तितिक्षा=सति सामर्थ्ये क्षमा, ब्रह्मगुप्तयः ब्रह्मचर्यस्य नवगुप्तयः, अथवा ब्रह्मचर्यं मनोगुप्त्यादि-

शुद्धधर्मस्य स्थानमाधारः 'ज्ञानं तु तद्वपुः'=ज्ञानं तस्य तपसो लक्षणं विज्ञेयं नान्यदिति ॥१५८॥

–विशिष्टमेव तपो निर्जराहेतु र्न विलक्षणम्–

'ज्ञानेन निपुणेनैक्य-माप्तं चन्दनगन्धवत् ।
निर्जरामात्मनो दत्ते तपो नाऽन्यादृशं क्वचित् ॥१५९॥

टी० 'चन्दनगन्धवत्'=अभेदसम्बन्धाऽन्वितचन्दनगतगन्धतुल्यं, 'निपुणेन ज्ञानेनैक्यमाप्तं'=समर्थसूक्ष्मज्ञानेन सहैकत्वं प्राप्तं तपो निर्जरामात्मनो दत्ते–तादृशतपसा निर्जरालाभाऽन्वित आत्मा भवति, 'नाऽन्यादृशं क्वचित्'=निपुणज्ञानतादात्म्याऽप्राप्तं अन्यादृशं-विलक्षणं तपो निर्जरां क्वचिदपि न दत्ते इति ॥१५९॥

–प्रशस्तकार्यस्पृहस्तपस्वी, विपुलं पुण्यं बध्नाति–

'तपस्वी जिनभक्त्या च, शासनोद्भासनेच्छुकः ।
पुण्यं बध्नाति विपुलं, मुच्यते तु गतस्पृहः ॥१६०॥

टी० तपःप्रतापी, जैनशासनप्रभावनाविषयकस्पृहावान् , जिनेश्वरदेवविषयकपरमभक्तिकरणकारणानुमतिद्वारा, 'विपुलं पुण्यं बध्नाति'=विशिष्टपुण्यानुबन्धि पुण्यं बध्नाति, 'मुच्यते तु गतस्पृहः'=तादृशस्पृहारहितश्चेत्तपस्वी, कर्ममात्रबन्धनतो मुक्तो भवतीति ॥१६०॥

-यत्तापयति कर्म तज्ज्ञानं तप एव-

'कर्मतापकरं ज्ञानं, तपस्तन्नैव वेत्ति यः ।
प्राप्नोतु स हतस्वान्तो, विपुलां निर्जरां कथं ? ॥१६१॥

टी० 'यज्ज्ञानं कर्म तापयति तज्ज्ञानमेव तपः, इत्यादिकं यः पुरुषो नैव जानाति, अज्ञानतो हतं स्वान्तं यस्य स हतस्वान्तो-हतप्रतिहतमनाः सन् कथं विपुलां निर्जरां प्राप्नुयादिति ? ॥१६१॥

-ज्ञानतपस्वी विशिष्टकर्मक्षयाय क्षमो भवति-

'अज्ञानी तपसा जन्म--कोटिभिः कर्म यन्नयेत् ।
अन्तं ज्ञानतपोयुक्तस्तत्क्षणेनैव संहरेत् ॥१६२॥

टी० अज्ञानी-जिनाज्ञाऽनुसारितारहितोऽत एवाज्ञानी, 'जन्मनां कोटिभिः-भवकोट्यादि यावत् तपसा यत् कर्माऽन्तं-नाशं नयेत्-प्रापयेत् , तत्कर्म, क्षणेन-घटिकायाः षष्ठ-भागरूपकालविशेषेणैव, ज्ञानतपो-युक्तो महात्मा, संहरेद् विनाशं कुर्यादिति ॥१६२॥

-ज्ञानयोग एव तपः शुद्धम्-

'ज्ञानयोगस्तपः शुद्ध-मित्याहुर्मुनिपुङ्गवाः ।
तस्मान्निकाचितस्याऽपि कर्मणो युज्यते क्षयः ॥१६३॥
यदिहाऽपूर्वकरणं, श्रेणिः शुद्धा च जायते ।
ध्रुवः स्थितिक्षयस्तत्र, स्थितानां प्राच्यकर्मणाम् ॥१६४॥

टी० ज्ञानयोग एव शुद्ध तप इति मुनिपुङ्गवाः--गणधरादयो मुनीश्वरा आहुः--कथयन्ति, तस्मात् ज्ञानयोगरूपात्तपसः, निकाचितस्याऽपि--अपिनाऽनिकाचितस्य तु का कथेति कथ्यते, कर्मणः क्षयो युज्यते--युक्तो भवतीति कथमिति चेत् उच्यते यद्--यत इह-ज्ञानयोग एवापूर्वकरणं=द्वितीयाऽपूर्वकरणं च शुद्धश्रेणिः--क्षपकश्रेणि जायते--उत्पद्यते, तत्र--अपूर्वकरणक्षपकश्रेणिमध्य एव, स्थितानां--स्थितिमतां प्राच्यकर्मणां स्थितेः क्षयो ध्रुवः--निश्चयतो भवतीति ॥१६३-१६४॥

-ज्ञानमयः शुद्धस्तपस्वी भावनिर्जरा-

'तस्माज्ज्ञानमयः शुद्धस्तपस्वी भावनिर्जरा ।
शुद्धनिश्चयतस्त्वेषा, सदा शुद्धस्य काऽपि न ॥१६५॥

टीका=तस्मादिति- पूर्वकथितचर्चासारवशात् , अशुद्धनिश्चयनयस्य दृष्टया, ज्ञानमयः--शुद्धस्तपस्याऽन्वित आत्मैव भावनिर्जरा कथ्यते. शुद्धनिश्चयनयस्य दृष्टया त्वात्मा, सदा शुद्ध एवाऽस्ति, तन्मते भावनिर्जराऽपि न संभवतीति ॥१६५॥

—बन्धः कर्माऽऽत्मसंश्लेषः—

'बन्धः कर्माऽऽत्मसंश्लेषः, द्रव्यतः स चतुर्विधः ।
तद्धेत्वध्यवसायाऽऽत्मा, भावतस्तु प्रकीर्तितः ॥१६६॥

टीका=कर्मण आत्मना सह यः संश्लेषरूपः सम्बन्धः स बन्धो लक्ष्यते, स द्रव्यतो बन्धः, प्रकृति-स्थितिरस--प्रदेशभेदाच्चतुर्विधः, तद् द्रव्यबन्धस्य हेतुभूतोऽध्यवसायरूपो बन्धः, भावतः प्रकीर्तितोऽर्थाद् भावबन्ध उच्यते ॥१६६॥

—तत्तद्भावैः परिणतो बध्नात्यात्मानमात्मना—

'वेष्टयत्याऽऽत्मनाऽऽत्मानं, यथा सर्पस्तथाऽसुमान् ।
तत्तद्भावैः परिणतो, बध्नात्यात्मानमात्मना ॥१६७॥

टी० अशुद्धनिश्चयनयो निरूपयति यद् 'आत्मा, द्रव्यकर्मस्वरूपो नास्त्येव, तादृशद्रव्यकर्मणा स

बध्यमानो नास्ति, आत्मा तु पूर्वोक्तभावबन्धस्वरूप एवाऽस्ति, यथा सर्पः स्वशरीरेण स्वं वेष्टयति, तथाऽसुमान्=जीवोऽपि तत्तद्भावैः सह परिणतः=एकतां गतः, स्वं-आत्मानं स्वेन भावबन्धस्वरूपेण बध्नातीति ॥१६७॥

—अन्योदाहरणपूर्वकं पूर्वोक्तविषयसमर्थनम्—

'बध्नाति स्वं यथा कोशकारकीटः स्वतन्तुभिः ।
आत्मनः स्वगतै र्भावै, बन्धने सोपमा स्मृता ॥१६८॥

टी॰ यथा कोशकारकीटः स्वतन्तुभिः=स्वमुखद्वारा, तन्तुरूपाभि निस्सारितलालाभिः स्वं बध्नाति, तथाऽऽत्माऽपि स्वत उत्पादितविभावरूपै र्भावै--रात्मनो बन्धने 'सोपमा'=तदुदाहरणं 'स्मृता'=कथितमिति कर्मादिबाह्यबन्धनैस्तु स आत्मा न बध्यमानोऽस्ति ॥१६८॥

—सापराधानां जन्तूनां बन्धकारो नहीश्वरः—

'जन्तूनां सापराधानां बन्धकारी नहीश्वरः ।
तद्बन्धकाऽनवस्थानादबन्धस्याऽप्रवृत्तितः ॥१६९॥

टी॰ अस्तु तावत् सापराधमात्मानं द्रव्यकर्म न बध्नीयात्परन्तु तमात्मानं बद्धुमीश्वरः कथं नेश्वरः ? अशुद्धनिश्चयः प्रत्युत्तरयति 'यदि 'साऽपराधजन्तुबन्धकारीश्वरोऽस्ती'ति मतस्वीकारे साऽपराबन्धक

ईश्वरोऽपि सापराध उच्यते, तद् बन्धकेश्वरमन्य ईश्वरो बद्धं करिष्यति एवं भवने तद्बन्धकाऽनवस्था भविष्यति, किञ्च य ईश्वरोऽबन्धोऽस्ति, स कमपि बद्धुं कथं प्रवर्त्तेतेति ?॥१६९॥

—तत्त्वज्ञानप्रवृत्त्यर्थं ज्ञानवन्नोदना ध्रुवा—

'न त्वज्ञानप्रवृत्त्यर्थे, ज्ञानवन्नोदना ध्रुवा ।
अबुद्धिपूर्वकार्येषु, स्वप्नादौ तददर्शनात् ॥१७०॥

टी० यदीश्वरः साक्षात् किञ्चित्कर्त्तृमीश्वरश्चेत्तदाऽज्ञानजनितपापादिकार्येषु ज्ञानवतो नोदना--प्रेरणा न ध्रुवा यतः, यथा स्वप्नादावज्ञानतो यादृशकार्याणि करोत्यात्मा, तत्र कस्यचिज्ज्ञानवतः पुरुषस्य नोदना न दृश्यते, तद्वदबुद्धिपूर्वककृतकार्येषु ज्ञानवन्नोदना न ध्रुवाऽर्थादीश्वरप्रेरितो जन्तुः शुभाऽशुभानि कर्माणि करोतीत्यपि न कथनीयमिति ॥१७०॥

—तथाभव्यतया जन्तु र्नोदितश्च प्रवर्त्तते—

'तथाभव्यतया जन्तु—र्नोदितश्च प्रवर्त्तते ।
बध्नन् पुण्यं च पापं च, परिणामानुसारतः ॥१७१॥

टी० जीवस्तु स्वस्वतथाभव्यतया नोदितः--प्रेरितः, शुभाऽशुभात्मकाध्यवसायमुत्पादयति, तत्तत्परिणामाऽनुसारतः, पुण्यं--पुण्यकर्म, च पापं--पापकर्म च बध्नन्--बन्धं कुर्वन्नस्तीति बोध्यम् ॥१७१॥

–शुद्धनिश्चयनयाऽपेक्षयाऽऽत्मा न बद्धः–

'शुद्धनिश्चयतस्त्वात्मा, न बद्धो बन्धशङ्कया ।
भयकम्पाऽऽदिकं किन्तु, रज्जावहिमतेरिव ॥१७२॥

टी० एषा या सर्वा वार्त्ता कृता, साऽशुद्धनिश्चयनयतो ज्ञेया, शुद्धनिश्चयनयतस्तु स आत्मा, न बध्यते, कदाचिदात्मनि बन्धशङ्कायां सत्यां तस्य भयेन कम्पादिकं जायते, यथा रज्जौ सर्पस्य बुद्धे भयकम्पादिकं जायते तथाऽत्रापीति ॥१७२॥

–भवस्थित्यनुसारेण परिणामतः कर्मबन्धः–

'रोगस्थित्यनुसारेण, प्रवृत्ती रोगिणो यथा ।
भवस्थित्यनुसारेण, तथा बन्धेऽपि वर्ण्यते ॥१७३॥

टी० यथा रोगस्थित्यनुसारेण रोगवतः प्रवृत्तिः, तथा स्वस्वभवस्थित्यनुसारेणाऽऽत्माऽपि, तत्तत्परिणामानुत्पादयति, ततश्च शुभाऽशुभात्मककर्माणि बध्नातीति ॥१७३॥

॥५०१॥

—अध्यात्मशास्त्रमिच्छन्ति श्रोतुं वैराग्यरुचयः—

'दृढाऽज्ञानमयीं शङ्कामेनामपनिनीषवः ।
अध्यात्मशास्त्रमिच्छन्ति श्रोतुं वैराग्यकाङ्क्षिणः ॥१७४॥

टी० 'किमाऽऽत्मा बद्धोऽस्ति ? तादृशीं 'दृढाऽज्ञानमयीं' गाढाविद्याप्रचुरां शङ्कामेनामपनेतुकामा 'वैराग्यकाङ्क्षिणः'=संसाराऽसारतारूपवैराग्यवाञ्छका आत्मनोऽध्यात्मशास्त्रं श्रोतव्यमेवेति मनसिकृत्य श्रोतुं कामयन्त इति ॥१७४।

—प्रत्यक्षविषयां शङ्कां न हि हन्ति परोक्षधीः—

'दिशः प्रदर्शकं शाखा-चन्द्रन्यायेन यत्पुनः ।
प्रत्यक्षविषयां शङ्कां, नहि हन्ति परोक्षधीः ॥१७५॥

टी० परन्तु तैरात्मभिरेषा वार्ता मनसि रक्षणीया यद् अध्यात्मशास्त्रं शाखाचन्द्रन्यायेन, पुनरेव-कारार्थकः केवलं दिशः प्रवर्त्तकं किन्त्वतीन्द्रियपदार्थान वर्णयदेतत् परोक्षज्ञानरूपाध्यात्मशास्त्रमात्मनो बन्धविषये पतितां प्रत्यक्षशङ्कामपनेतुं सामर्थ्यं न धारयत्येव, बालस्य चन्द्रदर्शने चन्द्रस्य पङ्क्तावायान्ती वृक्षस्य शाखा दर्शनीया, नैकट्येन शाखां तत्कालमेव बालो द्रष्टुं शक्नोति, तस्या दर्शनद्वारा चन्द्रदर्शन-दिशं प्राप्नोतीति ॥१७५॥

–शास्त्रज्ञानेऽपि मिथ्याधीसंस्कारादु बन्धधीः–

'शङ्खेश्वैत्यानुमानेऽपि, दोषात्पीतत्वधीर्यथा ।
शास्त्रज्ञानेऽपि मिथ्या-धीसंस्कारात् बन्धधीस्तथा ॥१७६॥

टी० 'शङ्खः श्वेत एव' एतादृशमनुमानेऽपि स्पष्टं ज्ञानं जानताऽपि कमलीदोषेण यथा प्रत्यक्षेण-'शङ्खः पीतः' इति ज्ञायते, तथाऽऽत्माऽबद्धोऽस्तीति शास्त्रज्ञानगत्वेऽपि मिथ्याबुद्धिसंस्कारात् 'स आत्मा बद्धोऽस्तीति प्रत्यक्षं प्रतिभासतेऽर्थादेनां प्रत्यक्षविषयां शङ्कां शास्त्रज्ञानमात्रं दूरीकर्तुं न प्रभवतीति ॥१७६॥

–ये तत्त्वं साक्षादनुभवन्ति तेषां न बन्धधीरात्माऽबन्धःप्रकाशते–

श्रुत्वा मत्वा मुहुःस्मृत्वा, साक्षादनुभवन्ति ये ।
तत्त्वं न बन्धधीस्तेषामात्माऽबन्धःप्रकाशते ॥१७७॥

टी० ये विशिष्टशास्त्रस्य तत्त्वं-रहस्यं पुनः पुनः शृण्वन्ति, तथैव मनन्ति च मुहुर्मुहुः स्मरन्ति साक्षादनुभवन्ति स्वसंवेदनतः, तेषां महात्मनां 'आत्मा, बद्धोऽस्ति वा बध्यते' इति बन्धविषयिणी बुद्धि र्न भवति, अन्ततः आत्माऽबन्धः–बन्धरहितोऽस्तीति धी बुद्धिः प्रकाशते, आत्मा, बन्धतत्त्वतो भिन्नोऽस्तीति विचारः समाप्तः ॥१७७॥

-भावमोक्षस्तु तद्धेतुरात्मा, रत्नत्रयाऽन्वयी-

'द्रव्यमोक्षः क्षयः कर्म-द्रव्याणां नाऽऽत्मलक्षणम् ।
भावमोक्षस्तु तद्धेतुरात्मा रत्नत्रयाऽन्वयी ॥१७८॥

टी० अशुद्धनिश्चयनयः कथयति यत 'कर्मरूपद्रव्याणां क्षयः-आत्मद्रव्योपरितः क्षयो द्रव्यमोक्षः, स आत्मनो लक्षणं न-स्वरूपं न, यतः स द्रव्यमोक्षस्तु कर्मणः पर्यायः, य आत्मनः सर्वथा भिन्न एवाऽस्ति, परन्तु तद्द्रव्यमोक्षं प्रति हेतुभूतो रत्नत्रयाऽन्वित आत्मा, भावमोक्ष उच्यते, स च द्रव्यमोक्षतो भिन्न एवेति ॥१७८॥

-कर्माणि कुपितानीव भवन्त्याशु तदा पृथग्-

'ज्ञानदर्शन-चारित्रैरात्मैक्यं लभते यदा ।
कर्माणि कुपितानीव भवन्त्याशु तदा पृथक् ॥१७९॥

टी० 'यदाऽऽत्मा, ज्ञानदर्शनचारित्रैः सहैक्यं'=यस्मिन काले रत्नत्रयेण सह तादात्म्यं लभत आत्माऽर्थाज्ज्ञानदर्शनचारित्रमयो भवेत्तदा-तस्मिन काले 'कुपितानीत्यादि'=जाने आत्मन उपरि कोप-

हिनानीव पौद्गलिककर्माणि भवन्ति—तत्क्षण एवात्मनः सकलात्मप्रदेशेभ्यः पृथग् भवन्ति—त्यक्तव स्थावन्ति भवन्ति ॥१७९॥

—: अतो रत्नत्रयमेव मोक्षस्तदभावे कृतार्थता न :—

अतो रत्नत्रयं मोक्षस्तदभावे कृतार्थता ।
पाषण्डिगणलिङ्गैश्च गृहिलिङ्गैश्च काऽपि न ॥१८०॥

टी० 'अतः'—द्रव्यमोक्षरूपकार्यजनकत्वेनाऽऽत्मनः कर्मभेदकत्वेन रत्नत्रयमेव मोक्षोऽस्ति, तदभावे पाषण्डिगणलिङ्गैश्च गृहिलिङ्गैश्च न काऽपि कृतार्थता=रत्नत्रयस्याऽभावे सति, कस्याऽपि दर्शनस्य धर्मशास्त्रेण दर्शितस्य वेषस्य परिधान निरर्थकं, जैनलिङ्गमपि परिहितं भवेदथवा गृहिलिङ्गमपि धारितं भवेद् ततोऽपि काऽपि कृतार्थता प्राप्ता न भवतीति ॥१८०॥

—: समयसारस्य ज्ञातारो न बालबुद्धयः :—

'पाषण्डिगणलिङ्गेषु, गृहिलिङ्गेषु ये रताः ।
न ते समयसारस्य, ज्ञातारो बालबुद्धयः ॥१८१॥

टी० ये पाषण्डिनां गणस्य लिङ्गेषु गृहिणां लिङ्गेषु रताः—रतिमन्तः स्युस्ते बालबुद्धयो—

अज्ञानताविशिष्टमतिमन्तो जीवाः—आत्मानो समयसारस्य शास्त्ररहस्यस्य ज्ञातारो—वेदिनो न ज्ञेयाः, (पण्डितोऽपि भवेन्मूर्खो यस्य बुद्धिर्न तात्त्विकी इति वाक्यमपि न विस्मरणीयम्) ॥१८१॥

—: भावलिङ्गरता ये स्युः सर्वसारविदो हि ते :—

'भावलिङ्गरता ये स्युः सर्वसारविदो हि ते ।
लिङ्गस्था वा गृहस्था वा सिद्ध्यन्ति धूतकल्मषाः ॥१८२॥

टी० 'भावलिङ्गरता' इति—ये भावलिङ्गे—रत्नत्रयरूपे भावलिङ्गे परायणाः स्युः-भवेयुस्ते सर्वशास्त्रस्य सारं—रहस्यं विदन्तीति-सर्वसारविदः कथ्यन्ते हि-यतः लिङ्गस्था अथवा गृहस्था भावलिङ्गस्था अत एव सर्वसारविदः सन्तः 'धूतकल्मषाः'—कर्मरहिताः—क्षीणकृत्स्नकर्माणः सिद्ध्यन्तीति--सिद्धा—भवन्तीति ॥१८२॥

—: आत्यन्तिकैकान्तिकत्वेन भावलिङ्गमेव मोक्षाङ्गम् :—

'भावलिङ्गं हि मोक्षाङ्गं, द्रव्यलिङ्गमकारणम् ।
द्रव्यं नात्यन्तिकं यस्मा—नाप्यैकान्तिकमिष्यते ॥१८३॥

टी हीतिनिश्चयं, रत्नत्रयरूपं भावलिङ्गमेव मोक्षं प्रत्यव्यवहितकारणं द्रव्यलिङ्गं न कारणमकारणं-कारणतारहितं (अपेक्षातोऽन्यथासिद्धं) यतो द्रव्यं नात्यन्तिकं—न नित्यं, नाऽप्यैकान्तिकं=नियमतो न

कारणमर्थात् द्रव्यलिङ्गे सति मोक्षोऽवश्यं भवेदेवेत्यपि न, द्रव्यलिङ्गाभावे मोक्षो न भवतीत्यपि न परन्तु रत्नत्रयरूपभावलिङ्गे सति मोक्षो भवत्येव, भावलिङ्गेऽसति मोक्षो न भवतीति मोक्षं प्रत्यन्वयव्यतिरेकाभ्यां भावलिङ्गमेव कारणमिति विशिष्टकार्यकारणभावो विज्ञेय इति ॥१८३॥

–: दिगम्बराभिमत मतखण्डनम् :–

'यथाजातदशालिङ्गमर्थादव्यभिचारि चेत् ।
विपक्षबाधकाभावात्तद्धेतुत्वे का प्रमा ॥१८४॥

टी० ननु 'यथाजातदशालिङ्गम्'=या जन्मकालीनसर्वथानग्नाऽवस्थारूपं लिङ्गं अर्थादव्यभिचारि'= मोक्षं प्रति व्यभिचारशून्यं कारणं कथं नेति चेत् , युष्माकं विरोधे कश्चिद्ब्रूयात् 'निर्ग्रन्थमुनिलिङ्गमेव मोक्षकारणमस्तीति तत्सम्मुखे प्रत्युत्तराय काऽपि बाधकयुक्तिरस्ति ? अर्थाद् विपक्षे बाधकाभावात् तद्धेतुत्वे का प्रमा ? यदि नास्ति विपक्षे बाधकयुक्तिस्तदा तु यथाजातलिङ्गस्य मोक्षस्य कारणस्य कथने किमपि प्रमाणं नास्त्येवेति ॥१८४॥

–: तदेवाऽग्रे स्पष्टयति :–

'वस्त्रादिधारणेच्छा चेद्बाधिका तस्य तां विना ।
धृतस्य किमवस्थाने, करादेरिव बाधकम् ॥१८५॥

टी० ननु युष्माकं विरोधे प्रत्युत्तराय युक्तिरस्ति यथा 'मुनिलिङ्गमेव मोक्षस्य कारणं चेत्तदा वस्त्रादि धारयितुमिच्छा भवेदेवेच्छा च मोक्षप्रतिबन्धिकैवमिच्छैव युष्मदीयविपक्षं बाधितं कथं न कुर्यातिति चेत्तादृशवस्त्रादिविषयकेच्छां विनैव मुनिर्वस्त्राणि धारयेत्तदा न तस्य वस्त्रधारकस्य मुनेर्मोक्षप्राप्तौ न कश्चित् प्रतिबन्धकोऽस्ति ? यथा विनेच्छां हस्तपादादिधारणे किमपि बाधकं नास्ति तथाऽत्रापीच्छां विना वस्त्रादिधारणे मोक्षजनने किमपि बाधकं नास्त्येवेति ॥१८५॥

– पुनरपि तन्मतखण्डनं विशदयति –

'स्वरूपेण च वस्त्रं चेत् केवलज्ञानबाधकम् ।
तदा दिक्पटनीत्यैव, तत्तदावरणं भवेत् ॥१८६॥

टी० ननु अस्तु तावदिच्छां विना वस्त्रं परिहितं तथाऽपि शरीरे तिष्ठद् वस्त्रं कथं केवलज्ञानप्रतिबन्धकं न ? इति चेद् धन्यवादार्हा अहो अपूर्वा वार्त्ता कथं कुत उपनीता ? यद् यथा केवलज्ञानं प्रति केवलज्ञानावरणाख्यं कर्म प्रतिबन्धकं सर्वसम्मतमस्ति परन्तु नवीनदिक्पटनीत्यैव केवलज्ञानं प्रति वस्त्रावरणं कर्माऽलौकिकं बाधकं सृष्टं तदश्रुतपूर्वमयाचितपूर्वं शास्त्रे तत्र दिक्पटनीतौ शोभास्पदं नाऽन्यत्रेति ॥१८६॥

–: यदि कोऽपि केवलिनि पटं क्षिपेत् तदा तस्य केवलित्वं न स्यादेव :–

'इत्थं केवलिनस्तेन मूर्ध्नि क्षिप्तेन केनचित् ।
केवलित्वं पलायेतेत्यहो किमसमञ्जसम् ॥१८७॥

टी० हे दिक्पट ! यदि पट एव केवलज्ञानं प्रतिबध्नीयात्तदा (दिक्पट) केवलिनो मूर्ध्नि केनचिद् भक्तेन क्षिप्तेन पटेन तत्कालमेव केवलित्वं पलायेत न तिष्ठेदिति, अहो इत्याश्चर्ये 'किमसमञ्जसं' अहो किंदृशमयुक्तमप्रमाणकम्, अत्राध्यात्मवादः कुत्र गतो–निश्चयवादः कुत्र गतः ? बाह्ये न कदाचिदान्तरो भावो न बाध्यते एव, यदि बाध्येत तदा शरीरेण केवलज्ञानं बाधनीयमेव, यतो वस्त्रातः शरीरं निकटतममेवास्ति, अरे ! शरीरतोऽप्यत्यन्तनिकटवर्तिजडभूताऽघातिकर्मसंस्पर्शेन कथं केवलज्ञानं न पलायेतेति प्रश्नो दिक्पटं प्रति मदीयोऽस्ति ॥१८७॥

–भावलिङ्गात्ततो मोक्षो बाह्यभिन्न २ लिङ्गेष्वपि ध्रुवः–

'भावलिङ्गात्ततो मोक्षो भिन्नलिङ्गेष्वपि ध्रुवः–
कदाग्रहं विमुच्यैतद् भावनीयं मनस्विना ॥१८८॥

टी० गृहिलिङ्गादिसमस्तभेदभिन्नयथाजातदशादिकसम्पन्नस्य कस्यचिन्मोक्षजनने एकान्तनियमो नास्ति, परन्तु नियमस्त्वेतावानेव यद् यत्र कुत्रापि लिङ्गे सत्यपि दशायां वा सत्यामपि रत्नत्रयरूपभाव-

लिङ्गे सत्येव मोक्षो भवत्येव, रत्नत्रयरूपभावलिङ्गाभावे मोक्षो न भवत्येव, अत्र ग्रन्थकारा मनस्विनः प्रति निवेदयति सस्नेहं भो भ्रातः ! कदाग्रहं विमुच्य, एषा सत्यवस्तुस्थितिर्भावनीया, भवता मनस्विना—प्रशस्तमनःशालिनेति ॥१८८॥

–शुद्धाशुद्धनयाभ्यामबद्धमुक्तौ बद्धमुक्ताविति स्थितिः–

'अशुद्धनयतो ह्यात्मा, बद्धो मुक्त इति स्थितिः ।
न शुद्धनयतस्त्वेष, बध्यते नापि मुच्यते ॥१८९॥

टी० अशुद्धनिश्चयनयतो ह्यात्मा, शुभाशुभभावे बध्यते, च शुद्धभावे मुच्यते, शुद्धनिश्चयनयतस्तु केनचिदप्यात्मा, न बध्यतेऽत एव न मुच्यते अत्राऽऽत्मनो मोक्षतत्त्वतो भेदविचारः पूर्णो जातः, तेन सहाऽऽत्मनोऽजीवाद्यष्टतत्त्वेभ्यो भेदनिरूपणं पूर्णं सञ्जातमिति ॥१८९॥

–आत्मतत्त्वविनिश्चयमेव कुर्याद्विचक्षणः—

'अन्वयव्यतिरेकाभ्यामात्मतत्त्वविनिश्चयम् ।
नवभ्योऽपि हि तत्त्वेभ्यः, कुर्यादेवं विचक्षणः ॥१९०॥

टी० एवं रीत्या शुद्धनिश्चयनयतोऽजीवान्यजीवादितत्त्वेभ्यो विवक्षिताऽऽत्मनो व्यतिरेको भेदो विचारणीयो, व्यवहारनयादितश्चात्मनोऽन्वयोऽभेदः परामर्शनीयो विचक्षणेन पुरुषेणेति ॥१९०॥

—निश्चयदृष्ट्याऽऽत्मतत्त्वविचारमहिमा—

'इदं हि परमाध्यात्म-ममृतं ह्यद एव च ।
इदं हि परमं ज्ञानं, यागोऽयं परमः स्मृतः ॥११९१॥

टी० 'इद हि'=निश्चयदृष्ट्याऽऽत्मतत्त्वचिन्तनम्, 'परमाध्यात्मं'=अतो विशेषतोऽध्यात्ममन्यन्नाऽस्ति, सर्वाऽध्यात्मसार्वभौममध्यात्मं 'ह्यद एव परममृतं'=सर्वाऽमृताऽतिशायिसुधास्वरूपं-सर्वोत्कृष्टममृतममृतपदकारित्वादेव, 'इदं हि परमं ज्ञानं'=अस्मिञ्ज्ञाते सर्वं ज्ञातं, अस्मिंश्चाज्ञाते सर्वमज्ञातमेव, 'अयं परमो योगः'=अस्माद् विशिष्टः कोऽप्यन्यो योगो नास्ति, यतो मोक्षेण सहाऽव्यवहितत्वेन योजनादिति ॥११९१॥

—पूर्वोक्तविषयमेव पुनर्द्रढयति—

'गुह्याद् गुह्यतरं तत्त्वं-मेतत्सूक्ष्मनयाश्रितम् ।
न देयं स्वल्पबुद्धीनां, ते ह्येतस्य विडम्बकाः ॥११९२॥

टी० शुद्धनिश्चयरूपसूक्ष्मनयदृष्ट्या शुद्धात्मस्वरूपचिन्तनमेतद् 'गुह्याद्गुह्यतरं तत्त्वम्'=अत्यन्तगूढातिगूढतरं तत्त्वमस्ति, अत एवैतद् विद्वद्भिः स्वल्पबुद्धीनां—अतितुच्छमतीनां न देयम्, हि=यत एतस्य—निगूढतत्त्वस्य ते—तुच्छबुद्धयः, विडम्बकाः=विडम्बनाकारिणः स्युरिति ॥११९२॥

–जनानामल्पबुद्धीनां नैतत्तत्त्वं हितावहम्—

'जनानामल्पबुद्धीनां, नैतत्तत्त्वं हितावहम् ।
निर्बलानां क्षुधार्त्तानां भोजने चक्रिणो यथा ॥११३॥

टी० 'अल्पबुद्धीनां जनानामेतत्तत्त्वम्' तत्त्वगामिबुद्धिशून्यानां जनानां शुद्धनिश्चयनयाऽपेक्षितशुद्धात्मस्वरूपतत्त्वं 'न हितावहं'–न हितकारि यथा क्षुधयाऽऽर्त्तानां निर्बलानां=मन्दजठराग्नीनां='चक्रिणो'=चक्रवर्तिनो भोजन न हितावहं तथा प्रकृतेऽपि ज्ञेयमिति ॥११३॥

–ज्ञानलवदुर्विदग्धानां तत्त्वमेतदनर्थकृत्–

'ज्ञानांशदुर्विदग्धानां तत्त्वमेतदनर्थकृत् ।
अशुद्धमन्त्रपाठस्य, फणिरत्नग्रहो यथा ॥११४॥

टी० पुस्तकानामुपर्युपरितनीयज्ञानलवेन पण्डितमानिनामेतत्तत्त्वमनर्थकारि भवति यथाऽशुद्धो मन्त्रपाठो यस्य तस्याऽशुद्धमन्त्रपाठस्य, फणिनो रत्नस्य ग्रहणमनर्थकारीति तथाऽत्रापि ज्ञेयम् ॥११४॥ 

–: पूर्वं व्यवहारकुशलो भूत्वा पश्चान्निश्चयनयजिज्ञासा कार्या :–

'व्यवहाराऽविनिष्णातो यो ज्ञीप्सति विनिश्चयम् ।
कासारतरणाऽशक्तः, सागरं स तितीर्षति ॥१९५॥

टी० यो 'व्यवहाराऽविनिष्णातः'=व्यवहारनयरूपदृष्टि पूर्णतया न ज्ञातुं व्यवहर्त्तुं वा न विशेषेण निष्णातः सन् 'विनिश्चियं=विशिष्टनिश्चयनय ज्ञीप्सति=ज्ञातुमिच्छति, स पुरुषः, कासारस्य-सरस्यास्त-रणेऽशक्तः=शक्तिरहितः सन् सागरं तितीर्षति—तरीतुमिच्छति, क्रमशः पूर्वं व्यवहारनयेन व्यवहर्त्तव्यं ततोऽस्य परिपाक एव निश्चयनयतत्त्वविषयकज्ञानयोग्यभूमिकारूपो भवतीति ॥१९५॥

-: व्यवहारं विनिश्चित्य शुद्धनयाऽऽश्रय :-

'व्यवहारं विनिश्चित्य, ततः शुद्धनयाऽऽश्रितः ।
आत्मज्ञानरतो भूत्वा, परमं साम्यमाश्रयेत् ॥१९६॥

टी० ततः=तस्मात्कारणाद् व्यवहारनयं जीवनमात्कृत्वा, योऽन्तरात्मा, शुद्धनिश्चयनयसम्मत-दृष्टिरहस्यान्याश्रयते, सोऽन्तरात्मा, 'आत्मज्ञानरतः'=आत्मविषयकज्ञाने परायणो वा रतिमान् भूत्वा 'परमं साम्यमाश्रयेत्'=परमशुद्धसमतारूपं निःश्रेयसमाश्रयेत्=आश्रितो भवेदिति ॥१९६॥

इत्याचार्य श्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृता-ध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायामात्मनिश्चयनामकोऽष्टादशोऽधिकारः समाप्तः ॥८७३॥

-: श्री जिनमतस्तुतिनिरूप एकोनविंशोऽधिकारः :-

श्री जिनशासनं जलनिधिमाश्रये (शार्दूलविक्रीडितम्)

उत्सर्पद्व्यवहारनिश्चयकथाकल्लोलकोलाहल-
त्रस्यद्दुर्नयवादिकच्छपकुलं भ्रश्यत्कुपक्षाऽचलम् ।
उद्यद्युक्तिनदीप्रवेशसुभगं स्याद्वादमर्यादया,
युक्तं श्रीजिनशासनं जलनिधिं मुक्त्वा परं नाश्रये ॥१॥

टी० 'श्रीजिनशासनं जलनिधिं मुक्त्वा परं नाश्रये इति सण्टङ्कः, कीदृशं जिनशासनं जलनिधिं ? इति प्रश्ने आह–'उत्सर्पदादिनः कुलपर्यन्तं'=उत्सर्पन्तः-उच्छलन्तो ये व्यवहारनिश्चयकथारूपाः कल्लोलाः महातरङ्गास्तेषां कोलाहलेन–अव्यक्तकलकलमहाध्वनिविशेषेण, त्रस्यन्तो–भयभीता ये दुर्नयवादिरूपाः कच्छपाः कूर्मास्तेषां कुलं (सजातीयसमुदायरूप) यत्र तं, पुनः की० श्रीजिन० जलनिधिं ? इत्याह 'भ्रश्यत्कुपक्षाऽचलम्'=त्रुट्यन्तः कुपक्षा एवाचला गिरयो यत्र तमिति, पुनः की० श्रीजिन० जल० ? इत्याह–उद्यद्युक्तिनदीप्रवेशसुभगं'=अबाध्ययुक्तिरूपाणां नदीनां प्रवेशेन परमशोभावन्तमिति• पु० की० श्री जि० ज० ? 'स्याद्वादमर्यादया युक्तं'=अनेकान्तवादरूपया समुद्रतटस्य पृथिव्या शोभितमिति.

एतादृशविशेषणचतुष्टयविशिष्टं श्रीजिनशासनरूपं जलनिधिं मुक्त्वा परं कमपि शासनजलनिधिं नाश्रये न शरणं गच्छामीति ॥१॥

—: सदा विजयते स्याद्वादकल्पद्रुमः :—

❀ पूर्णः पुण्यनयप्रमाणरचनापुष्पैः सदाऽऽस्थारसैः ❀
तत्त्वज्ञानफलः सदा विजयते स्याद्वादकल्पद्रुमः ।
एतस्मात् पतितैः प्रवादकुसुमैः षड्दर्शनाऽऽरामभूः,
भूयः सौरभमुद्वमत्यभिमतैरध्यात्मवार्त्तालवैः ॥२॥

टी० सदा विजयते स्याद्वादकल्पद्रुम इति सण्टङ्कः की० स्या० क० ? इत्याह—'सदास्थारसैः'= सम्यग्दर्शनरूपो रसो यत्र तैः, 'पुण्यनयप्रमाणरचना पुष्पैः पूर्णः'=निर्दोषाणां नयानां प्रमाणानां च रचनाः-स्वरूपलक्षणविभागादिभिर्निरूपणरूपा रचनास्तद्रूपैः पुष्पैर्भरितः, पु० की० स्या० क० ? इत्याह—'तत्त्वज्ञानफलः'=तात्पर्यविशिष्टतत्त्वज्ञानरूपं फलं यत्र स इति, पु० की० स्या० क० ? इत्याह 'एतस्मात्'= एतस्माद्वादरूपकल्पद्रुमात, 'अभिमतैरिष्टैः 'अध्यात्मवार्त्तालवैः'=अध्यात्मविषयकवार्त्ताया लेशो यत्र तैः, पतितैः प्रवादकुसुमैः'=तादृशद्रुमादधःपतितैः निर्गतैर्वा प्रकृष्टवादनामकप्रवादकुसुमैः 'षड्दर्शना-

रामभूः' दर्शनषट्करूपस्यारामस्योपवनस्य भूः-पृथिवी. 'भूयः सौरभमुद्वमति'=पुनः पुनः पुष्कलं वा सौरभमुत्कर्षेण प्रमारयत्येवेति ॥२॥

– विजयते जैनागमो मन्दरः –

चित्रोत्सर्गशुभापवादरचनासानुश्रियाऽलङ्कृतः,
श्रद्धानन्दनचन्दनद्रुमनिभप्रज्ञोल्लसत्सौरभः ।
भ्राम्यद्भिः परदर्शनग्रहगणै रासेव्यमानः सदा,
तर्कस्वर्णशिलोच्छ्रितो विजयते जैनागमो मन्दरः ॥३॥

टी० विजयते जैनागमो मन्दर इति सण्टङ्कः की. जैं० मन्दरः ? इत्याह 'चित्रादितः श्रियालङ्कृतः इति यावत्=वैविध्यविशिष्टस्योत्सर्गमार्गस्य शुभत्वशोभितस्यापवादमार्गस्य च विशिष्टप्ररूपणरचनारूपशिखराणां श्रिया समलङ्कृतोऽयम्, पु०की० जैं०म० ? इत्याह 'श्रद्धानन्दनचन्दनद्रुमनिभप्रज्ञोल्लसत्सौरभः' सम्यक्त्वनामकनन्दनवनस्थचन्दनतरुमामानसम्यग्ज्ञानद्वारा प्रसारितपरिमलवानयम् पु० की० जैं० म० ? इत्याह 'भ्राम्यद्भिः परदर्शनग्रहगणैरासेव्यमानः सदा' प्रदक्षिणया भ्रमणं कुर्वद्भिः परदर्शनरूपै ग्रहाणां गणैः सदाऽऽसेव्यमानः आधारतयाऽऽराध्यमानोऽयम्, पु० की. जैं० मन्दरः ? इत्याह 'तर्कस्वर्ण-

शिलोच्छ्रितः'=सत्यन्याययुक्तिरूपाभिः सुवर्णशिलाभिर्महोन्नतोऽयमिति तादृशविशेषणचतुष्टयविशिष्टो जैनागमरूपो मन्दरो–मेरु विजयते इति ॥३॥

-रविर्जैनागमो नन्दतात्—

'स्याद्दोषापगमस्तमांसि जगति चीयन्त एव क्षणात्,
अध्वानो विशदीभवन्ति निबिडा निद्रा दृशो गच्छति ।
यस्मिन्नभ्युदिते प्रमाणदिवसप्रारम्भकल्याणिनी,
प्रौढत्वं नयगो ददाति स रविर्जैनागमो नन्दतात् ॥४॥

टी० स रविर्जैनागमो नन्दतादिति मण्डूकः– (१) 'यस्मिन्नभ्युदिते जगति दोषापगमः स्या'दिति= यस्मिन्रवावुदिते सति बाह्यजगति दोषाया रात्रेरपगमः स्यात् परन्तु जैनागमरूपरवावुदिते आत्मरूपजगति मोहरूपदोषस्यापगमो विनाशः स्यात् (२) 'तमांसि क्षणादेव क्षीयन्ते'=यथा बाह्यतमांसि क्षीयन्ते बाह्य जगति तथान्तरजगति पापाज्ञानतमांसि एकक्षण एव प्रनष्टानि भवन्ति ।
(३) 'अध्वानो विशदीभवन्ति' सूर्यपक्षे बाह्यमार्गाः स्पष्टीभवन्ति, जैनागमपक्षे मोक्षमार्गाः प्रकटीभवन्ति (४) दृशो निबिडा निद्रा गच्छति' सूर्यपक्षे चर्मचक्षुषोर्गाढा निद्रा दूरीभवति. जैनागमपक्षे सम्यग्दर्शनज्ञान- 

रूपयो र्व्यवहारनिश्चयरूपयो ज्ञानक्रियारूपयोरुत्सर्गापवादरूपयो र्भावनयनयो र्मिथ्यात्वमोहरूपा गाढ-निद्रा निर्गच्छति (५) 'प्रमाणदिवसप्रारम्भकल्याणिनी प्रौढत्वं नयगौर्ददातीति=सूर्यपक्षे प्रमाणपूर्वक दिवसस्य प्रारम्भतः कल्याण-आरोग्यप्रदकिरणावली वृद्धि ददाति जैनागमपक्षे, प्रत्यक्षादिप्रमाणपूर्वक-ज्ञानदिवसस्य प्रारम्भतः भावारोग्यप्रदनयगर्भितवाणी वृद्धिं ददात्येव एतादृशवैशिष्ट्यपञ्चकदर्शको जैनागमरूपो रवि र्नन्दतात्-समृद्धिविजयवान् भवतादिति ॥४॥

-सोऽयं श्रीजिनशासनाऽमृतरुचि कस्यैति नो रुच्यताम् -

'अध्यात्मामृतवर्षिभिः कुवलयोल्लासं विलासैर्गवाम् ।
तापव्यापविनाशिभिर्वितनुते, लब्धोदयो यः सदा ।
तर्कस्थाणुशिरःस्थितः परिवृतः, स्फारैर्नयैस्तारकैः,
सोऽयं श्रीजिनशासनाऽमृतरुचिः कस्यैति नो रुच्यताम् ॥५॥

टी० (१) 'यः सदा लब्धोदयः सन्, अध्यात्माऽमृतवर्षिभिः, तापव्यापविनाशिभिर्गवां विलासैः कुवलयोल्लासं वितनुते'=यो निरन्तरं (मात्रशुक्लपक्षे न) उदयसम्पन्नः सन्, अध्यात्मरूपामृतवर्षिभिः, आध्यादिरूपतापव्याप्तिविनाशिभिः, 'गवांविलासैः' वाचां वा रुचां वा विचेष्टितैः, पृथ्वीवलयस्य वा कमलस्य

वा विकासं कुरुते (२) पु की. श्री जि० अमृतरुचिः ? इत्याह 'तर्कस्थाणुशिरःस्थितः' न्याययुक्तिविशिष्ट तर्करूपशङ्करस्य शिरसि-मस्तके भूषणरूपः (३) पु.की. श्रीजि. अ. ? इत्याह नयरूपैस्तारकैः परिवृतः, एतादृशः सोऽयं श्रीजिनशासनामृतरुचिः-श्रीजिनशासनरूपश्चन्द्रः, कस्येति नो रुच्यताम्'=कस्य पुरुषस्य रुचिविषयतां नैति ? अर्थात् सर्वजनस्य सोऽयं जिनशासनचन्द्र आनन्दविषयतामेत्येवेति ॥५॥

–जैनी दृष्टिरितीह सारतरता प्रत्यक्षमुद्वीक्ष्यते–

'बौद्धानामृजुसूत्रतो मतमभूद् वेदान्तिनां सङ्ग्रहात्,
साङ्ख्यानां तत एव नैगमनयाद् योगश्च वैशेषिकः ।
शब्दब्रह्मविदोऽपि शब्दनयतः सर्वैर्नयैर्गुम्फिता,
जैनी दृष्टिरितीह सारतरता प्रत्यक्षमुद्वीक्ष्यते ॥६॥

टी० ऋजुसूत्रनयतो बौद्धानां मतं-दर्शनमभूत संग्रहनयतो वेदान्तिनां च साङ्ख्यानां-कापिलानां मतं-दर्शनं प्रकटितं, नैगमनयतो योगः-नैयायिकः, वैशेषिकश्च प्रकटितौ, शब्दनयतःशब्दब्रह्मविदो मतमभूत्, तत्त्वतः सर्वैर्नयैः गुम्फिता जैनी दृष्टि र्वर्त्तते, सर्वनयविषयकरचनाविशिष्टं जैनं दर्शनं विद्यते

इति—अस्मात्कारणादिह—जैनदर्शने सारतरता—आत्यन्तिकसारवत्ता, प्रत्यक्षं साक्षाद् उद्वीक्ष्यते-दृश्यते ॥६॥

—सर्वपरदर्शनरूपनयैः सर्वादरणीयोऽयं जिनेन्द्रागमः—

'ऊष्मा नार्कमपाकरोति दहनं, नैव स्फुलिङ्गावली,
नाऽब्धि सिन्धुजलप्लवः सुरगिरिं ग्रावा न चाभ्यापतन् ।
एवं सर्वनयैकभावगरिमस्थानं जिनेन्द्रागमम्,
तत्तद्दर्शनसङ्कथांशरचनारूपा न हन्तुं क्षमा ॥७॥

टी० ऊष्मा (उष्णवस्तु बाष्पो वा) नाऽर्कं--न सूर्यमपाकरोति, यतस्तज्जनकः सूर्योऽस्ति, स्फुलिङ्गावली--अग्निकणावली, दहनमग्निं नैवाऽपाकरोति, यतस्तज्जनकोऽग्निरस्ति, अब्धिं--सागरं, सिन्धुजलप्लवः-नदीजलपूरो नाऽपाकरोति, यतः स तत्पतिरस्ति 'न चाऽभ्यापतन् ग्रावा'=गण्डशैलरूपो ग्रावा प्रस्तरः, अभित आपतन् , सुरगिरिं—मेरुगिरिं नाऽपाकरोति यतः स तस्याऽऽश्रयोऽस्ति, एवमनया रीत्या 'सर्वनयैकभावगरिमस्थानं'=सर्वेषां नयानामेकभावेन—एकत्वेन गुरुतायाः स्थानं—मुख्यमूलस्थानं जिनेन्द्रागमं—जैनप्रवचन, 'अंशरचनारूपा'=जिनेन्द्रागमतोऽशं गृहीत्वा प्ररूपणारूपा, तत्तद्दर्शनसङ्कथा, दर्शनविशेषाणां सम्यक्कथनरूपसङ्कथा• स्वजनकाऽऽधारपतिविशेषरूपं न हन्तुं -तिरस्कर्तुं क्षमा--समर्था भवतीति॥७॥

—नाऽयं कोपक्रमः सर्वहितावहे जिनमते तत्त्वप्रसिद्धयर्थिनाम्—

'दुःसाध्यं परवादिनां परमतक्षेपं विना स्वं मतम्,
तत्क्षेपे च कषायपङ्ककलुषं चेतः समापद्यते ।
सोऽयं निःस्वनिधिग्रहव्यवसितः वेतालकोपक्रमः,
नाऽयं सर्वहितावहे जिनमते, तत्त्वप्रसिद्धयर्थिनाम् ॥८॥

टी० परवादिनां परेषां मतस्य क्षेपं--खण्डनं विना स्वं मतं दुःसाध्यं--दुःखेन स्थापनीयं भवत्यर्थादसाध्यं भवति, तत्क्षेपे--परमतखण्डने च कषायरूपपङ्केन कलुषं- मलिनं, चेतः- चित्तं समापद्यते -समापन्नं भवति, सोऽयं=परमततिरस्कारादिरूपो व्यापारोऽस्य, 'निःस्वनिधिग्रहव्यवसितः'=निर्धनस्य निधानस्य ग्रहणे व्यवसायवान्--उद्यमवान् 'वेतालकोपक्रमः'=वेतालपिशाचादिकस्य क्रोधविधितुल्यो भवति, परन्तु अयं-परमततिरस्कार-द्वेषादिव्यापारः,सर्वहितकारके जिनमते तत्त्वस्य प्रसिद्धेः-प्रकृष्टसिद्धेरर्थिनां न दृष्टिपथार्होऽपि भवतीति॥८॥

—नश्चेतो नितमां लीनं जिनेन्द्राऽऽगमे—

'वार्त्ताः सन्ति सहस्रशः प्रतिमतं ज्ञानांशबद्धक्रमाः,
चेतस्तासु न नः प्रयाति नितमां लीनं जिनेन्द्राऽऽगमे ।

नोत्सर्पन्ति लताः कति प्रतिदिशं पुष्पैः पवित्रा मधौ,
ताभ्यो नैति रतिं रसालकलिकारक्तस्तु पुंस्कोकिलः ॥९॥

टी० ज्ञानस्यांशेन बद्धः क्रमः (अनुक्रमो विधिर्वा) यासां ता वार्त्ताः प्रतिमतं--मते मते सहस्रशः--सहस्रप्रमाणाः सन्ति, तथाऽपि जिनेन्द्रागमे जैनेन्द्रप्रवचने, नितमां--सुतरां, लीनं--निमग्नं नश्चेतः--अस्माकं मनः 'तासु वार्त्तासु न प्रयाति'- ता वार्त्ताःप्रति न प्रकर्षेण याति यतः सर्वज्ञशासनीयवार्त्ता अविसंवादिन्यः मधौ- वसन्ततौ प्रतिदिश- दिशि दिशि कति लताः--वल्लयः पुष्पैः पवित्रा नोत्सर्पन्ति न वर्धन्ते ? अपितु वर्धमाना एव तिष्ठन्ति तथापि 'रसालकलिकारक्तः'=चारुचूतमञ्जरीमधुरतामत्तः पुंस्कोकिलः, ताभ्यो लताभ्यो नैति रतिं-प्रीतिरम्यं न प्राप्नोतीति ॥९॥

– जैनेन्द्रे तु मते शब्दार्थविषयकसदेहव्यथा न जात्यन्तरार्थस्थितेः –

शब्दा वा मतिरर्थ एव वस्तु वा जातिः क्रिया वा गुणः ।
शब्दार्थः किमिति स्थिता प्रतिमतं सन्देहशङ्कुव्यथा।
जैनेन्द्रे तु मते न सा प्रतिपदं जात्यन्तरार्थस्थितेः,
सामान्यं च विशेषमेव च यथा-तात्पर्यमन्विच्छति ॥१०॥

टी० शब्दार्थः किं ? शब्दस्वरूपः ? मतिस्वरूपः ? अर्थस्वरूपः ? द्रव्यस्वरूपः ? जातिस्वरूपः ? क्रियास्वरूपः ? गुणस्वरूपः ? शब्दार्थः किमिति, प्रतिमतं--मते मते सन्देहरूपशङ्कु–(दारुविकारविशेष) व्यथा स्थिता वर्त्तते. तु परन्तु जैनेन्द्रे मते, सा-सन्देहव्यथा, नास्ति, यतः प्रतिपदं--पदे पदे जात्यन्तरार्थ-स्थितेः, अर्थाज्जैनमते सा वेदना नास्ति यतः प्रत्येकपदार्थे जात्यन्तरवैशिष्ट्यं मन्यमानमस्ति यथा पदार्थः किं शब्दरूपो वाऽर्थरूपो वाऽस्ति ? इति प्रश्ने सति तत्प्रत्युत्तरदानमेवमस्ति, कथंचिच्छब्दरूपः, कथंचिदर्थरूपः पदार्थोऽस्ति पदार्थे केवला न शब्दत्वजाति नाऽप्यर्थत्वजातिरपितूभयतो भिन्नजात्य-न्तरस्वरूपविशिष्टोऽयं पदार्थः, यथा शुण्ठीगुडोभयसंयोगजाता, गुटिका न शुण्ठीमात्रा, नाऽपि गुडमात्रा कथ्यतेऽपि तु विलक्षणजात्यन्तररूपा, गुटिका कथंचिद् शुण्ठीस्वरूपा, कथंचिद् गुडस्वरूपाऽपि मुख्यतो जात्यन्तरस्वरूपविशिष्टा कथ्यते, तथा प्रकृतेऽत्र सुज्ञेयम् 'यथातात्पर्यं'=तात्पर्यमनतिक्रम्य–तात्पर्यालम्बन-विशिष्टं सामान्यं च विशेषमेवान्विच्छति, तात्पर्यसहितं सामान्यं विशेषं चान्वेषणान्वितं करोति, जैनमतं तात्पर्यरहितं सामान्यं विशेषं च पदार्थतया न मन्यते, तात्पर्यसहितं सामान्यं च विशेषं पदार्थतया मन्यते, तात्पर्यस्य स्फोटोऽग्रे स्पष्टो भविष्यतीति ॥१०॥

–लोकोत्तरभङ्गपद्धतिमयीं स्याद्वादमुद्रां स्तुमः—

'यत्राऽनर्पितमादधाति गुणतां मुख्यं तु वस्त्वर्पितम्,
तात्पर्याऽनवलम्बनेन तु भवेद्बोधः स्फुटं लौकिकः ।

सम्पूर्णं त्ववभासते कृतधिया कृत्स्ना विवक्षा क्रमात्,
तां लोकोत्तरभङ्गपद्धतिमयीं स्याद्वादमुद्रां स्तुमः ॥११॥

टी॰ यत्र–यस्या स्याद्वादमुद्रायां अनर्पित (असाक्षाद्) भावविशिष्टं वस्तु 'गुणतामादधाति' गौणभावं बिभर्ति, तु–परन्तु अर्पित–अर्पितभाव (साक्षाद्) विशिष्टं वस्तु मुख्यं समुच्यते परन्तु तात्पर्यावलम्बनाभावपूर्वको घटादिपदार्थविषयको बोधः स्फुटं लौकिकः कथ्यते यत्र तात्पर्यस्याऽवलम्बनं क्रियते तत्र कृतधियां–व्युत्पन्नानां सकलविचक्षणानां क्रमतो यः पदार्थबोधो जातः सम्पूर्णतयाऽवभासते, तादृशी तां लोकोत्तरभङ्गाना पद्धतिमयी- प्रणालिकामयी स्याद्वादमुद्रां स्तुमः--स्तुतिविषयां कुर्मः, अनन्तपर्यायाऽऽत्मकं वस्त्वेवंभूततात्पर्यमवलम्ब्य घटत्वधर्मं मुख्य कुर्वन्, घटस्य चाऽन्यधर्मान् गौणीकृत्य सम्यग्दृष्टिरात्मा, घटस्य घटत्वधर्मस्य मुख्यतया विवक्षा करोति, तस्मात् सम्यग्दृष्टे र्जायमानो घटबोधः सम्पूर्णो भवति, एप बोधः स्याद्वादपद्धत्या जायते ततो ग्रन्थकारः श्रीमान स्याद्वादमुद्रायाः स्तुति विदधातीति ॥११॥

–तं जैनागममाकलय्य न वयं व्याक्षेपभाजः क्वचित्—

'आत्मीयाऽनुभवाऽऽश्रयार्थविषयोऽप्युच्चैर्यदीयक्रमो,
म्लेच्छानामिव संस्कृतं तनुधियामाश्चर्यमोहावहः ।

व्युत्पत्तिप्रतिपत्तिहेतु—विततस्याद्वादवाग्गुम्फितम् ,
त जैनागममाकलय्य न वयं, व्याक्षेपभाजः क्वचित् ॥१२॥

टी० 'आत्मीयाऽनुभवाश्रयार्थविषयः'=आत्मकृताऽनुभवात्मकप्रमाणभूतज्ञानरूपाधिकरणकपदार्थरूपविषयवान , स्वानुभवं प्रतीत्यार्थानुरूपप्ररूपकः, 'उच्चैर्यदीयक्रमः'=उच्चकोटिको यज्जैनागमस्य व्यवस्थारूपक्रमोऽपि, 'म्लेच्छानामिव संस्कृतं तनुधियामाश्चर्यमोहावहः'=अनार्याणां आर्यभाषारूपसंस्कृतभाषा यथा आश्चर्यमोहकारिणी भवति तथा स्वल्पबुद्धीनामाश्चर्यमोहकारको भवतु तथापि सूक्ष्मतीक्ष्णमध्यस्थधियामाश्चर्यमोहकारको न भवतीति, व्युत्पत्तिभिः प्रतिपत्तिभि हेतुभि र्वितता--विस्तृता या स्याद्वादस्य वाग्-वाणी, तया गुम्फितं--प्रणीतं, तं जैनागम सर्वथा ज्ञात्वा प्रतिपद्य च, न वयं क्वचित्--कुत्रचिदपि व्याक्षेपभाजः--मतिमौढ्यवन्तो भवाम इति ॥१२॥

—मूलं सर्ववचोगणस्य विदित जैनेश्वर शासनम्—

'मूल सर्ववचोगतस्य विदितं, जैनेश्वरं शासनम् ,
तस्मादेव समुत्थितैर्नयमतैः, तस्यैव यत् खण्डनम् ।
एतत् किञ्चन कौशलं कलिमलच्छन्नाऽऽत्मनःस्वाऽऽश्रिताम् ।
शाखां छेत्तुमिवोद्यतस्य कटुकोदर्काय तर्कार्थिनः ॥१३॥

टी० सर्वनयरूपसर्ववचोगणस्य (गतस्य-ज्ञानस्य) मूलं जैनेश्वरं शासनं विदितं--प्रसिद्धमस्ति, तस्मादेव जैनेश्वरशासनादेव, समुत्थितै--र्जातै र्नयमतैः--नयरूपाभिप्रायविशेषैः, तस्यैवेति--जैनेश्वर शासनस्यैव, यत्खण्डनं 'कलिमलच्छन्नाऽऽत्मनः एतत्किञ्चन कौशल'--क्लेशरूपमलेनाऽऽच्छादितजीव-स्यैतत्कौशलं किञ्चन— कीदृश विचित्रं ? यतः स्वाश्रितां शाखां छेत्तुमुद्यतस्येव तर्कार्थिनः 'कटुकोदर्काय-तार्किकस्य कटुकोत्तरकालीनफलाय भवतीति ॥१३॥

—उन्मादत्यागपूर्वकमनेकान्तवादरचना श्रोतव्याऽतःसिद्धान्तरहस्यं वेत्ति—

'त्यक्तोन्मादविभज्यवादरचनामाकर्ण्य कर्णाऽमृतम्,
सिद्धान्तार्थरहस्यवित् क्व लभतामन्यत्र शास्त्रे रतिम् ।
यस्यां सर्वनया विशन्ति न पुनर्व्यस्तेषु तेष्वेव या,
मालायां मणयो लुठन्ति न पुनर्व्यस्तेषु मालाऽपि सा ॥१४॥

टी० यस्त्यक्तोन्मादरूपकदाग्रहः 'विभज्यवादरचनां कर्णामृतमाकर्ण्य'=अनेकान्तवादस्य रचना-स्वरूपं कर्णाऽमृत श्रुत्वा पीत्वा, सिद्धान्तस्य गम्भीरार्थरहस्यस्य ज्ञाता, क्व—कुतोऽन्यत्र शास्त्रगतिं रुचिं लभताम् ? अर्थात् कुत्राऽपि शास्त्रे न रुच्यतां लभते, विना जैनशास्त्रं यस्यां—विभज्यवादरूपानेकान्तवाद-

॥५२६॥

रचनायां सर्वे नया विशन्ति—प्रविशन्ति—समाविशन्ति, पुनश्च व्यस्तेषु—पृथक्पृथग्भूतेषु 'तेषु'=सर्वनयेषु या—अनेकान्तवादरचना नैवाऽस्ति, यथा मालायां मणयो लुठन्ति—तिष्ठन्ति, पुनरपितु, व्यस्तेषु भिन्न-भिन्नेषु—विकीर्णेषु मणिषु सा माला नैव विद्यते, तथाऽत्रापि सुष्ठुतया विज्ञेयमिति ॥१४॥

—स्याद्वादी सर्वनयानविभक्तान् कुर्वन् स्याद्वादसुपथे विनिवेशयन् विजयते—

'अन्योऽन्यप्रतिपक्षभाववितथान्, स्वस्वार्थसत्यान् नयान्,
नापेक्षाविषयग्रहै (याग्रहै) र्विभजते माध्यस्थ्यमास्थाय यः ।
स्याद्वादे सुपथे निवेश्य हरते, तेषां तु दिङ्मूढताम्,
कुन्देन्दुप्रतिमं यशो विजयिन स्तस्यैव संवर्द्धते ॥१५॥

टी० अन्योऽन्यस्य प्रतिपक्षभावेन परस्परं प्रति परस्परभिन्नभिन्नदृष्ट्या वितथान्—अन्यथारूपान्, 'स्वस्वार्थसत्यान्'=स्वस्वदृष्ट्या जायमानार्थसङ्घटनया सत्यान्, नयान्—सर्वनयान् यः=स्याद्वादी 'माध्यस्थ्यमास्थाय'=मध्यस्थभावं प्रतिपद्य, तत्तदपेक्षाया विषयाणामाग्रहैर्वा ग्रहै--ज्ञानैः, 'न विभजते' न विभक्तान् कुरुते परन्तु 'स्याद्वादे सुपथे निवेश्य'=अनेकान्तवादरूपे सन्मार्गे सम्यक्स्थापयित्वा, 'तेषां तु दिङ्मूढतां'=नयानां तु दिशोऽज्ञानतां 'हरते'--दूरीकरोति, तस्यैव--स्याद्वादिन एव विजयिनः, कुन्देन्दु-

सदृश निर्मलं यशः संवर्द्धते -वर्धमानं सदा विलसतीति ॥ १५ (अत्र श्लोके श्रीग्रन्थकारस्य नाम गर्भितं तथा काशीमध्ये पण्डितसभायां स्याद्वादद्वारैव महापंडितविजयी जात इति स्वाऽनुभवोऽपि गर्भितो दृश्यते) तन्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्य-श्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधरभद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां जिनमतस्तुतिनामक एकोनविंशोऽधिकारः समाप्तः ॥८८८॥

अथ विंशतिमोऽधिकारः अनुभवस्वरूप-नामकः

-प्रियमनुभवैकवेद्यं रहस्यमाविर्भवति-

'शास्त्रोपदर्शितदिशा, गलिताऽसद्ग्रहकषायकलुषाणाम्
प्रियमनुभवैकवेद्यं रहस्यमाविर्भवति किमपि ॥१॥

टी० शास्त्रेणोपदर्शितया दिशा- दिङ्मात्रेण मार्गेण, गलितमसद्ग्रहेण--कदाग्रहजनितं कषायस्य कलुषं- कलुषत्वं येषां ते--गलिताऽसद्ग्रहकषायकलुषाणां महात्मनामनुभवैकवेद्यं=स्वानुभूतिमात्रगम्यं, प्रिय प्रेमाऽऽस्पदं, रहस्यं- गुह्यमध्यात्मसार किमपि किञ्चिदप्यपूर्वमपि, आविर्भवति प्रादुर्भवतीति ॥१॥

-लीनमप्युत्तरलं मनः कुरुते-

'प्रथमाऽभ्यासविलासादाविर्भूयैव यत्क्षणाल्लीनम् ।
चञ्चत्तरुणी—विभ्रमसममुत्तरलं मनः कुरुते ॥२॥

टी० 'अनुभवैकगम्यं रहस्यमाविर्भवति परन्तु रहस्यमेतन्मद्य आत्मनि लीनं-निलीनं भवति, चिरात्-न स्थिरं न तिष्ठति, यतः प्राथमिककक्षाया अभ्यासस्याऽय विलासोऽस्ति, तथाप्येवं रीत्या लीनं जातमेतत्प्रियं रहस्यं 'मन उत्तरलं कुरुते' चित्त भृशमुत्सुकं विदधाति, पुनःपुनरेतद्रहस्यं लब्धुं प्रचण्डं मनोरथं जागरयत्येवेति।

'चञ्चत्तरुणीविभ्रमसमं=यथा तरललोचनाया तरुण्या एक एव कटाक्षविशिखो यूनः पुरुषस्य मनः सातत्येन सन्तापयति तादृशीदशा रहस्याऽभिलाषिणो योगिनो मनसो भवत्येवेति ॥२॥

–सुविदितयोगैरिष्टं पञ्चप्रकारं चेतः–

'सुविदितयोगैरिष्टं, क्षिप्तं मूढं तथैव विक्षिप्तम् ।
एकाग्रं च निरुद्धं, चेतः पञ्चप्रकारमिति ॥ ३ ॥

टी० सु सम्यक्तया विदितो योगो यैस्तैः–सुविदितयोगैः, क्षिप्तं, मूढं, तथैव विक्षिप्तं, एकाग्रं च निरुद्धमिति चेतः, पञ्च प्रकारा यस्य तत्पञ्चप्रकारमित्युच्यते ॥३॥

–क्षिप्तस्य चित्तस्य लक्षणम्

'विषयेषु कल्पितेषु च पुरःस्थितेषु च निवेशितं रजसा।
सुखदुःख-युग् बहिर्मुख-माम्नातं क्षिप्तमिह चित्तम् ॥४॥

टी० सुखदत्वेन कल्पितेषु–कल्पनामात्रेण शिल्पितेषु पुरः स्थितेषु–स्वस्याऽग्रत उपनतेषु, एतादृश-शब्दादिविषयेषु, रजोगुणाऽवलम्बनतो निवेशितं स्थापितं, विषयाऽनुभवे यत् सुखदुःखसङ्कीर्णत्वं तदनु-भवयुक्तं बहिर्मुखचित्तमिह क्षिप्तं कथ्यते ॥४॥

**–मूढस्य चित्तस्य लक्षणम्—**

क्रोधादिभिर्नियमितं, विरुद्धकृत्येषु यत्तमोभूम्ना ।
कृत्याकृत्यविभागा-सङ्गतमेतन्मनो मूढम् ॥५॥

टी० तमोगुणबहुत्वेनोभय–लोकविरुद्धकृत्येषु, क्रोधादिभिर्यन्मनो व्याप्तं भवति, 'कृत्याऽकृत्य-विभागाऽसङ्गतं'=कर्त्तव्याकर्त्तव्यविषयक-विवेकज्ञानरहितमेतन्मनो मूढमुच्यते इति ॥५॥

**–विक्षिप्तस्य चित्तस्य लक्षणम्—**

'सत्त्वोद्रेकात् परिहृतदुःखनिदानेषु सुखनिदानेषु ।
शब्दादिषु प्रवृत्तं सदैव चित्तं तु विक्षिप्तम् ॥६॥

टी० 'सत्त्वोद्रेकात्'=सत्त्वगुणप्राकट्यातिशयात 'परिहृतदुःखनिदानेषु'=दूरीकृत-दुःखमूलसाधनेषु 'सुखसाधनेषु'=भौतिकसुखसाधनेषु शब्दादिविषयेषु प्रवृत्तं–प्रवृत्तिमच्चित्तं तु विक्षिप्तमुच्यते इति ॥६॥

–एकाग्रस्य चित्तस्य लक्षणम्––

'अद्वेषादिगुणवतां, नित्यं खेदादिदोषपरिहारात् ।
सदृशप्रत्ययसङ्गत-मेकाग्रं चित्तमाम्नातम् ॥७॥

टी० 'अद्वेषादिगुणवतां'=मोक्षतत्साधनदर्शकादीन् प्रति रुचिभावोऽद्वेषः, तदादिरूपाभयादिगुणवतां महात्मनां, खेदः जिनेन्द्रप्रणीतसत्क्रियाकरणे खिन्नता–परिश्रमस्तदादिदोषाणां परिहारात्, 'सदृशप्रत्ययसङ्गतं' एकसदृशशुभालम्बनरूपविषयसङ्गमवदेकाग्रं चित्तमाम्नातं--आम्नायविषयीभूतमिति ॥७॥

–निरुद्धस्य चित्तस्य लक्षणम्–

उपरतविकल्पवृत्तिक-मवग्रहादिक्रमच्युतं शुद्धम् ।
'आत्मारामसुनीनां, भवति निरुद्धं सदा चेतः ॥८॥

टी० (१) उपरताः--विरता आर्त्तरौद्राऽऽत्मकविकल्परूपा वृत्तयो यस्मिंस्तत्-चेतः 'उपरत विकल्पवृत्तिकम्' (२) 'अवग्रहादिक्रमच्युतम्' अवग्रहेहादिक्रमतो रहितमर्थाद् धारणादिसम्बन्धि, (३) 'शुद्धम्'=शुद्धता- मध्यस्थतासहितम् (४) 'सदाऽऽत्मारामसुनीनां' निरन्तरमात्मनिष्ठस्थिरतावतां, मुनीनां चेतो निरुद्धमुच्यते ॥८॥

॥५३१॥

–एकाग्रनिरुद्धभेदद्वयं समाधावुपयोगि भवति–

'न समाधावुपयोगं, तिस्रश्चेतोदशा इह लभन्ते ।
सत्त्वोत्कर्षात् स्थैर्यादुभे समाधिसुखाऽतिशयात् ॥९॥

टी० क्षिप्तमूढविक्षिप्ताख्यास्तिस्रश्चेतोदशा इह समाधौ–समाधिप्राप्तावुपयोगं न लभन्ते, उभे–एकाग्र-निरुद्धभेदद्वयं चित्तस्य, सत्त्वगुणस्योत्कर्षरूपहेतोः–स्थिरतारूपहेतोः, समाधिसुखस्या'तिशयाद्'–योग्यता हेतोः समाधावुपयोगं लभेते ॥९॥

–विक्षिप्ते कदाचिद् योगारम्भः, क्षिप्ते च मूढे व्युत्थानम्—

'योगाऽऽरम्भस्तु भवेद्विक्षिप्ते मनसि जातु साऽऽनन्दे ।
क्षिप्ते मूढे चास्मिन्, व्युत्थानं भवति नियमेन ॥१०॥

टी० जातु–कदाचिदानन्दसहिते मनसि सति विक्षिप्ते तु योगारम्भः–समाधिप्राप्तेरुपायानामारम्भो भवेद्, क्षिप्ते च मूढे चित्ते रागादिवासनाप्रचण्डताण्डवाडम्बरकलहमहाकलिरूपयुद्धे जायमाने नियमेनैकान्तेन समाश्रितो 'व्युत्थानं'=मनसो विपरीतवृत्तिरूपं–मनसो विपरीतगतिरूपं व्युत्थानं भवतीति ॥१०॥

–अभ्यासकाले योगसाधनायां चलमिष्टं मनः—

'विषयकषायनिवृत्तं, योगेषु च सञ्चरिष्णु विविधेषु ।
गृहखेलद्बालोपममपि चलमिष्टं मनोऽभ्यासे ॥११॥

टी० (१) विषयतः कषायतश्च निवृत्तं—विरतं मनः, (२) मोक्षस्योपायभूतसम्यग्दर्शनज्ञानचारित्रादिरूपेषु योगेषु विविधेषु सञ्चरणशीलं मनः, (३) गृहे खेलतो बालस्योपमा—सादृश्यं यस्य तत् गृहखेलद् बालोपमर्थादन्तर्मुखं भवन्मनः, एतादृशं चित्तं चलमप्यभ्यासकालीनयोगसाधनार्थं योगिनाम पीष्टमिच्छाविषयीभूतं भवतीति ॥११॥

—अभ्यासदशायां यातायातं मनोऽदुष्टम्—

'वचनानुष्ठानगतं यातायातं च साति—चारमपि ।
चेतोऽभ्यासदशायां गजाऽङ्कुशन्यायतोऽदुष्टम् ॥१२॥

टी० वचननामकतृतीयाऽनुष्ठानगतं ततश्च 'यातायातं=पुनः पुनर्बहिर्गत्वाऽन्तरागच्छत्, 'सातिचारमपि=अतिचारसहितमपि चेतोऽभ्यासदशायां 'गजाऽङ्कुशन्यायतो'=यथोन्मार्गस्थो गजोऽङ्कुशेन स्वस्थानमागच्छति, विक्षिप्तं चित्तमदुष्टं=दोषरहितमिष्टमिति ॥१२॥

—अथ प्रलोभ्य बाह्यै र्निगृह्णीयात्तथा चेतः—

॥५३३॥

'ज्ञानविचाराभिमुखं यथा यथा भवति किमपि सानन्दम् ।
अर्थैः प्रलोभ्य बाह्यै-रनुगृह्णीयात्तथा चेतः ॥१३॥

टी० यथा यथा ज्ञानपूर्वकविचारस्य=दिव्यविचारस्याऽभिमुखं सत् सानन्दं किमपि भवति, तथा तथाऽसदाऽऽलम्बनतो दूरीकरणार्थं 'बाह्यैरर्थैः प्रलोभ्य'=बाह्यसुन्दरसदालम्बनानि प्रति प्रलोभ्य चेतोऽनुगृह्णीयात्'=चेतोनिग्रहरूपोऽनुग्रहः कर्त्तव्यः । चेतसोऽसत् पात्राणि परिवर्त्य चेतोविषयरूपसत्पात्ररूपोर्ध्वीकरणं विधातव्यमिति ॥१३॥

–सदाऽऽलम्बनविशेषाः कथ्यन्ते–

'अभिरूपजिनप्रतिमां, विशिष्टपदवाक्यवर्णरचनां च ।
पुरुषविशेषादिकमप्यत एवाऽऽलम्बनं ब्रुवते ॥१४॥

टी० बाह्यशुभार्थरूपालम्बनेषु चित्तं नीत्वा चेतस ऊर्ध्वीकरणरूपो निग्रहः कर्त्तुं युज्यते, अत एव सदाऽऽलम्बनानि-(१) अभिरूपजिनप्रतिमां=मनःप्रसन्नताहेतुरूपचारुतमाऽनिमेषदर्शनीयजिनप्रतिमां, (२) विशिष्टपदवाक्यवर्णरचनां='जयति जगद्गुरुर्जिनः' इत्यादिवद् विशिष्टस्य पदस्य वाक्यस्य च रचनाम् ।

(३) पुरुषविशेषादिकं=पुरुषविशेषरूपान्--गणधरादीन भगवतः आदिपदेन--जैनशासनदानजैनजनतासमाधिबोधिदानसमर्थान पुरुषविशेषान् , आलम्बनं ब्रुवते ॥१४॥

-सदालम्बनस्य परमः प्रभावः-

'आलम्बनैः प्रशस्तैः, प्रायो भावः प्रशस्त एव यतः ।
इति सालम्बन-योगी, मनः शुभालम्बने दध्यात् ॥१५॥

टी० प्रशस्तैरालम्बनैः प्रायो--भूम्ना भावोऽध्यवसायः प्रशस्तः--पुण्यानुबन्धिपुण्यजनकशुभो जायते अतः कारणात्, सालम्बनयोगी, शुभेऽभिरूपजिनप्रतिमादिरूपे प्रशस्ते आलम्बन एव मनश्चित्तं, दद्ध्यात्--मुञ्चेदिति ॥१५॥

-मनसो निरालम्बनत्वकरणे प्रक्रियामार्गो दर्श्यते-

'सालम्बनं क्षणमपि, क्षणमपि कुर्यान्मनो निरालम्बम् ।
इत्यनुभवपरिपाकादाकालं स्यान्निरालम्बम् ॥१६॥

टी० क्षणं यावत्सालम्बनं कुर्यान्मनः, तदनन्तरं क्षणं यावन्निरालम्बं--स्वात्मनिलीनत्वेन निरालम्बं-स्वात्मभिन्नबाह्यप्रशस्तालम्बननिरपेक्षं मनः कुर्यात्, इत्येवं पुनः पुनरभ्यासकरणद्वारा यदा स्वात्माऽलम्बनाभ्यासजन्यानुभवः परिपक्वदशाऽऽपन्नो भविष्यति तदा मनः आकालं--सदाकालं मनो निरालम्बं स्यादेवेति ॥१६॥

–मनस उपशमने द्वितीया पद्धति दर्श्यते–

'आलम्ब्यैकपदार्थं, यदा न किञ्चिद्विचिन्तयेदन्यत् ।
अनुपनतेन्धनवह्निवदुपशान्तं स्यात्तदा चेतः ॥१७॥

टी० एकपदार्थमालम्ब्य=एकमभिरूपजिनप्रतिमादिरूपं पदार्थप्रत्ययमालम्ब्य, यदा न किञ्चिदन्यद् विचिन्तयेद्- विचारयेत्तदा चेतः, न उपनतानि=अनुपनतानि इन्धनानि यत्र सो ऽनुपनतेन्धनश्चासौ वह्निश्च, अनुपनतेन्धनवह्नेरिव=अप्रक्षिप्तेन्धनाग्निवदुपशान्तं स्यादेव, एकपदार्थालम्बनोऽनन्यमनाः सन् इन्धनप्रक्षेपाभावप्रयुक्तो वह्निर्यथा शाम्यति तथा एकालम्बनयुक्तं विरुद्धान्यालम्बनाभावप्रयुक्तं शान्तं मनः स्यादिति ॥१७॥

–शोकादिदोषाः क्षीयन्ते शान्तहृदामनुभव एवात्र साक्षी नः—

'शोकमदमदनमत्सरकलहकदाग्रहविषादवैराणि ।
क्षीयन्ते शान्तहृदा–मनुभव एवाऽत्र साक्षी नः ॥१८॥

टी० 'शान्तहृदां'=उपशान्तचेतसां योगिनां, शोकश्च मदश्च मत्सरश्च कलहश्च विषादश्च वैरं च=शोचनमुन्मोहसम्भेदाभिमानमन्मथेर्ष्यादुर्जननाविविधजातीययुद्धाऽसद्ग्रहविरोधरूपा दोषाः क्षीयन्ते–प्रणश्यन्ति अत्रानुभवः साक्षी–साक्षाद्द्रष्टा नोऽस्माकमिति ॥१८॥

—आत्मनःसहजं शान्तं ज्योतिः प्रकाशते शान्ते मनसि—

'शान्ते मनसि ज्योतिः प्रकाशते शान्तमात्मनः सहजम् ।
भस्मीभवत्यविद्या, मोहध्वान्तं विलयमेति ॥१९॥

टी० शान्ते—निर्विकारे मनसि सति, आत्मनः सहजं स्वाभाविकं, शान्तं—शीतलं ज्योतिः प्रकाशते, 'भस्मीभवत्यविद्या'=अविद्या—विपरीतज्ञानं 'नित्यशुच्यात्मताख्यातिरनित्याशुच्यनात्मसु अविद्या' इति शास्त्रप्रसिद्धाविद्या, भस्मीभूता भवति, मोहनामकभावान्धकारं विनाशं प्राप्नोतीति ॥१९॥

—परमात्माऽनुध्येयः सन्निहितो ध्यानतो भवति—

'बाह्यात्मनोऽधिकारः, शान्तहृदामन्तरात्मनां न स्यात् ।
परमाऽऽत्माऽनुध्येयः, सन्निहितो ध्यानतो भवति ॥२०॥

टी० शान्तं हृद् येषां, तेषामुपशान्तचेतसां अन्तरात्मनां, बाह्यदेहादिस्वरूपस्य बाह्यात्मनः-बाह्यदेहादिस्वरूपस्य बाह्यात्मनः बाह्यात्मसम्बन्धी अधिकारः—शासनादिको न स्यादेव, अनुध्येयः—स्मर्त्तव्यः परमात्मा, (परमात्मस्वरूपं) ध्यानतः, सन्निहितः—स्वसमीपस्थ एव भवतीति ॥२०॥

—कायादिर्बहिरात्मा—

कायादिर्बहिरात्मा, तदधिष्ठातान्तरात्मतामेति ।
गतनिःशेषोपाधिः, परमात्मा कीर्तितस्तज्ज्ञैः ॥ २१ ॥

टी० परम्परातोऽपि पररूपसंयोगिकायगृहधनादिः, बहिरात्मेतिकथ्यते यतो बाह्यपरवस्तु, आत्माऽज्ञानतः आत्मनाऽऽत्मत्वेन मन्यते, 'तदधिष्ठाताऽन्तरात्मतामेति' तस्य कायादेरधिष्ठातृत्वेन कायादितो भिन्नः सन्कायादिकमधिष्ठाय कर्मयोगेन, आत्माधिष्ठितकायादिचेष्टाप्रेरकत्वेन आत्मसंचालितकायादित्वेन मत्यस्वरूपात्मतत्त्वज्ञातृत्वेन स एवात्मा, अन्तरात्माति समुच्यते, 'गतनिःशेषोपाधिः' गतः-क्षीणः उपाधिः कर्मतद्विकाररूप स गतनिःशेषोपाधिः, 'तज्ज्ञैः' परमात्मस्वरूपप्रत्यक्षज्ञानिभिः सर्वज्ञैः 'परमात्मा कीर्तितः' स एवात्मा सर्वकर्मरहितत्वेन सर्वपरमगुणावस्थादिमान् परमात्मेत्युच्यते, कायादावेवात्मतत्त्वमतेनात्मा बहिरात्मा, कायादिगताधिष्ठातृत्वेन कायादिभिन्नत्वेनात्मतत्त्वमतेनान्तरात्मा, निःशेषोपाधिक्षयवत्त्वेन परमगुणावस्थाशक्तिमत्त्वेन परमात्मेति भेदविवेको ज्ञेयः ॥२१॥

—व्यक्तबहिरात्मस्वरूपम्—

'विषयकषायाऽऽवेशः, तत्त्वाऽश्रद्धा गुणेषु च द्वेषः ।
आत्माऽज्ञानं च यदा, बाह्यात्मा स्यात्तदा व्यक्तः ॥२२॥

॥५३८॥

टी० (१) यत्र विषयस्य कषायस्य चाऽऽवेशः–आवेगः, (२) जिनोक्तेषु तत्त्वेषु अश्रद्धा–श्रद्धाया अभावः, (३) गुणेषु=गुणिनां गुणान् प्रति द्वेषः–अरुचिः, (४) आत्माऽज्ञानं=यदा सत्यमूलभूताऽऽत्मनो ज्ञानाभावः स्यात्तदा कायादिभेदेनाऽऽत्मा व्यक्तः स्यादिति ॥२२॥

–व्यक्तस्याऽन्तरात्मनः स्वरूपम्—

'तत्त्वश्रद्धाज्ञानं, महाव्रतान्यप्रमादपरता च ।
मोहजयश्च यदा स्यात्, तदाऽन्तरात्मा भवेद्व्यक्तः ॥२३॥

टी० (१) जिनप्रणीततत्त्वे श्रद्धासहितं ज्ञानं, (२) महान्ति च व्रतानि=महाव्रतानि, आचारविषये, (३) अप्रमादपरता च=प्रमादाऽभावकरणे परायणता, (४) मोहजयः=मिथ्यात्वचारित्रमोहविषयकसंस्कारमात्रध्वंसो, यदा स्यात् पूर्वोक्तं सर्वं तदाऽन्तरात्मा भवेद्व्यक्तः ॥२३॥

–व्यक्तपरमाऽऽत्मस्वरूपम्–

'ज्ञानं केवलसंज्ञं, योगनिरोधः समग्रकर्म्महतिः ।
सिद्धिनिवासश्च यदा, परमात्मा स्यात्तदा व्यक्तः ॥२४॥

टी० क्रमशः प्रथमं (१) केवलज्ञानं घातिकर्मक्षयजन्या सर्वज्ञता (२) ततो मनोवचःकायाऽऽत्मकयोगनिरोधः–सर्वसंवरः (३) ततः समग्रकर्महतिः=सत्तातोऽपि सर्वांशतः सकलकर्मक्षयः (४) सिद्धिनिवासः=

सिद्धिगतिनामकस्थानविशेषरूपायां, सदापूर्णशुद्धस्वरूपस्थितिरूपायां, सिद्धत्वपर्यायरूपायां सिद्धौ निवासः— अपर्यवसित-नित्यस्थितिः, यदा स्यात्तदा व्यक्त' परमाऽऽत्मा स्यादिति ॥२४॥

—कुशलानुबन्धयुक्तः प्राप्नोति ब्रह्मसायुज्यमसौ—

'आत्ममनोगुणवृत्ती—र्विविच्य यःप्रतिपदं विजानाति ।
कुशलानुबन्धयुक्तः, प्राप्नोति ब्रह्मभूयमसौ ॥२५॥

टी० 'आत्ममनोगुणवृत्ती'=आत्मनो ज्ञानादिगुणान् , मनसः मानसिकवृत्तित्रयं (वृत्तीः) 'विविच्य यः प्रतिपदं विजानाति'=यः साधक आत्मा, पदे पदे गुणानां च वृत्तीनां च साम्यस्य वा वैषम्यस्य नानाविधं (एष आत्मगुणः, एषा मनोवृत्तिरिति भेदरूपं) स्वरूपं, विवेकतः सम्यक्तया जानाति—दृष्ट्वा रक्षति, जाग्रदात्मा, कुशलानुबन्धयुक्तः=पुण्यानुबन्धिपुण्यरूपकार्ययुक्तो भवति, तत्तत्कुशलानुबन्धिकर्मद्वारा 'असौ ब्रह्मभूयं प्राप्नोति'=एष महात्मा ब्रह्मस्वरूपं मोक्षं लभते इति ॥२५॥

—ब्रह्मविदां वचनेनाऽपि ब्रह्मविलासानुभवामः—

'ब्रह्मस्थो ब्रह्मज्ञो, ब्रह्म प्राप्नोति तत्र किं चित्रम् ।
ब्रह्मविदां वचसाऽपि, ब्रह्मविलासाननुभवामः ॥२६॥

॥५४०॥

टी० ब्रह्मस्थो ब्रह्मज्ञः=शुद्धज्ञानोपयोगेन परमात्मना सहाऽभिन्नः, शुद्धचैतन्यस्वभावं जानानो महात्मा, शुद्धस्वभावरूपं ब्रह्म प्राप्नोति तत्र किं चित्रमाश्चर्यं ? यतः, 'ब्रह्मविदां वचसाऽपि ब्रह्मविलासाननुभवामः=वयन्तु विशुद्धचैतन्यस्वरूपविदामुपदेशवचनतोऽपि शुद्धचैतन्यरूपब्रह्मविलासान्-सहजशान्त शीतलस्वप्रकाशाननुभवामः, तदा ब्रह्मस्थानां ब्रह्मज्ञानां तु का वार्त्तेति ॥२६॥

–स योगी ब्रह्मणः परमः–

'ब्रह्माध्ययनेषु मतं ब्रह्माष्टादशसहस्रपदभावैः ।
येनाऽऽप्तं तत् पूर्णं, योगी स ब्रह्मणः परमः ॥२७॥

टी० श्रीमदाचारांगसूत्रस्य ब्रह्माध्ययनेषु ("नव बंभचेरा पण्णत्ता, तंजहा-सत्थपरिण्णा १ लोगविजओ २ सीओसणिज्ज ३ सम्मत्तं ४ आवंती ५ धुतं ६ विमोहायणं, उवहाणसुयं 'महपरिण्णा ९" समवायांगसूत्र । "नव बंभचेरा पण्णत्ता, तंजहा सत्थपरिन्ना, लोगविजओ जाव उवहाणसुयं महपरिण्णा ॥"
–स्थानांगसूत्र ।
अष्टादशसहस्रपदभावै मतमिष्टं ब्रह्म (शीलं ब्रह्मचर्यादि) येन–महात्मना तत् पूर्णमाप्तं प्राप्तं, स ब्रह्मणः परमो योगी--परमब्रह्मयोगीति कथ्यते ॥२७॥

–पूर्णब्रह्मज्ञातरि गुरुत्वबुद्धितः सुतरः संसारसिन्धुरपि–

'ध्येयोऽयं सेव्योऽयं कार्या भक्तिः सुकृतधियाऽस्यैव ।
अस्मिन् गुरुत्वबुद्ध्या, सुतरः संसारसिन्धुरपि ॥२८॥

टी० अयं--ज्ञातप्राप्तपूर्णब्रह्माऽन्तरात्मा मुनिः, ध्येयः--ध्यानक्रियाया विषयः कर्त्तव्यः, अयं अष्टादशसहस्रपदभावसिद्धशीलरूपब्रह्मस्थोऽन्तरात्मा मुनिः, सेव्यः--आराधनाया योग्यः, 'अस्यैव सुकृतधिया भक्तिः कार्या'=पूर्णब्रह्मज्ञानस्थितिमतोऽस्यैव सुकृतबुद्ध्या सेवाभक्तिः कर्त्तव्या, अस्मिन्--पूर्णब्रह्मज्ञानस्थितिमति, गुरुत्वबुद्ध्या संसारसिन्धुरपि सुतरः-सुखेन तरणयोग्यो भवतीति ॥२८॥

-इच्छायोगमालम्ब्य परममुनीनां भक्त्या मार्गाऽनुसरणम्-

'अवलम्ब्येच्छायोगं, पूर्णाचाराऽसहिष्णवश्च वयम् ।
भक्त्या परममुनीनां तदीयपदवीमनुसरामः ॥२९॥

टी० 'अवलम्ब्येच्छायोगं पूर्णाचारासहिष्णवो वयं'=शास्त्रयोगापेक्षया संपूर्णाचारपालनेऽसमर्थाश्च वयं, इच्छायोगाऽऽलम्बनं स्वीकृत्य, 'परममुनीनां मार्गमनुसरामो वयमिति ॥२९॥

-इच्छायोगेऽल्पयतनाऽपि निर्दंभा शुभानुबंधिनी-

'अल्पाऽपि यां ऽत्र यतना, निर्दम्भा सा शुभानुबन्धकरी ।
अज्ञानविषव्ययकृद्, विवेचनं चाऽऽत्मभावानाम् ॥३०॥

टी० 'याऽत्राऽल्पाऽपि यतना' इच्छायोगेऽस्मिन्नल्पाऽपि (अनल्पायास्तु का वार्त्तेत्यपि शब्दार्थः) या यतना=रत्नत्रयीविषयकप्रयत्नविशेषात्मिकाऽथवा जीवदयापालनात्मिका 'निर्दम्भा'=मायात्मकशल्यशून्या, तदा सा यतना, शुभानुबन्धकरी=अवश्यमेव पुण्याऽनुबन्धकरी भवति, चः--किञ्चाऽस्मिन्निच्छायोगे, 'आत्मभावानां अज्ञानविषव्ययकृद्विवेचनं' चैतन्यादिरूपशुभशुद्धपरिणामानां तथा तद्विपरीताशुद्धाशुभभावरूप विभावानां रक्षणीयाऽरक्षणीयादिरूपविभागविवेकरूपं विवेचनं भवति अथवा, आत्मनिष्ठात्मीय भावानां प्रमादतः आत्माऽज्ञानरूपाज्ञानात्मकभावविषस्य व्ययरूपविनाशकारिविवेकदीपको दीप्यते इच्छायोगेऽस्मिन् यतना [बहुदोषवस्तुवर्जनाऽल्पदोषग्रहणरूपा ) द्वारा पुण्यानुबन्धिपुण्यरूपं चाऽऽत्मय भावविवेकद्वाराऽज्ञानरूपविपक्षयरूपं फलं प्राप्यत इति ॥३०॥

—परमाऽऽलम्बनभूतो दर्शनपक्षोऽयमस्माकम्—

'सिद्धान्ततदङ्गानां, शास्त्राणामस्तु परिचयः शक्त्या ।
परमालम्बनभूतो, दर्शनपक्षोऽयमस्माकम् ॥३१॥

टी० 'सिद्धान्ततदङ्गानां=सूत्रादिरूपसिद्धान्तस्य च तस्य सिद्धान्तस्य टीकाभाष्यनिरुक्तिचूर्णिरूपपञ्चाङ्गीरूपाणां 'शास्त्राणां'--सदागमानां बोधरूपः परिचयस्तु शक्त्या--यथाशक्ति, अस्तु, अस्माकं मोक्षाय तु परमालम्बनभूतो दर्शनपक्ष एव=शास्त्रसिद्धतत्त्वश्रद्धानमतरूपपक्ष एवाऽस्ति,

इदमत्र हृदयम्=शास्त्रीयज्ञानमस्मत्पार्श्वे, यथाशक्ति सदपि शास्त्रयौगिकं जीवनं नास्त्येव, एवं सत्यपि शास्त्रोक्तस्यैतस्य तत्त्वस्य श्रद्धानन्तु, अस्मासु विद्यत एव, तथा तदेवाऽस्माकं कृते परमालम्बनभूतमेवेति ।.३१॥

-दर्शनपक्षस्याऽभिनयः प्रदर्श्यते—

**विधिकथनं विधिरागो, विधिमार्गस्थापनं विधीच्छूनाम् ।**
**अविधिनिषेधश्चेति, प्रवचनभक्तिः प्रसिद्धा नः ॥३२॥**

टी० सुदर्शनपक्षोऽयमस्ति, तथाहि=(१) विधिकथनं=विधिपद्धतिमार्गः कथनीयः, (२) विधिरागः=विधिमार्गं प्रति सबहुमाना भक्तिर्धार्या, (३) विधीच्छूनां–विधिमार्गस्य जिज्ञासूनां पुरतो विधिमार्गस्य क्रियासाधनादर्शनपूर्वं स्थापनं कार्यम् (४) अविधिनिषेधश्च=विधिविपक्षेऽविधिपक्षस्य निषेधः कर्त्तव्यः, इति=इत्याकारिकैव नो–अस्माकं प्रसिद्धा प्रवचनभक्तिरस्त्येव, यतः प्रवचनाऽनुसारित्वेन जन्मयापनाय (जीवनाय) अस्मासु शास्त्रयोगरूपप्रवचनभक्तिस्तु नास्ति ।'३२॥

-इच्छायोगे विधिकथनादिकृत्यरूपशक्यारम्भः, पूर्णक्रियाऽभिलाषश्चेति द्वयमात्मशुद्धिकरम्-

'अध्यात्मभावनोज्ज्वलचेतोवृत्त्योचितं हि नः कृत्यम् ।
पूर्णक्रियाऽभिलाषश्चेति द्वयमात्मशुद्धिकरम् ॥३३॥

टी० या विधिकथनादिरूपा प्रवचनभक्तिः कथिताऽस्ति, तत्कृत्यमिच्छायोगिनामस्माकं कृते समुचितमेव यतः इच्छायोगेऽध्यात्मयोगभावनायोगौ भवतश्च ताभ्यां योगाभ्यामुज्ज्वलस्याऽस्मदीयचेतसो वृत्त्या युक्तमिच्छायोगवतामस्माकं कृत्यं-विधिकथनादिरूपं कर्त्तव्यमुचितम् , एवमिच्छायोगे यद् विधिकथनादिकृत्यं शक्यमस्ति, तस्याऽऽरम्भं कुर्मो वयमेतावदपि न परन्तु सामर्थ्ययोगस्य पूर्णा क्रिया याऽस्मत्कृतेऽद्याऽशक्याऽस्ति तामभिलषामः, यथाशक्याऽरम्भश्चाऽधुनाऽशक्यपूर्णक्रियाऽभिलाषश्चेति द्वयमाऽऽत्मशुद्धिकरमस्त्येवेति ॥३३॥

अधुना शक्याऽरम्भश्च शुद्धपक्षश्च शुभानुबन्धः-

'द्वयमिह शुभाऽनुबन्धः, शक्यारम्भश्च शुद्धपक्षश्च ।
अहितो विपर्ययः पुनरित्यनुभवसङ्गतः पन्थाः ॥३४॥

टी० यस्याऽनुष्ठानादेः शक्तिरस्ति, तस्य शक्यस्यारम्भः कर्त्तव्यः, यदशक्यं भवेत्तादृशशुद्धमसम्पूर्णा-

ऽनुष्ठानस्य पक्षे स्थातव्यम्, शक्याऽऽरम्भः, शुद्धपक्ष इति द्वयमिह–इच्छायोगे शुभाऽनुबन्धः पुण्याऽनुबन्धकारी शक्यारम्भः शुद्धपक्षश्च, 'अहितो विपर्ययः पुनः'=किञ्च शक्यारम्भशुद्धपक्षोभयतो विपर्ययः–अशक्यारम्भोऽशुद्धपक्षश्चेत्युभयरूपो विपर्ययः, अहितो–अहितकारी भवतीत्येवमनुभवेन सह सङ्गतिमान् पन्थाः -मार्गः इति ॥३४॥

-बाह्यक्रियया चरणाऽभिमानिनो ज्ञानिनोऽपि न ते-

'ये त्वनुभवाऽनिश्चितमार्गाश्चारित्रपरिणतिभ्रष्टाः,
बाह्यक्रियया चरणाऽभिमानिनो ज्ञानिनोऽपि न ते ॥३५॥

टी० तुः--किञ्च स्वकीयाऽनुभवेनाऽनिश्चितोऽध्यात्ममार्गो येषां ते--स्वकीयानुभवानिश्चितमार्गाः, अत एव चारित्रविषयकपरिणतिरूपपरिणामेन भ्रष्टाः, ये स्युस्ते, 'बाह्यक्रियया'=बहिराचरणेन, 'चरणाऽभिमानिनः'=स्वं संयमित्वेन मन्यमानाः, वस्तुतः संयमिनो न सन्ति यतः सम्यग् ज्ञाने दम्भो न युज्यतेऽर्थाच्चरणविषयको मिथ्याऽभिमानो न घटते (भावचारित्रपरिणतिभ्रष्टाः सन्तो बाह्यक्रियावेषमात्रेण चारित्राभिमानिनः सम्यग्श्रद्धाभ्रष्टाः सम्यग्ज्ञानभ्रष्टाः कथं न ? ) ॥३५॥

--बाह्याचारमात्रं सतां न प्रमाणम्--

लोकेषु बहिर्बुद्धिषु विगोपकानां बहिष्क्रियासु रतिः ।
श्रद्धां विना न चैताः, सतां प्रमाणं यतोऽभिहितम् ॥३६॥
बालः पश्यति लिङ्गं मध्यमबुद्धिर्विचारयति वृत्तम् ।
आगमतत्त्वं तु बुधः, परीक्षते सर्वयत्नेन ॥३७॥

टी० 'लोकेषु बहिर्बुद्धिषु'=स्थूलबुद्धिषु लोकेषु सत्सु अत एव 'विगोपकानां'--वेषमात्रभृतां दाम्भिकानां बाह्यक्रियासु स्थूलबुद्धित्वेन बाह्यबुद्धिजनमनसि रतिः--प्रेम दृश्यते यतो लोका बहिर्बुद्धयः सन्ति, परन्तु तेषां तु यावत्तद्द्रव्यव्यक्तीनां तत्तद्बाह्यक्रियासु मोक्षप्रापकसामर्थ्यस्य श्रद्धा न प्रभवेत्ता वदेता भावशून्याः क्रियास्तेषां न प्रमाणं यतोऽभिहितमस्ति

'बालः'--स्थूलबुद्धिको लोकः, लिङ्गं--वेषमात्रं दृष्ट्वैव नमति, 'मध्यमबुद्धिर्विचारयति वृत्तम्' मध्यमबुद्धिको लोको वेषेण सह वृत्तं--महाव्रतादिरूपं सदाचारं विचार्य नमति 'बुधस्तु वेषमहाव्रताद्याचारेण सहागमतत्त्वं परीक्षते सर्वयत्नेन, बाह्याचारप्ररूपकं शास्त्रतत्त्वं कषच्छेदतापादिभिः परीक्षतेऽर्थाच्छास्त्रमाश्रित्य क्रियमाणो बाह्याचारे बुधपुरुषस्य श्रद्धोत्पद्येत यत् 'एष बाह्याचारोऽवश्यं मोक्षप्रापकोऽस्ति इति श्रद्धायां जायमानायां सत्यां बुधपुरुषः 'सभाव एष बाह्याचारः प्रमाणमिति मत्वा नमतीति ॥३६॥३७॥

-हितकारी ज्ञानवतामनुभववेद्यः प्रकारोऽयम्—

—अध्यात्मानुभवजन्यनिगूढनवनीतहितशिक्षारूपेण ग्रन्थस्योपसंहारः—

'निन्द्यो न कोऽपि लोके, पापिष्ठेष्वपि भवस्थितिश्चिन्त्या ।
पूज्या गुणगरिमाढ्या, धार्यो रागो गुणलवेऽपि ॥३८॥
निश्चित्यागमतत्त्वं, तस्मादुत्सृज्य लोकसंज्ञां च ।
श्रद्धाविवेकसारं, यतितव्यं योगिना नित्यम् ॥३९॥
ग्राह्यं हितमपि बालादालापैर्न दुर्जनस्य द्वेष्यम् ।
त्यक्तव्या च पराशा, पाशा इव संगमा ज्ञेयाः ॥४०॥
स्तुत्या स्मयो न कार्यः, कोपोऽपि च निन्दया जनैःकृतया ।
सेव्या धर्माचार्यास्तत्त्वं जिज्ञासनीयं च ॥४१॥
शौचं स्थैर्यमदंभो, वैराग्यं चात्मनिग्रहः कार्यः ।
दृश्या भवगतदोषाश्चिन्त्यं देहादिवैरूप्यम् ॥४२॥

भक्ति र्भगवति धार्या, सेव्यो देशः सदा विविक्तश्च ।
स्थातव्यं सम्यक्त्वे, विश्वस्यो न प्रमादरिपुः ॥४३॥
ध्येयाऽऽत्मबोधनिष्ठा, सर्वत्रैवागमः पुरस्कार्यः ।
त्यक्तव्याः कुविकल्पाः, स्थेयं वृद्धानुवृत्त्या च ॥४४॥
साक्षात्कार्यं तत्त्वं, चिद्रूपानन्दमेदुरै र्भाव्यम् ।
हितकारी ज्ञानवता–मनुभववेद्यः प्रकारोऽयम् ॥४५॥

(१) 'लोके न कोऽपि निन्द्यः'=जगति वा जगद्वर्त्तिनि जने कस्यचिदपि निन्दा–परपरीवादो मात्सर्यमिश्रितं परोक्षे परस्य दोषकीर्त्तनं वा न कर्त्तव्यम्, (२) 'पापिष्वपि भवस्थितिश्चिन्त्या'=क्रूरघोरपाप-कर्मकारकात्मस्वपि तिरस्कारं तिरस्कृत्य 'तेषां तादृशी भवस्थितिरस्तीति मनसि परामर्शः कार्यः, अतः यथा भवस्थिति जीवः कर्म करोति, कर्मकृतिं प्रति भवस्थिति र्हेतु र्भवति

(३) 'पूज्या गुणगरिमाढ्याः'=गुणानपेक्ष्य गुरुत्वसमृद्धाः पूज्याः–यथाशास्त्रं पूजनीयाः, अत एव कथ्यते 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः'

(४) धार्यो रागो गुणलवेऽपि'=गुणस्य लवो–लेशो यत्र तत्र गुणलवेऽपि पुरुषे, परमाणुरूपे

परगुणेऽपि वा रागः–प्रेम, धार्यः–मनसि धारणीयः, अतः कथ्यते च 'गुणानुरागाद् गुणप्राप्तिः', तथाऽधिकगुणेषु सुतरां हृदयतो रागो विधातव्य एव, ॥३८॥

(५) 'निश्चित्यागमतत्त्वं'=जिनप्रणीतशास्त्रस्य सारं निर्णीय तस्मान्निर्णीताऽऽगमतत्त्वतो 'लोकसंज्ञां चोत्सृज्य'= गतानुगतिकतां त्यक्त्वा 'श्रद्धाविवेकसारं'=श्रद्धायाश्च विवेकस्य प्रधानतापूर्वकं 'योगिनां=योगधारकेण–मोक्षसाधनज्ञानादिरत्नत्रयीसमाराधनपरेण 'नित्यं यतितव्यम्' निरन्तरं योगविषये प्रयत्नः कर्त्तव्यः ॥३९॥

(६) बालादपि हितं ग्राह्यम्' वयोऽपेक्षया बालकादपि यद्यद्धितं–हितकारि–वचनमार्गदर्शनादिकं तत्तद् ग्राह्यं

(७) 'दुर्जनस्यालापैर्न द्वेष्यम्'=सज्जनतारहितस्य दुष्टजनस्यालापैः–गाल्यादिवचनविशेषै र्हेतुभिः 'न द्वेष्यम्' दुर्जनं प्रति द्वेषो न कर्त्तव्यः, (८) 'त्यक्तव्या च पराशा'=कल्याणमित्रादिभिन्नानां देह्यादीनां देहादीनां परवस्तूनां सकाशादाशा=प्राप्तिरक्षणादिविषयकाऽऽशा, त्यागयोग्या, योऽनाथोऽस्ति स्वयं, स परान कथं नाथत्वेन रक्षेत्

(९) 'पाशा इव सङ्गमा ज्ञेयाः'=पाशाः–बन्धनविशेषा इव अध्यात्मामृतदातृविशेषादिसंयोगभिन्नबाह्यसंयोगविशेषा ज्ञेयाः ॥४०॥

(१०) 'स्तुत्या स्मयो न कार्यः'=परकृतप्रशंसागर्भितप्रशस्तितः, स्मयः–अभिमानविशेषो न कर्त्तव्यः

(११) 'जनैः कृतया निन्दया कोपोऽपि च न कार्यः'=बुधशिष्टसज्जनभिन्नै र्जनैः कृतया विगान-रूपनिन्दया कोपोऽपि च न करणीयः, अर्थाद् व्यक्तिमपेक्ष्य स्तुतिनिन्दाकाले समता धार्या, स्मयकोपाऽभावतः

(१२) 'सेव्या धर्माचार्याः'=धर्मदानापेक्षयाऽऽचार्याः धर्मस्याचार्या गणधरादयश्चाचार्याः सेव्याः–आराध्या इत्यर्थः

(१३) 'तत्त्वं जिज्ञासनीयं'=जिनप्रणीतजीवादितत्त्वानेकान्तादितत्त्वविषयिणी जिज्ञासा कर्त्तव्या (१४) शौचं–सर्वप्रकारकं पावित्र्यं रक्ष्यं (१५) स्थैर्यं चञ्चलताऽभावेन प्रसन्नताऽऽगमनं, ततः स्वसन्निधि-स्थनिधिदर्शकत्वात्स्वगतपरिणामस्य स्थैर्यं कार्यम्, (१६) अदम्भः=मायाशल्यशून्यता कर्त्तव्या,

(१७) वैराग्यं=अभयरूपं भवनैर्गुण्यविषयकज्ञानजन्यो भवीयसुखतत्साधनगतरागाभावो वैराग्यम् (१८) 'आत्मनिग्रहः कार्यः=रागद्वेषमोहादिरूपविभावात्मकाऽऽत्मनो निग्रहः-शुभशुद्धभावरूपस्वभावात्मको भूत्वा परग्रहणोपरि शत्राविव निग्रहः कार्यः

(१९) दृश्या भवगतदोषाः=जन्मजरामरणरूपभवगतदुःखमात्रदानादिदोषाः भावनेत्रपथं नेयाः, 'जन्म दुःखं जरादुःखं, मृत्युदुःखं पुनः पुनः, संसारसागरे दुःखं, तस्माज्जागृत[२] अर्थात् संसारभावान्-प्रति

दोषदृष्टि र्विधेया (२०) 'चिन्त्यं देहादिवैरूप्यम्'=जात्याद्यपेक्षया नवादिमच्छिद्रद्वारै र्निर्यदशुचिप्रवाहाऽपेक्षया,

रोगविशेषादिप्रभवापेक्षया, शरीरांगोपाङ्गादिगतं वैषम्यं-वैचित्र्यं चित्ते धारणीयम्, (२१) 'भक्तिर्भगवति धार्या'=परमैश्वर्यादिमकलगुणाऽतिशयवति भगवति परमपरमेष्ठिरूपे परमेश्वरे भक्तिः=आत्मादिसर्वसमर्पणशरणागतिबहुमानहार्दिकविनयादिविशेषरूपा भक्तिर्धार्या अन्तःकरणे प्रतिपत्तव्या

(२२) सेव्यो देशः सदा विविक्तश्च'-सर्वथा स्त्रीपशुनपुंसकादिरहितः सन् विविक्तो देशः=मदेकान्तस्थानविशेषः सेव्यः-स्वीकरणीयः

(२३) स्थातव्यं सम्यक्त्वे=चिन्तामणिकल्पपादपाऽधिके, तत्त्वार्थश्रद्धान-तत्त्वनिर्णयरूपे अर्हदादि सुदेवादितत्त्वत्रयश्रद्धानलक्षणे, निर्विघ्नत्वेनाजरामरस्थानप्रापके सम्यक्त्वे आत्यन्तिकैकान्तिकस्थिरता कर्त्तव्या (२४) विश्वस्यो न प्रमादरिपुः=कदाचिदपि विषयादिप्रमादपंचकस्यात्मवंचकस्य भावमहाशत्रो र्न विश्वासः करणीयः

(२५) 'ध्येयाऽऽत्मबोधनिष्ठा=आत्मज्ञाने नितरां स्थितिरथवाऽऽत्मज्ञाने पूर्णता ध्यानविषया कर्त्तव्या

(२६) सर्वत्रैवाऽऽगमः पुरस्कार्य'=सर्वकार्यक्रियादावेव शास्त्रमग्रतः कर्त्तव्यम्

(२७) त्यक्तव्याः कुविकल्पाः=आर्त्तरौद्रध्याने त्यागविषयीकर्त्तव्ये, धर्मशुक्लध्याने करणीये

(२८) 'श्रेयं वृद्धानुवृत्त्या च'=आप्तवृद्धपुरुषमार्गदर्शनानुसारेण प्रवर्त्तितव्यं 'महाजनो येन गतः स पन्थाः' इत्यभियुक्तोक्तेः

(२९) साक्षात्कार्यं तत्त्वं=आत्मादि तत्त्वं प्रति स्वसंवेदनकक्षीकर्त्तव्यं — मानसप्रत्यक्षीकार्यम्
(३०) चिद्रूपाऽऽनन्दमेदुरै भाव्यम्=चिदेव रूपं यस्य तेन चिद्रूपानन्देन दृढपुष्टैरात्मभिर्भाव्यं—भावना विषयीकर्त्तव्यम् ,

अथवा चिद्रूपानन्दविषयकपुष्टानुभूतिपरै भाव्यम् , अयं प्रकारो ज्ञानवतामनुभववेद्यो हितकारी ॥४१–४२–४३–४४॥४५॥

इत्याचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधराचार्यभद्रङ्करसूरिणा कृताया-मध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायामनुभवस्वरूपो विंशतितमोऽधिकारः समाप्तः ॥१३३॥



## —अथैकविंशतितमोऽधिकारः

सज्जनस्तुतिनामकः—

—सन्तः सन्तु मयि प्रसन्नमनसः—

'येषां कैरवकुन्दवृन्दशशभृत्—कर्पूरशुभ्रा गुणाः,
मालिन्यं व्यपनीय चेतसि नृणां वैशद्यमातन्वते ।
सन्तः सन्तु मयि प्रसन्नमनसस्ते केऽपि गौणीकृत-
स्वार्था मुख्यपरोपकारविधयाऽत्युच्छृङ्खलैः किं खलैः ॥१॥

टी० येषां—सतां 'कैरवकुन्दवृन्दशशभृत् कर्पूरशुभ्रा गुणाः'=श्वेतकमलवत्, कुन्दवृन्दवत्, चन्द्रवत्, घनसारवद् धवला—निर्मला गुणाः, 'व्यपनीय मालिन्यं नृणां चेतसि वैशद्यमातन्वते'=मनोगतमलिनतां दूरीकृत्य नराणां मानसे निर्मलतां कुर्वते 'मुख्यपरोपकारविधया गौणीकृतस्वार्थाः'=मुख्यतया परार्थकरणस्य विधया प्रकारेण, परित्यक्तस्वार्थाः, 'केऽपि ते'=ये केऽपि सन्तः सन्तो मयि प्रसन्नमनसः सन्तु—भवन्तु, 'किमत्युच्छृङ्खलैः खलैः':=अत्यन्तस्वच्छन्दवृत्तिभिर्दुर्जनैरप्रसन्नैः किम्? अतिकपटकलाकुशलदुर्जनानां नो न भयं किञ्चित् ॥१॥

—सज्जनाः कृपातः सुकविकृतग्रन्थार्थान् प्रथयन्ति—

'ग्रन्थार्थान् प्रगुणीकरोति सुकविः, यत्नेन तेषां प्रथा-
मातन्वन्ति कृपाकटाक्षलहरीलावण्यतः सज्जनाः ।
माकन्दद्रुममंजरीं वितनुते, चित्रा मधुश्रीस्तथा ।
सौभाग्यं प्रथयन्ति पञ्चमचमत्कारेण पुंस्कोकिलाः ॥२॥

टी० 'सुकविः'=काव्यकरणदक्षोऽपि मद्गुणाऽन्वितः, 'यत्नेन ग्रन्थार्थान प्रगुणीकरोति'=काव्य-मध्ये ग्रन्थविषयकार्थान् यत्नपूर्वकं सञ्चिनोति—समुदितान करोति, तदनन्तरं 'सज्जनाः कृपाकटाक्षलहरी-लावण्यतस्तेषां प्रथामातन्वन्ति'=सौजन्यविशिष्टाः शिष्टाः पुरुषाः कृपाकटाक्षरूपलहरीजातवात्सल्यरूप-लावण्यास्तेषां—ग्रन्थार्थानां प्रथां—प्रसिद्धिं कुर्वन्ति

'चित्रा मधुश्रीः माकन्दद्रुममञ्जरीं वितनुते=अद्भुता वसन्ततु सुषमा सहकारतरुवरे मञ्जरीं करोति—उत्पादयति, ततः 'पुंस्कोकिलाः पञ्चमचमत्कारेण सौभाग्यं प्रथयन्तिः=पुंस्त्वविशिष्टाः कोकिलाः, पञ्चमस्वरस्य चमत्कारेण-तन्मञ्जरीहेतुकपञ्चमस्वरनिष्ठमाधुर्यातिशयेन सहकारस्य सौभाग्यं—सुभगताया महिमानं विस्तारयन्ति ॥२॥

–सहृदयानां सतां कृपा सन्निहिता कार्या यतो दुर्जनो गुणनाशको न भवेत्–

'दोषोल्लेखविषः खलाननबिलादुत्थाय कोपाज्ज्वलन्,
जिह्वाऽहिर्ननु कं गुणं न गुणिनां बालं क्षयं प्रापयेत्।
न स्याच्चेत्प्रबल प्रभावभवनं दिव्यौषधिः सन्निधौ ।
शास्त्रार्थोपनिषद्विदां शुभहृदां, कारुण्यपुण्यप्रथा ॥३॥

टी० दोपोल्लेखविपः कोपाज्ज्वलन्'=दोपाणां प्रकाशनरूपविपसम्पन्नः, कोपरूपज्वलनेन ज्वलन्, 'खलाननविलादुत्थाय'=दुर्जनमुखविवरान्निर्गत्य, 'जिह्वाऽहि र्ननु गुणिनां कं गुणं बालं न क्षयं प्रापयेत्'=निश्चयतो रसनारूपः सर्पः, गुणवतां कं बालरूपं गुण (नवीनं गुणवा) न क्षयं–विनाशं प्रापयेत्–नयेत् अर्थात् गुणिनिष्ठगुणरूपबालं दोपप्रकाशनद्वारा कोपदग्धः सन् दुर्जनमुखबिलवासी रसनानिष्ठदुर्वचन-नामक सर्पः, क्षयं प्रापयत्येव परन्तु कदा न पापक्षयं ? प्रश्नमेनमुत्तरयत्युत्तरार्द्धे

'शुभहृदां शास्त्रार्थोपनिषद्विदां कारुण्य–पुण्यप्रथा'=परोपकरणकरणप्रवणहृदयवतां सिद्धान्तीयार्थ रहस्यवेदिना कारुण्येन पवित्रप्रथारूपा, 'प्रबलप्रभावभवनं दिव्योपधिः सन्निधौ चेन्नस्यात' बलवत्प्रभावस्य भवनरूपा दिव्या–देववच्चमत्कारिणी, औषधिः समीपे यदि न स्याद्–भवेत्तदोपयुक्तोक्तिः सफला भवेदन्यथा नेति ॥३॥

**–दृष्टा व्यवस्थाः सताम्–**

उत्तानार्थगिरां स्वतोऽप्यवगमात्, निःसारतां मेनिरे,
गम्भीरार्थसमर्थने बत खलाः, काठिन्यदोषं ददुः ।
तत्को नाम गुणोऽस्तु कश्च सुकविः, किं काव्यमित्यादिकां,
स्थित्युच्छेदमतिं हरन्ति नियतां, दृष्टा व्यवस्थाः सताम् ॥४॥

टी० खलाः–दुर्जना, उत्तानार्थगिरां=सरलार्थानां वाणीनां 'स्वतोऽप्यवगमात्'=निरपेक्षतया स्वस्यापि ज्ञप्तिसम्भवात् 'निःसारतां मेनिरे' काव्यगतवचसां सारशून्यतां मन्यन्ते स्म,

'गम्भीरार्थसमर्थने' काव्यगतवचसां गूढगम्भीरार्थसमर्थने सति 'बत खलाः काठिन्यदोषं ददुः' खलु दुर्जनाः 'इदं काव्यं क्लिष्टं' इति काव्यवचनगतकाठिन्यात्मकं दोषं प्रकटयन्ति स्म, तत्–तस्मात्कारणात् 'को नाम गुणोऽस्तु ?' अर्थाज्जगति काव्यजगति गुणाभावः सर्वत्र ?, 'कश्च सुकविः' ? अर्थाज्जगति सुकवीनामसम्भवः ?, 'किंकाव्यम्' ? कविकर्माभावः सूच्यते ? इत्यादिकां=एवं भूतां कविनामकजगतः स्थितेः–अस्तित्वस्योच्छेदरूपप्रलयविपर्यिणीं मतिं नियतां हरन्ति सतां व्यवस्था दृष्टाः' अर्थाद् यदा सतां शुद्धसौजन्यभृताः काव्यगुणसुकवित्वादिव्याख्याप्रभृतिका व्यवस्था वयं पश्यामस्तदाऽमङ्गलमतिस्तत्क्षणादेव विनश्यतीति ॥४॥ ॥५५७॥

–आध्यात्मिकीं कथां श्रुत्वा सन्तः सुखं गाहन्ते–

'अध्यात्माऽमृतवर्षिणीमपि कथा-मापीय सन्तः सुखम्,
गाहन्ते विषमुद्गिरन्ति तु खला, वैषम्यमेतत्कुतः ।
नेदं चाद्भुतमिन्दुदीधितिपिबाः प्रीताश्चकोरा भृशम्,
किं न स्युर्बत चक्रवाकतरुणाः, त्वत्यन्तखेदातुराः ॥५॥

टी० अध्यात्मनामकदिव्यामृतवर्षिणीमपि 'कथामापीय' कल्याणीरूपां कथां श्रुत्वा 'सन्तः सुखं गाहन्ते'=अमन्दानन्दमेदुराः सन्तो भवन्ति, परन्तु खलाः–दुर्जना दोषोल्लेखितकटुतर-सरस्वतीप्रहाररूपं विषमुद्गिरन्ति–वमन्ति पुनः पुनः, 'एतद्वैषम्यं कुतः ?' कस्मात्कारणादेषा विषमता–सज्जनदुर्जनमध्ये भेदरेखा समुत्पन्ना ? तत्र प्रत्युत्तरमिदम्='नेदं चाऽद्भुतम्' इदं चाश्चर्यजनकं न यतः इन्दुदीधितिपिबाः, भृशं प्रीताश्चकोराः=चन्द्रकिरणामृतपायिनोऽत्यन्तमानन्दप्रीतिप्रमोदप्रमेदुराश्चकोर-नामकपक्षिणो भवन्ति, बतेति खेदे, अमृतकिरणोदगेऽपि तरुणाश्चक्रवाकनामकपक्षिणस्तु किमत्यन्त शोकातुराः न स्युः ?, अर्थात् प्राचुर्येण खेददुःखिनो भवेयुरेवेति ॥५॥

–न प्रमदावहा तनुधियां गूढा कवीनां कृतिः–

'किञ्चित्साम्यमवेक्ष्य ये विदधते, काचेन्द्रनीलाऽभिदाम्,
तेषां न प्रमदावहा तनुधियां गूढा कवीनां कृतिः ।
ये जानन्ति विशेषमप्यविषमे, रेखोपरेखांशतः,
वस्तुन्यस्तु सतामितः कृतधिया, तेषां महानुत्सवः ॥६॥

टी० ये किञ्चिचाकचिक्यरूपं साम्यं-समानधर्ममवेक्ष्य-ज्ञात्वा 'काचेन्द्रनीलाऽभिदां विदधते'=काचस्य च नीलमणेश्चाभेदं कुर्वते-मन्यन्ते अर्थादन्यग्रन्थैः सहैतस्याधिकृतस्य ग्रन्थस्य वर्णादिरचनाऽपेक्षया किञ्चित्साम्यमवलोक्य ये सर्वग्रन्थं समानं मन्यन्ते, 'तेषां तनुधियां'=सर्वग्रन्थसमानवादिनां स्वल्पबुद्धीनां जीवानां, 'न प्रमदावहा गूढा कवीनां कृतिः'=विशिष्टकाव्यकर्तॄणां गूढार्थ-मर्मार्थतो महती कृतिः-रचना न प्रमोदकारिणी भवति ।

'ये विशेषमविषमेऽपि जानन्ति रेखोपरेखांशतो वस्तुनि'=रचनाविशिष्टे चित्रादिवस्तुनि, विषमतारहितेऽपि, तत्स्थसूक्ष्माऽतिसूक्ष्मविषयाणां विशेषं, चित्रमध्ये सूक्ष्माऽतिसूक्ष्मरेखोपरेखांशग्रहणसमर्थदृष्टिवद् गृह्णन्ति 'तेषां कृतधियां सतां गूढा कवीनां कृतिरस्तु महानुत्सवः' तेषां संस्कृत-निपुणप्रतिभावतां विशेषज्ञानिनां सतामेवैषा गूढा कविकृतिः महानानन्दरूप 'उत्सवोऽस्तु इति ॥६॥

—एषा कविकृतिर्मोहच्छन्नदृशां तनुधियां न चेतश्चमत्कारिणी—

'पूर्णाऽध्यात्मपदार्थसार्थघटना, चेतश्चमत्कारिणी,
मोहच्छन्नदृशां भवेत्तनुधियां, नो पण्डितानामिव ।
काकुव्याकुलकामगर्वगहन—प्रोद्दामवाक्चातुरी,
कामिन्याः प्रसभं प्रमोदयति न, ग्राम्यान् विदग्धानिव ॥७॥

टी० 'पूर्णाऽध्यात्मपदार्थसार्थघटना'=निश्चयव्यवहारनयमापेक्षद्रव्यभावोभयज्ञानक्रियोभयरूपसर्वांशतः पूर्णाऽध्यात्मपदार्थविषयकार्थविशिष्टकविकृतिरूपा घटना, 'पण्डितानामिव मोहच्छन्नदृशां तनुधियां न चेतश्चमत्कारिणी भवेत्'=तत्त्वानुगामिबुद्धिशालिनां यथा चेतश्चमत्कारिणी भवति तथा मोहाच्छादितदृष्टीनां स्वल्पमतीनां चेतश्चमत्कारिणी न भवेत्,

यथा 'कामिन्याःकाकुव्याकुलकामगर्वगहनप्रोद्दामवाक्चातुरी'=कामशास्त्रप्रसिद्धध्वनि-विकार-विशेषरूपव्याकुलाऽत एव कामसम्बन्धिमदमत्ताऽत एव निरङ्कुशा वाचां चातुरी, यथा विदग्धान्-कामादिशास्त्रविचक्षणान् प्रमोदयति—आनन्दयति तथा ग्राम्यान्-कामशास्त्रानभिज्ञान् ग्रामवास्तव्यान् प्रसभं—बलादपि न प्रमोदयतीति ॥७॥

-सकलगुणनिधीन् सज्जनान् नमामः-

स्नात्वा सिद्धान्तकुण्डे विधुकरविशदाध्यात्मपानीयपूरे
तापं संसारदुःखं कलिकलुषमलं लोभतृष्णां च हित्वा ॥
जाता ये शुद्धरूपा शमदमशुचिता-चन्दनाऽऽलिप्तगात्राः
शीलाऽलङ्कारसाराः सकलगुणनिधीन्, सज्जनांस्तान्नमामः ॥८॥

टी० ये 'विधुकरविशदाऽध्यात्मपानीयपूरे सिद्धान्तकुण्डे स्नात्वा'=चन्द्रकिरणनिर्मलोऽध्यात्म नामकजलसमूहो यत्र तादृशे जिनागमनामके कुण्डे स्नानं कृत्वा-सम्यगधीत्य-सम्यग्ज्ञानी भूत्वा, 'तापं संसारदुःखं कलिकलुषमलं लोभतृष्णां च हित्वा' संसारस्य दुःखं तापकत्वात्तापं संसारदुःखरूपं तापं कलिकलुषरूपमलं, लोभरूपतृष्णां च हित्वा-त्यक्त्वा, ये शुद्धं रूपं येषां ते-शुद्धस्वरूपा जाताः, ततः 'शमदमशुचिताऽऽलिप्तगात्राः'=शान्ततादान्ततापवित्रतारूपचन्दनेनाऽऽसमन्ताल्लिप्तं गात्रं-भावशरीरं येषां ते शमदमशुचिताचन्दनालिप्तगात्राः, ततः शीलाऽलङ्कारसाराः-शीलरूपपरमभूषणप्रधाताः जाताः, तान् सकलगुणनिधीन् सर्वगुणविशेषतानिधानान् सज्जनशिरोमणीन् नमामः-नमस्कारं कुर्महे वयमिति ॥८॥

-काव्यमेघवर्षणतः सुहृदां मनःसरः प्रेमपूरैः प्लाव्यते-

॥५६१॥

'पाथोदः पद्यबन्धै विंपुलरसभरं वर्षति ग्रन्थकर्त्ता,
प्रेम्णां पूरैस्तु चेतः सर इह सुहृदां प्लाव्यते वेगवद्भिः
त्रुट्यन्ति स्वान्तबन्धाः पुनरसमगुणाद्वेषिणां दुर्जनानाम् ।
चित्रं भावज्ञनेत्रात् प्रणयरसवशात् निःसरत्यश्रुनीरम् ॥१॥

टी० 'ग्रन्थकर्त्ता पाथोदः पद्यबन्धै विंपुलरसभरं वर्षति'=ग्रन्थकर्त्तैव सुकविमेघः पद्यबन्धैः-श्लोकात्मकरचनाविशेषैः, विपुलरसानां जलानामिव भरं-समूहं वर्षति वृष्टिं करोति यदेह सुहृदां=सम्यक्चेतसां सतां मनःसरस्तु वेगवद्भिः-वेगपूर्वक, प्रेम्णां पूरैःवात्सल्यजलपूरैः प्लाव्यते-उच्छलत् क्रियते, तदैवेह चित्रमाश्चर्यं यद्भवति तन्निशम्यतां, 'पुनरसमगुणद्वेपिणां दुर्जनानां स्वान्तबन्धाम् त्रुट्यन्ति'=निरुपमगुणद्विषतां दुष्टजनानां हृदयस्य बन्धनानि भङ्गवन्ति भवन्ति परन्तु 'प्रणयरसवशाद् भावज्ञनेत्रादश्रुनीरं निःसरति'=काव्यस्योपरि विशिष्टप्रेमरसाधीनत्वेन काव्यान्तर्गतभावस्य ज्ञातवतां नयनत आनन्दाश्रुनीरं निःसरतीति चित्रमिदं कुत्र बन्धास्त्रुटिताः कुतो नीरंनिःसृतमिति ॥१॥

-सत्कविलब्धयशःसञ्चयः सहृदयै वंर्ण्यते—

'उद्दामग्रन्थभावप्रथनभवयशःसञ्चयःसत्कवीनाम्
क्षीराब्धिर्मथ्यते यः, सहृदयविबुधैः मेरुणा वर्णनेन ।

एतड्डिण्डीरपिण्डो भवति विधुरुचेः, मण्डलं विप्रुषस्ताः,
तारा: कैलासशैलादय इह दधते, वीचिविक्षोभलीलाम् ॥१०॥

टी० यः 'उद्दामग्रन्थभावप्रथनभवयशःसञ्चयः सत्कवीनां क्षीराब्धिर्मथ्यते सहृदयविबुधैर्मेरुणा वर्णनेन'=ग्रन्थकर्तॄणां सत्कवीनां गूढार्थकग्रन्थभावप्रसारणजन्ययशःसञ्चयरूपक्षीरसागरः सज्जनजनरूपनिर्जरैः प्रशंसारूपमेरुदण्डेन, मथ्यते—मन्थनक्रियाविषयीक्रियते, 'एतड्डिण्डीरपिण्डो भवति विधुरुचे मण्डलं विप्रुषस्ताराः'=तस्मात् क्षीराब्धिमथनात् डिण्डीरपिण्डः—फेनसमुदायः, उच्छलन् व्योमनि गत्वा चन्द्रज्योत्स्नामण्डलं भवति-उत्पद्यते, ताः क्षिप्ता उत्क्षिप्ताः सत्यो विप्रुषः—जलबिन्दवः व्योम्नि तारा भवन्ति, 'कैलासशैलादय इह दधते वीचिविक्षोभलीलां' कैलासः—स्फटिकाचलशैल आदि येषां तेऽथवा कैलासशैलप्रभृतयः पर्वता मंथनकाले (इह) समुद्रतरङ्गविक्षोभानुकारिणो भवन्तीति ॥१०॥

—विशिष्टामृतं सर्वपेयमिति ज्ञात्वाऽतितरां स्मितेन मोदते सज्जनः—

'काव्यं दृष्ट्वा कवीनां हृतममृतमिति, स्वःसदापानशङ्की,
खेदं धत्ते तु मूर्ध्ना मृदुतरहृदयः, सज्जनोऽव्याधुतेन ।

ज्ञात्वा सर्वोपभोग्यं प्रसृमरमथ तत्-कीर्तिपीयूषपूरम्,
नित्यं रक्षापिधानानियतमनितरां मोदते च स्मितेन ॥११॥

टी० 'काव्यं दृष्ट्वा कवीनां हृतममृतमिति स्वःसदापानशङ्की'=यदा सज्जनः कवीनां काव्यं पश्यति तदेवं प्रतिभासते यदहो कविभिस्तु स्वःसदां देवानाममृतमपहृतं ! अथातः परं सुधाभुजः किं पास्यन्ति ? तादृशापानविषयकशङ्काकारी सज्जनो भवति तदानीं 'खेदं धत्ते तु मूर्ध्ना मृदुतरहृदयः सज्जनोऽव्याधुतेन,=कोमलतरहृदयः सज्जनः स्तब्धमस्तकः सन् ग्लानिं दधाति, पश्चात्

ज्ञात्वा सर्वोपभोग्यं प्रसृमरमथ तत्कीर्तिपीयूषपूरं' अथ सज्जनो यदा जानाति यत् काव्यकीर्तिरूप-सुधाया वहमानपूरमात्रं न कविमात्रोपभोग्यमपि तु देवादीनां सर्वेषामुपभोग्यमस्ति विशालविकासि-प्रकृतिकमस्ति 'नित्यं रक्षापिधानाऽनियतं'=अर्थात् तत्कीर्तिपीयूषपूरोपरि न कस्यचिन्नियतस्वामित्वमस्ति, रक्षायै पिधानं नियतं नास्ति, एतदमृतं सर्वथा सर्वव्यापि बन्धननिर्मुक्तमत एव 'अतितरां मोदते च स्मितेन'=तदा स सज्जनः स्मितेन हसदास्येनाऽत्यन्तमानन्दितो भवतीति ॥११॥

—निपुणनयेन कवीन्द्रकृतश्लोकाः सत्परीक्षिता दीप्यन्ते—

'निष्पाद्य श्लोककुम्भं निपुणनयमृदा, कुम्भकाराः कवीन्द्राः ।
दार्ढ्यं चारोप्य तस्मिन् किमपि परिचयात्, सत्परीक्षाऽर्कभासाम् ॥

पक्वं कुर्वन्ति बाढं गुणाहरणमति-प्रज्वलद्दोषदृष्टि-
ज्वालामालाकराले खलजनवचन-ज्वालजिह्वे निवेश्य ॥१२॥

टी० 'कवीन्द्राः कुम्भकारा निपुणनयमृदा श्लोककुम्भ निष्पाद्य'=कवीन्द्ररूपकुम्भकारा नैपुण्यपुण्यनयरूपमृत्तिकया, श्लोकरूपकुम्भं निष्पन्नं कृत्वा, 'मत्परीक्षाऽर्कभामां परिचयात्तस्मिन् किमपि दार्ढ्य चारोप्य'=सतां गुणदोषविवेकपरीक्षारूपसूर्यतेजसां सुष्ठुसम्बन्धात् तस्मिन् श्लोककुम्भे सूर्यतेजःपरिचयरूपं किमपि– अपूर्वं दृढत्वं रचयित्वा, गुणहरणमतिप्रज्वलद्दोषदृष्टिज्वालामालाभिः कराले=गुणापहार (स्थगन) प्रकृतिकमतिद्वारा, प्रकर्षेण ज्वलद्दोषग्राहिदृष्टिरूपज्वालामालाभिः कराले-भयंकरे खलजनवचनज्वालजिह्वे पाकस्थानेऽग्नौ निवेश्य श्लोककुम्भं पक्वं कुर्वन्ति, कवीन्द्रकुम्भकाराः, एवं दुर्जना अपि किं नोपकुर्वन्ति ? व्यङ्ग्योक्तिरिति इति ॥१२॥

–इक्षुद्राक्षारसौघरूपं कविवचनं मादक पिबन्ति सन्तः–

इक्षुद्राक्षारसौघः कविजनवचनं, दुर्जनास्याग्नियन्त्रात् ।
नानार्थद्रव्ययोगात् समुपचितगुणो मद्यतां याति मद्यः ।

सन्तः पीत्वा यदुच्चैर्दधति हृदि मुदं, घूर्णयन्त्यक्षियुग्मम् ,
स्वैरं हर्षप्रकर्षादपि च विदधते, नृत्यगानप्रबन्धान् ॥१३॥

(टी०) 'इक्षुद्राक्षारसौघः कविजनवचनं दुर्जनास्याग्नियन्त्रात्'=कविजनवचनरूप इक्षुद्राक्षारससमुदायः, दुर्जनमुखरूपाग्नियन्त्रत उष्णतरो भूत्वा, 'नानार्थद्रव्ययोगात् समुपचितगुणो मद्यतां याति सद्यः' भिन्नभिन्नार्थकद्रव्याणां योगतः संवृद्धगुणो मद्यतां याति अर्थादिक्षुद्राक्षारसौघो विभिक्रमतो मद्यो भवति, 'सन्तःपीत्वा यदुच्चैर्दधति हृदि मुदं घूर्णयन्त्यक्षियुग्मम्'=यद्विशिष्टकोटिकं मद्यं पीत्वा । हृदयमध्ये मुदमानन्दं सन्तो दधति–धारयन्ति, 'स्वैरं हर्षप्रकर्षादपि च विदधते नृत्यगानप्रबन्धान्'=च–किञ्च, स्वेच्छापूर्वकमुत्कृष्टहर्षवशात् , नृत्यप्रबन्धान् गानप्रबन्धांश्च कुर्वते ॥१३॥

'नव्योऽस्माकं प्रबन्धोऽप्यनणुगुणभृतां सतां प्रभावाद् विख्यातःस्यात्–

नव्योऽस्माकं प्रबन्धोऽप्यनणुगुणभृतां सज्जनानां प्रभावात् ।
विख्यातःस्याद्धि सन्तो हितकरणविधौ प्रार्थनीया न किं नः ।
निष्णाता वा स्वतस्ते रविरुचय इवाम्भोरुहाणां गुणानां
उल्लासेऽपेक्षणीया न खलु पररुचिः, क्वापि-तेषां स्वभावः ॥१४॥

॥५६६॥

(टी०) अस्माकमेष प्रबन्धो नव्यःसन्नपि 'अनणुगुणभृतां'=निःसङ्ख्यपरमगुणशालिनां 'सज्जननानां प्रभावात्' सतां शक्तिमहिम्नां 'विख्यातःस्यात्'=प्रसिद्धो भवेत् 'हि सन्तः'=यतःकारणात् सज्जनाः, 'हितकरणविधौ न नः प्रार्थनीयाः किम्'=परोपकरणकरणेऽस्माकं प्रार्थनाविषयाः किं न ? अर्थादवश्यमेव सन्तः प्रार्थनीयाः वा–अथवा यथा (विना प्रार्थनां) रविरुचयः=सूर्यकिरणा 'अम्भोरुहाणां' कमलानामुल्लासे-विकासने स्वतस्ते निष्णाताः–समर्थाः, तथा ते–सन्तो गुणानां परगुणानां प्रसारणे स्वतः–निसर्गतो निष्णाताः–नैपुण्यशालिनोऽतः, प्रार्थना (दीनताख्या) अनावश्यकी कथं न ? 'अपेक्षणीया न खलु पररुचिः क्वाऽपि तेषां स्वभावः,=परहितकरणयोग्ये क्वापि–कस्मिंश्चित् पुरुषे परेषां ? रुचिः खलु–निश्चयतोऽपेक्षाविषयीभूता नेति तेषां–सज्जनानां स्वभावः–प्रकृतिः, 'प्रकृतिविकृतिर्जायते नोत्तमानामित्यप्यत्र स्मरणीयमिति ॥१४॥

भ्राजन्ते ते मुनीन्द्रा नयविजयबुधाः सज्जनव्रातधुर्याः–

'यत्कीर्तिस्फूर्तिगानावहितसुरवधू-वृन्दकोलाहलेन,
प्रक्षुब्धस्वर्गसिन्धोः पतितजलभरैः क्षालितः शैत्यमेति ।
अश्रान्तभ्रान्तकान्तग्रहगणकिरणै-स्तापवान् स्वर्णशैलो,
भ्राजन्ते ते मुनीन्द्रा नयविजयबुधाः सज्जनव्रातधुर्याः ॥१५॥

(टी०) 'अश्रान्तभ्रान्तकान्तग्रहगणकिरणैस्तापवान् स्वर्णशैलः'=अविरतं भ्रमणं कृतवन्तः कान्ताः-तेजसा मनोहरा ग्रहाणां गणास्तेषां किरणैस्तप्तः (तापितः) स्वर्णशैलो-मेरुः 'यत्कीर्तिस्फूर्तिगानावहितसुरवधुवृन्दकोलाहलेन प्रक्षुब्धस्वर्गसिन्धोः पतितजलभरैः, क्षालितशैत्यमेति'=येषां यशोमाहात्म्यगाने सावधानत्रिदशवधूसमुदायस्य कलकलेन प्रकृष्टक्षोभवत् स्वर्गङ्गातः पतितैर्जलपूरैः क्षालितः=प्रक्षालनविषयीभूतःसन् शीततां प्राप्नोति मज्जनगणधुरन्धरास्ते मुनीन्द्रा नयविजयनामकपण्डिता भ्राजन्ते-शोभन्ते॥१५॥

प्रशस्ति :

'चक्रे प्रकरणमेत-त्पदसेवापरो यशोविजयः ।
अध्यात्मधृतरुचीना—मिदमानन्दावहं भवतु ॥१६॥

टी० एतत्पद सेवापरः'=मज्जनधुर्यमुनीन्द्रगुरुवर्यनयविजयपण्डितचरणसेवापरायणः, 'यशोविजयः' न्यायाचार्यन्यायविशारदश्रुतकेवलिकल्पमहोपाध्याय श्रीमद् यशोविजयमहाराजः, इदं प्रकरणं चक्रे' श्री अध्यात्मसारग्रन्थनामकं प्रकरणमेकविंशत्यधिकाराऽलङकृतं कृतवान् 'अध्यात्मधृतरुचीनामानन्दावहं भवतु' अध्यात्मी—आत्महितकारिज्ञानक्रियात्मकधर्मेरुचिर्येषां तेषा धृतरुचीनां प्रमोदप्रकर्षकरमस्तु ॥१६॥

इत्याचार्यश्रीमद्विजयानन्दकमललब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयभुवनतिलकसूरीश्वरपट्टधर-भद्रङ्करसूरिणा कृतायामध्यात्मसारग्रन्थे भुवनतिलकाख्यायां टीकायां मज्जनस्तुतिनामक-

**एकविंशतितमोऽधिकारः समाप्तः ॥९४१॥**

टीकाकारस्यप्रशस्तिः, किञ्चिन्निवेदनरूपा अध्यात्मसारग्रन्थेऽस्या भुवनतिलकाख्याया संक्षिप्त-टीकायाः भद्रङ्करसूरिकृताया आरम्भ कर्णाटकीयबेन्लूरनगरे कालवचनव्योमहस्तप्रमिते (२०३३) वैक्रमे वर्षे पोषशुक्लपक्षे तृतीयस्यां तिथौ जगवल्लभपार्श्वनाथमण्डिते कोल्हापुरमहानगरनिकटस्थे महाराष्ट्रदेशदिव्यभूषणे कुम्भोजगिरिमहातीर्थे समितिकालाकाशकरमिते (२०३५) वैक्रमे वर्षे समाप्तिः संज्जाता, विजयतां यावच्चन्द्रदिवाकरौ.



# ❀ शुद्धि दर्शनम् ❀

| पेज. नं | लाईन | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५ | २ | पार्व | पार्श्व |
| ७० | ८ | अध्याम | अध्यात्म |
| ,, | १३ | कालिका | कलिका |
| ७४ | ३ | शास्त्र | शास्त्र |
| ,, | ४ | अन्वा | अध्वा |
| ,, | ६ | सम्यक्ञो | सम्पन्नो |
| ,, | ७ | यल्लवः | पल्लवः |
| ,, | ८ | पध्यादि | पाध्यादि |
| ,, | ७० | शास्त्रार्थं | शास्त्रार्थं |
| ,, | ७७ | कर्हि | कर्हि |
| २२ | ३ | शास्त्रर्थ | शास्त्रार्थ |
| ,, | ६ | शास्त्रर्थ | ,, |
| १३ | ७ | तृष्णाया | तृष्णाया |
| ,, | ६ | महो | मरो |
| १६ | १२ | पक्रयान्न | पक्वानत |
| १८ | ४ | पुत्रख | पुत्रश्च |
| २२ | १ | मवामिमि | मवामि |

| पेज नं. | लाईन | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | १२ | ऋच्छित | केम्सल |
| २३ | १२ | भिन्दी | भिनन्दी |
| ,, | ११ | भूत | भूतं |
| २४ | ११ | सन्निर्धि | सन्निधि |
| २८ | ४ | र्थ | चतुर्थं |
| ,, | १३ | षणं | भूषणं |
| २६ | ८ | क्रि | क्रि- |
| ३० | १४ | गुरुव | गुरव |
| ३७ | १ | हिस्य | हिश्य |
| ,, | ६ | न्नदी | नंदी |
| ३३ | ७ | अभ्वास | अभ्यास |
| ३७ | ६ | कीदशी | कीदशी |
| ३८ | ६ | दोप | दोष |
| ३६ | ४ | द्रव्य | द्रव्य |
| ४० | १४ | गला | गंला |
| ४१ | १२ | दुखो | दुखो |
| ४३ | ४ | दुपितं | दूषितं |

| | | | |
|---|---|---|---|
| ४४ | २ | वौ | वो |
| ४५ | — | ४५ | ४७ |
| ,, | ४ | थक्ति | युक्ता |
| ,, | ७ | हृढ | हृढं |
| ४६ | — | ४६ | ४५ |
| ,, | ६ | तस्यिन् | तस्मिन् |
| ,, | — | ४७ | ४६ |
| ४८ | १३ | येन | ये न |
| ४९ | ४ | दम्भो | दम्भी |
| ५१ | ७ | स्वल्यो | स्वल्पो |
| ५२ | १ | त्वरूप | स्त्रीत्वरूप |
| ,, | १३ | वेण | पेण |
| ५५ | ६ | पश्यतर | पश्यत २ |
| ६० | ८ | ऽवं | न्त्वं |
| ,, | १ | कुष | कुय |
| ६३ | १० | सिति | सति |
| ,, | १३ | वषम्य | वैषम्य |
| ७१ | १२ | सङ्गह | सङ्ग्रह |
| ७७ | ४ | वाह्यतो | बाह्यतो |
| ७८ | ५ | सक्कमः | सङ्क्रमः |
| ,, | ६ | मव | भव |
| ,, | ११ | गुणा मावस्य | गुणाऽभावस्य |
| ७९ | ५ | गुण्य | |
| ,, | १ | प्रवत्ति | प्रवृत्ति |
| ८० | १४ | मवे | भवे |
| ८५ | ७ | वर्ती | मर्ती |
| ८५ | १० | गोलक | गोल |
| ८८ | ८ | वैराभ्य | वैराग्यं |
| ,, | १० | एष | एषः |
| ९३ | १० | द्रुष्ट | दुष्ट |
| ,, | १२ | प्रतिकारार्थे | प्रतिकारार्थं |
| ९६ | २ | २ कताः | रक्ता |
| ,, | ७ | तार्थ | तार्थं |
| ,, | ८ | पठिन्त | पठन्ति |
| ९७ | ४ | पर्यपरि | पर्युपरि |
| ,, | ६ | चरमा | यस्मा |

॥५७१॥

| | | | |
|---|---|---|---|
| १०१ | ५ | स्वर्मो | स्वमो |
| १०३ | ८ | शास्त्र | शास्त्र |
| ,, | १२ | ,, | ,, |
| १०४ | १ | सारं | सारं |
| १०६ | ६ | सम्पूण | सम्पूर्ण |
| १०७ | १ | त्वस्ति | त्वमस्ति |
| ११४ | ११ | सम्मख | सम्मुख |
| ११४ | ८ | दृस्ति | दृष्टि |
| ११६ | ४ | पर्यायान् | पर्यायान |
| ,, | ५ | पदार्था | पदार्था |
| १२५ | १७ | सौन्द्र्यं | सौन्दर्यं |
| ,, | १३ | सौर्न्य | ,, |
| १२६ | ७ | मृश | भृशं |
| ,, | ६ | लंलनना | लॅलना |
| १२७ | १० | यत्किचर | यत्किचरं |
| १२८ | ६ | मोर्द | मोद |
| ,, | ८ | पान | पान |
| १३३ | ७ | हृदर्य | हृदय |
| १३७ | १ | श्चितं | श्चित्तं |
| ,, | ६ | मगाहते | मवगाहते |
| ,, | १२ | विषयैः | विषयैः |
| १४० | १० | नेव | नैव |
| १४१ | ६ | दुःस | दुःख |
| १४२ | ४ | वद्द | बद् |
| १४२ | ५ | चक्ष | चक्षु |
| ,, | ६ | स्वकीय | स्वकीय |
| ,, | १२ | ऽधिका | ऽधिकां |
| १४२ | ७ | कलप | कल्प |
| १४४ | ७ | रूप | रूप |
| ,, | ६ | स्रीषु | स्त्रीषु |
| ,, | १३ | रूप | रूप |
| १४५ | ७ | कथन | कथनं |
| ,, | ४ | स्वतन्धय | स्तनन्धयं |
| ,, | ८ | ञ्चति | मुञ्चति |
| १४७ | १४ | पुरुपे | पुरुपे |
| १४८ | १० | पुद्धिः | बुद्धि |

॥५७२॥

| | | | |
|---|---|---|---|
| १४६ | ५ | कृनत' | कृतः |
| १५१ | १ | अर्थः | अर्थं |
| १५२ | ५ | निष्ठा | निष्ठान् |
| १५३ | १ | तदा | यदा |
| १५८ | ११ | एवतम | एव.हम |
| ,, | १० | कुवना | कुर्वता |
| १६१ | ६ | योगिर्ना | योगिना |
| १६४ | ६ | कलुपं | कलुप |
| १६५ | १२ | विप | विप |
| १६६ | ६ | कर्मं | कम |
| १६७ | ८ | ष्ठाननमुच्यते | ष्ठानमुच्यते |
| ,, | ६ | ये | केन्मल |
| ,, | , | स्कामता | स्यैकामता |
| १६८ | ६ | सहौव | सहैव |
| ,, | १० | दश्यते | शद्यते |
| १७२ | ४ | क्रिया | सत्क्रिया |
| १७४ | ५ | ड्कुन | डुकुरम् |
| १७७ | ३ | तत्रापि | तत्रापि |

| | | | |
|---|---|---|---|
| ,, | ,, | ष्ठन | ष्ठान |
| ,, | १२ | मोक्षा | मोक्षा |
| १८२ | ६ | मार्यं | माधुर्यं |
| १८४ | ७ | प्रकृते | प्रकृते |
| १८६ | १ | स्त्रोणां | स्त्रीणां |
| १८७ | ७ | स्थिता | स्थिते |
| ,, | ११ | धन | धन |
| १८८ | ८ | व्रन | व्रत |
| १८६ | ६ | वन | वत |
| ,, | ,, | दुम्वतो | दुःखतो |
| १६० | ५ | नेत्रवि | नेत्रनि |
| ,, | १० | शिव | शिव |
| १६१ | ३ | मत्तर | मदश्वर |
| ,, | ५ | हृदय | हृदय |
| १६४ | १२ | तनो | नो |
| ,, | ,, | निश्चय | निश्चयत |
| १६८ | ० | कुसुमस्य | कुसुमस्येव |
| १६८ | ३ | कमं | कमे |

| | | | |
|---|---|---|---|
| १९९ | २ | धर्मं | धर्मः |
| २०० | ३ | स्वोकार | स्वीकार |
| २०१ | १० | विचारणान्त | विचारणातः |
| ” | १३ | सादिभिः | मादिभिः |
| २०४ | ११ | दोनि | दीनि |
| ” | ” | वाक्यम | वाक्यम् |
| ” | १३ | सर्वंक | सर्वंक |
| २०५ | ३ | षदार्थं | पदार्थं |
| ” | १२ | न्यार्थं | न्यथार्थं |
| २०६ | ११ | तृणा | तृणां |
| २०८ | ५ | न जायते | जायते |
| ” | १२ | दुखो | दुःखो |
| २०९ | ११ | भवा | भव |
| ” | १३ | पर्याय | पर्याय |
| २११ | १ | निष्क्रय | निष्क्रिय |
| ” | ६ | विशेषे | विशेषेण |
| ” | १० | ” | ” |
| २१२ | ११ | किमर्थंः | किमर्थं |

| | | | |
|---|---|---|---|
| , | १२ | सम्यद्धा | सम्यद्धा |
| २१४ | ७ | सम्भवः | सम्भवः |
| ” | १० | स्यादी | स्यादि |
| २१६ | ८ | हिंसकः | हिंसकः |
| २१७ | ३ | वर्ती | वर्ती |
| ” | १४ | व्रजा | व्रता |
| २१९ | २ | आत्मा | आत्मा |
| ” | १२ | काल्पनिको | काल्पनिकी |
| २२४ | १० | निह्न | निह्न |
| २२५ | १ | भवेपु | भवेषु |
| ” | २ | अहिंसैव | अहिंसैव |
| २२६ | ६ | तज्जन्य | तज्जन्य |
| २२९ | १ | सम्कक् | सम्यक् |
| २३१ | ९ | द्या | केन्सल |
| २३४ | १ | नयो | नयो |
| ” | १३ | पदाना | पदाना |
| ” | १४ | रुपता | रूपता |
| २३५ | २ | कीर्ति | कीर्तिता |

